श्रीशिवमहापुराणम्
नाग पब्लिशर्स
प्रथम संस्करणम् ई.सं.१९८१

## अथ शिवमहापुराणान्तर्गताविषयानुक्रमणिका ।

| | | |
|---|---|---|
| २२. | पर्जन्यकाले निलयनिर्माणाय सत्या प्ररितस्य शिवस्य मत्स्थाने मेघानां गत्यभाव इत्युक्तिः । सतीच्छया हिमालये शिवयोः क्रीडाया वर्णनम् । | |
| २३. | विषयोपभोगाज्ञातविरागायाः शिवाया लोकशिक्षणार्थं सभेदस्वरूपभक्तिभावकथनं तथा मोक्षाद्यनेकशास्त्रोद्देशकथनं च । | |
| २४. | लीलया पृथिव्यामटतोः सतीशिवयोर्वने विरहिणं रामं प्रणमन्तं शिवमवलोक्य शंकितायाः सत्या रामपरीक्षाया वर्णनम् । | |
| २५. | शिवसती वियोगकारणवर्णनम् । | |
| २६. | रामपरीक्षार्थं सीतारूपेण गतायाः सत्याः राममोहायोगात्पश्चात्तापः विष्णवे शिवस्वाधिकारार्पणम् सत्रे दक्षशिवयोर्विरोधकारणवर्णनं च । | |
| २७. | दक्षप्रजापते रुद्रभागरहितयज्ञे देवादीनामागतिः तत्र रुद्रमदृष्ट्वा दधीचेर्यज्ञवाटान्निर्गमनम्, तत्पक्षपातिब्राह्मणनामपि निर्गमे शिवविधिनो यज्ञप्रवृत्तिरेवेति वर्णनम् । | |
| २८. | गंधमादने सखीजनसहितायाः सत्या रोहिण्या सह चंद्रस्य दक्षयज्ञगमनमवलोक्य स्वगमनेच्छाप्रकटनं बोधनेऽपि साग्रहाये शिवाज्ञाप्रदानम् । | |
| २९. | दक्षयज्ञे गतायाः सत्या दक्षादवमानः, सर्वदेवानां तत्कृततिरस्कारवर्णनं, दक्षाय सत्या शिवमाहात्म्यकथनं च । | |
| ३० | सत्या योगात्स्वेच्छया तत्र देहत्यागे कृते भृगुणा शिवगणेषु पराभूतेष्वपि विघ्नदर्शनाद्देवादीनां साध्वसोत्पत्तिवर्णनम् । | |
| ३१. | दक्षयज्ञे देववाणीद्वारा दक्षकृतौ तिरस्कारदर्शनंभविष्यत्कथनं च । | |
| ३२. | भृगुपराजितस्वगणद्वारा सतीदेहत्यागादिवृत्तश्रवणात्क्रुद्धस्य शिवस्य जटाया वीरभद्रमहाकालीज्वरादीनां प्रादुर्भावः, तेभ्यो दक्षतत्पक्षी- याणां संहाराय शिवाज्ञेति वर्णनम् । | |
| ३३. | शिवाज्ञया दक्षयज्ञसंहारार्थचलितयोः कालीवीरभद्रयोः सेनासमारोहस्य वर्णनम् । | |
| ३४. | कैलासाच्छिवगणः सह दक्षनाशाय निर्गतिवीरभद्रयज्ञवाटस्थानां देवादीनामुत्पातदर्शनाद्भयोत्पत्तिः, देववाण्या शिवनिन्दकस्य दक्षस्य महाभयसूचने विष्णुप्रार्थनेत्युक्तिः । | |
| ३५. | विष्णुं प्रति दक्षस्य तद्विज्ञप्तिः, शिवनिन्दकस्य रक्षणे केषामपि सामर्थ्यं नेति तात्पर्यगर्भितहरेरुक्तिः, एतत्कर्मणा तव वीरभद्रान्मृत्युरस्मदादीनां च मृत्युसमशासनं भविष्यतीति च तदुक्तिः शिवसामर्थ्यमप्यवर्णि तेन । | |
| ३६. | शिवमायामोहितैर्लोकपालवीरभद्रस्य संग्रामः तस्मिंश्च तेषां सर्वेषां पराभवः, ततो विष्णुवीरभद्रयोः संवादोत्तरं संग्रामोन्मुखत्वादिकथनम् । | |
| ३७. | विष्ण्वादिदेवैर्वीरभद्रैादिशिवगणानां दारुणसंग्रामस्य वर्णनं, तया चेदं सर्वं सतीकृतं मत्वा पराभूतानां देवानां स्वस्वस्थानगमनं, जयशालिवीरभद्रकृतदेवर्षिगणानां दन्तत्रोटनश्मश्रुच्छनाद्युपद्रवो यज्ञविध्वंसनं च, ततो दक्षस्य दीक्षितस्यापि वीरभद्रकृतशिर-श्छेदादिवर्णनम् । | |
| ३८. | शिवप्रभावज्ञविष्णोः शिवं विना देवैः सह दक्षस्यगमने कारणकथनप्रसंगेन दधीचर्षिक्षुवथुराज्ञोः स्वस्वश्रैष्ठ्यविषयकविवाद कथनं, क्षुवथोः सकाशाद्दधीचेः पराभवः, मृत्युंजयप्रभावाद्दधीचेरमरत्वप्राप्तिः, तस्मात्परभूतस्य क्षुवथोर्हरेराराधनादिवर्णनम् । | |
| ३९. | दधीचं प्रति द्विजरूपेण क्षुवथुक्षत्रियकार्यार्थं विष्णोर्गमनम् दधीचविष्ण्वोः क्षुवथुनिमित्तको महान्कलहः, दधीचस्य शावाद्विष्णोः पराभवः दधीच सकाशा वैः सह विष्णो, शापप्राप्तिवर्णनम् । | |
| ४०. | दक्षप्रजापतिनिधनजदुःखेन खिन्नस्यब्रह्मण देवै सह बैकुंठगमनं, दक्षसंजीवनयज्ञसंधानाय देवैः सह कैलासे विष्णोर्गमनं कैलासवर्णनं च । | |
| ४१. | सतीविरहिणोऽपि शिवस्य विष्णुकृतस्वापराधख्यापनप्रदर्शिका स्तुतिः । | |
| ४२. | स्तुत्या प्रसन्नस्य शिवस्य यज्ञसाधनोपायकथनम् । | |
| ४३. | वीरभद्रदग्धशिरसः प्रजापतेर्वस्तशिरः संधानाज्जीवनोपायकथनं, यज्ञानुसंधानप्रकारः, सतीखंडश्रवणपठनफलावाप्तिकथनं च । | |
| | **इति द्वितीयाया रुद्रसंहिताया द्वितीयः सतीखंडः** | |
| | **अथ द्वितीयाया रुद्रसंहितायास्तृतीयः पार्वतीखण्डः** | |
| १. | सत्या हिमालयादरे जन्मधारणनिमित्तकथनं, नारदोपदेशतश्च पार्वत्याः पुनः शिवप्राप्तिकथनं हिमगिरेर्द्वैरूप्यनिरूपणं, तेन च पितृकन्य- कायां मेनाया विवाहादिकथनम् । | |
| २. | मेनोत्पत्तिप्रसंगात्तिसृणां मेनकादि पितृकन्यानां सनकादिमुनिभ्यः शापप्राप्तिः, प्रसन्नेभ्यस्तेभ्यश्च पुनः शापनिर्मुक्तिप्रकारस्य वर्णनम् । | |
| ३. | पार्वत्युत्पात्तशिवपाप्तिकथाप्रश्नप्रसंगे हिमवद्गृहे विष्ण्वादीनां गमनं तत्कृतशिवस्तुति वर्णनं च । | |
| ४. | सतीविरहरुद्ररोदनरुश्रवणजातदुःखानादेवानां देव्याः स्वरूपदर्शनं, हिमवन्मेनाप्रार्थनाच्च । त्वद्गृहे मदाबिर्भाव इति तदुक्तिः, देवकार्यसंपादनप्रकारवर्णनं च । | |
| ५. | मेनारुद्रतपोवर्णनम्, मेनायाः शिवाया जन्मकथनम्, मेनायाः शक्तिप्रसादाच्छतपुत्रप्राप्तिरूपवरप्राप्तिः । | |

| | | |
|---|---|---|
| ६. | पार्वत्या मेनायाः जन्मप्रकारकथनम् । | |
| ७. | पार्वत्या जन्मनिमित्तस्य हिमवत्कृतमहोत्सवस्य वर्णनं, नामकरणसंस्कारोत्तरं तस्या बालक्रीडावर्णनं च । | |
| ८. | स्वकन्यायाः प्रारब्धादिकं नारदाच्छ्रुत्वा दिगंबरविरक्तपतिप्राप्तिरूपं स्वकन्यादुर्दैवं च विचिन्त्य दुःखितस्य हिमवतो नारदेन सह संभाषणम् । | |
| ९. | योग्यवरोपलब्ध्यै पित्रोः पावत्त्यै शिवाराधानोपदेशः, शिवस्य स्वप्ने आभिर्भावः, श्रीरुद्रस्य पार्वतीप्राप्त्यै हिमगिरिगमन पार्वत्याश्च तत्सेवायां नियोगादिरवर्णि । | |
| १०. | पार्वतीप्राप्त्यै तपश्चरतो रुद्रस्वभावोत्पन्नधर्मविदोभौमोत्पत्तिः स्त्रीरूपिण्या भूम्या स्वस्तनदानादिना वर्धितस्य तस्य शिवकृपया ग्रहत्त्व प्राप्तिश्च वर्णिता । | |
| ११. | गणैः सह शिवां मनसि निधाय हिमगिरौ रुद्रस्य तपः स्थितिः, तत्र हिमाचलस्य शिवदर्शनसंभाषणादिवर्णनं च । | |
| १२. | एकदा पार्वत्या साकं शिवदर्शनायागतस्य हिमगिरेः कन्यया सह त्वया कदापि नागंतव्यमिति शिवोक्तौ गिरिकृत विनयप्रकाशः । | |
| १३. | सांख्यवेदान्ताभिप्रायेण शिवशक्त्योविवादोत्तर गिरिजायाः स्वसेवायां शिवाज्ञा चिरमेकत्र स्थितयोः शिवशक्त्योर्विकारोत्पादनाय देवै प्रेषितस्य कामस्य शिवकृतदाहवर्णनम् । | |
| १४. | तारकासुरोत्पत्तिप्रसंगाद्वज्रांगोत्पत्तिः पुत्रार्थं तस्य तपश्चरणेन प्रसन्नाद्विधेर्वरप्राप्तिश्च । | |
| १५. | तारकोत्पत्तिसमय प्रसंगादरिष्टस्वरूपविवरम् । तस्य चोग्रतपसा देवादीनां भयप्राप्तिः, ब्रह्मण सकाशात्तारकासुरस्य वरद्वयप्राप्तिः। भयात्सर्वदेवैस्तस्य स्वस्वैश्वर्यप्रदानं च । | |
| १६. | तारकत्रस्तोदेवानां ब्रह्मणे स्वदुःखकथननं, शिव पुत्रं विना तद्धनने सर्वेषामशक्यत्वकथनोत्तरं हैमवत्या शिवस्य विहिरुच्युत्पादनत्यना- दखिलं देवकार्यं संपत्स्यत इत्यादिप्रकारेण देवानां ब्रह्मकृतसांत्वनवर्णनम् । | |
| १७. | शक्रस्य काममोहय तच्छक्तिवर्णनपूर्वकं तस्मै शिवशक्त्योर्विवाहे पुत्रोत्पत्या तारकवधादिस्वकार्यनिरूणं, कामस्य च हरजये प्रतिज्ञाय शिवनिकटगमनम् । | |
| १८. | कामकृतपार्वतीविषयकशिवमोहवर्णनम् । | |
| १९. | क्रुद्धस्य हरस्य तृतीयनेत्रोत्पन्नाग्निना कामदाह वर्णनम् । देवप्रार्थनया पुनः संजीवनोक्तिश्च । | |
| २०. | कामदहनोत्तरं वाडवरूपेण शिवेनेत्रोत्पन्नवह्निज्वालायाः सागरगमनं, ब्रह्मनुज्ञया च सा सागरेण स्वीकृता । | |
| २१. | कामदाहोत्तरमंतर्हिते शिवे हैमवत्याः शिवविरहदुःखवर्णनम्, नारदात्पञ्चाक्षरमंत्रोपदेशप्राप्तेर्वर्णनम् । | |
| २२. | पुनश्च शिवप्राप्तये पित्रोरनुज्ञया पार्वत्या मुनि दुष्करं तपोऽकारि । | |
| २३. | पार्वतीतपोग्निना त्रैलोक्यदाहप्रसंगाद्भीतानां देवानां ब्रह्मलोकगमनं, विष्णुना सार्धं च पार्वतीतपस्थानावलोकनोत्तरं शिवसंनिधिप्राप्ति वर्णनं च । | |
| २४. | ब्रह्मविष्ण्वाद्याग्रहात्पार्वतीपाणिग्रहस्य शिवकृत स्वीकारवर्णनम् । | |
| २५. | शिवस्मरणात्सप्तर्ष्यागमने पार्वतीच्छलाय तेषां नियोगः नारदवाक्यविश्वासोऽनर्थकर इति तैरागत्योक्ताऽपि न चचाल स्वमतात्पार्वतीति । | |
| २६. | पार्वतीनिश्चयपरीक्षार्थं जटिलस्वरूपेणागतस्य शिवस्य शिवायासहसंवादः । | |
| २७. | पार्वत्या निश्चयं दृष्ट्वा पूर्वजन्मन्युनुभूतेऽपि निरिच्छशिवसंबंधात्स्वदेहपातप्रसंगेतत्प्राप्त्यर्थं यातमानां त्वां धिगित्वेवं प्रतारणप्रवृत्तो जटिलः । | |
| २८. | पार्वत्या दृढनिश्चयेन तुष्टः शिवस्तां निजरूपं प्रदर्श्य त्वां स्वीकरिष्ये इत्यूचे । | |
| २९. | मया पूर्वं दक्षेण कन्यादानसमये ग्रहाः सम्यङ्न पूजिता इति हेतोर्वियोगप्रसंगोऽनुभूत तथा इतउत्तरं मा भूदतस्त्वया विधिना हिमालया-<br>मत्प्राप्तिः संपादनीयेत्यादिपार्वत्युक्तिः । | |
| ३०. | शिवांतर्धानंतरं महोत्सवपूर्वकं शिवाय स्वपितृगृहागमनवर्णनम् । | |
| ३१. | शिवयोर्विवाहनिश्चयं श्रुत्वा हिमाचलस्यानेन मोक्षप्राप्त्या पृथिव्या महतीहानिरिति मत्वा तदघटनाय देवानां प्रयत्नवर्णनम् । | |
| ३२. | जटिलरूपशिववाक्याद्भिन्नहृदयाया मेनायाः शिवाय स्वकन्याऽप्रदाने दुराग्रहः शिवाज्ञया च सप्तर्षीणां हिमालयसदनागमनञ्च । | |
| ३३. | पुनश्चारुन्धतीसहितसप्तर्षीणामनेकेतिहासकथनेन हिमवन्मेनयोः सांत्वनम् । | |
| ३४. | शिवयोर्विवाहप्रसंगेन वशिष्ठेनारण्येतिहासकथनम् । | |
| ३५. | एतत्प्रसंगेनैव पद्मापिप्पलादचरितवर्णनम् । | |
| ३६. | वशिष्ठवचनानंतर सर्वेषां शैलानामपि संमत्या शिवाय कालीप्रदाने हिमालयस्य निश्चयवर्णनं सप्तर्षीणां शिवविवाहघटना साधयित्वा स्वलोकगमनवर्णनं च । | |

| अथ द्वितीयाया रुद्रसंहितायाः पञ्चमो युद्धखण्डः | | |
|---|---|---|
| १. | त्रिपुरात्मजतारकविद्युन्मालिकमलाक्षतपः प्रीत ब्रह्मणा वरं याचध्वमित्युक्ते तैः सर्वामरप्रधानत्वमयाचि । नायं वरः समुचितोऽन्यं प्रार्थय- तेति तेनोक्ते हैमवज्राय सराजतानि पुरत्रयाणि नो देहीत्युक्त ब्रह्मणा तन्निर्माणाय विश्वकर्मणे निदेशः । | |
| २. | तारकाद्यर्तितदेवानां तद्वधाय शिवस्तुतिः । | |
| ३. | शिवोपदेशाद्देवानां विष्णुप्रार्थनं तेन यज्ञेभ्यस्तेभ्यो भूतसृष्टिस्ततश्च शिवार्चकत्रिपुरस्यनाशोऽशक्यः । प्रयत्नतस्तेषां शिवपूजाविघ्न सम्पादनविचारः । | |
| ४. | त्रिपुरमोहनार्थं विष्णुना जिनस्योत्पादनन्तद्वारार्हत्या दीक्षाया त्रिपुरस्यर्हद्धर्मानुगीकरणम् । | |
| ५. | जिनधर्मकथनप्रसङ्गेन देवानां ग्राम्यधर्माद्यनियमवर्णनम् । | |
| ६. | विष्णुब्रह्मप्रभृतिसुरैस्त्यक्तशिवधर्मः तारकासुरस्य इति शिवाय सस्तुतिनिवेदनम् । | |
| ७।८. | त्रिपुरघाताय् शिवाज्ञया विश्वकर्मणा सर्वदेवमयरथनिर्माणम् । | |
| ९. | श्रीशिवस्य युद्धयात्रावर्णनम् । | |
| १०. | त्रिपुरदाहवर्णनम् । | |
| ११. | त्रिपुरासुरे दग्धे शिवस्य रौद्रीं मूर्तिं विलोक्य विष्ण्वादिदेवैः शम्भुस्तुतः । | |
| १२. | त्रिपुरदाहवशिष्टमयस्य शम्भुशरणगमनं तस्मै शम्भुना वितललोकवासदानपूर्वकं स्वभक्तिर्दत्ता जैनाचार्य्येभ्यः कलौ त्वमन्तं प्रसरिष्यतीति निदेशपूर्वकं विष्ण्वादिदेवविसर्जनम् । | |
| १३. | तपस्विरूपेण गच्छति शिवे शक्रेणतदवमानाच्छम्भुना तद्भस्मीकरणं बृहस्पतिप्रार्थनया पुनरुज्जीवनम् । | |
| १४. | रुद्रेनोत्थवह्निना समुद्राज्जलन्धरोत्पत्तिः, कालनेमिदुहित्रा वृन्दया तत्परिणयनम् । | |
| १५. | स्वसदसि छिन्नशिरसं राहुमवलोक्य सुधामन्थनसामयिकदेववैरं स्मृत्वा जलन्धरस्य शक्रेण युद्धं देवतानां तत्कर्तृकपराजयश्च । | |
| १६. | स्वर्गं विहाय विद्रुतेषु सुरेषु जलन्धरेण तदनुसरणं देवसहायार्थं विष्णोः संग्रामकरणञ्च । | |
| १७. | विष्णुजलन्धरयुद्धे जलन्धरपराक्रमतुष्टविष्णोर्वरदानेन तन्नगर सलक्ष्मीकहरेर्निवासः । | |
| १८. | शक्रादिदेवैस्सप्रेषितो नारदो जलन्धरमागत्य पार्वतीरूपलावण्यलक्ष्मीं प्रशशंस तस्यां जातानुरागः स दैत्यो मारशराहतो बभूव । | |
| १९. | शिवसन्निधौ पार्वतीं मह्यं देहीति दूतप्रेषणन्तदाकर्ण्य रुषाभीमस्य पुरुषस्योत्पत्तिः शम्भुदेहात् । | |
| २०-२१. | शिवगणजलन्धरसैन्ययुद्धवर्णनम् । | |
| २२. | श्रीशविजलन्धरयोर्युद्धे नानामायाः संविधाय तत्र प्रवृत्ते हरे पार्वतीरिरंसया जलन्धरस्य शिवरूपेण । पार्वत्यन्तिकं गमनम् । तन्मायामालोक्य भवान्या विष्णोः स्मरणं दुष्टजलन्धरदैत्यस्य पत्न्या वृन्दायाः सतीत्वमपाकुर्वित्यामन्त्रणम् । | |
| २३. | विष्णुना जलन्धरपत्न्या दुःस्वप्नान्दर्शयित्वाभयोत्पादनं स्वयं मायाजलन्धरवपुषा तया सह विहरणम् । विदितविष्णुच्छलाया वृन्दाया जन्मान्तरे तव पत्नीहरणं भवत्विति विष्णुशापदानपूर्वकं चिताप्रवेशः । | |
| २४. | श्रीशिवद्वारा जलन्धरवधः । | |
| २५. | तत्तद्भक्तभुक्तिमुक्त्यादिप्रदानात्मक शम्भुयशः स्तवनम् । | |
| २६. | वृन्दाचिताभूमौ समाधिस्थस्य हरेः प्रवृत्तिं सूचयितुं शम्भवे देवानां निवेदनं यूयं सर्वे पार्वतीसविधं गत्वा स्वप्रार्थितं प्राप्स्वयेति शम्भुवचसा देवानां शिवास्तुतिपूर्वकं तत्प्रार्थनम् । तया च वृन्दाचिताभूमौ वपनार्थं बीजदानन्ततश्च तेभ्यो धात्रीमालतीतुलसीनामुत्पत्तिस्ताः प्राप्य विष्णुमोहापगमः । | |
| २७. | दम्भासुरस्य पुत्रार्थं तपश्चरणम् । तत्तपस्तुष्टविष्णुप्रसादात्तस्य शंखचूडाह्वपुत्रोत्पत्तिः । | |
| २८. | शंखचूडस्य तपश्चरणं ब्रह्मनिदेशात्तुलस्या सह विवाहश्च । | |
| २९. | शंखचूडवधोपक्रमे तद्राज्यकरणवर्णनपूर्वकं यत्पूर्वभववृत्ताभिधानम् । | |
| ३०. | त्वदृते दृप्तशंखचूडस्य वधोऽसंभाव्य इति हरिब्रह्मप्रमुखैर्देवैः शिवस्तुतिकरणम् । | |
| ३१. | शंखचूडवधार्थ याचमानेभ्यो देवेभ्यः शिवोपदेशः । | |
| ३२. | देवेभ्यो राज्यं देहि नो चेद्युद्धयस्वेति शंखचूड सविधं शिवेन पुष्पदन्तदूतप्रेषणम् । | |
| ३३. | वीरभद्रनन्दिकाल्यष्टभैरवाद्यनेक शिवगणानां तत्सैन्यसंख्या भिदानपुरस्सरं युद्धयात्रावर्णनम् । | |
| ३४. | भार्यां तुलसीं समाश्वास्य पुत्रे राज्यं समर्प्य शंखचूडस्य युद्धयात्रोपक्रमः । | |
| ३५. | मरीचिपुत्रकश्यपाद्दानवोत्पत्तिः पूर्वदेवास्त इत्यादिकुलीनतांप्रकटनपुरस्सरं जातिभिर्युद्धमनर्थहेतुरित्यादिशिवोपदेशो दूतं प्रति । देवाः सदैवस्वकार्यसाधकास्तैर्योद्धव्यमेवेति शंखचूडाशयकथनपूर्वकं दूतवचनम् । | |
| ३६. | देवदानवानां रोमहर्षणयुद्धवर्णनम् । | |

| | | |
|---|---|---|
| ६. | पुत्रकामस्य शिलादमुनेदुष्करतपश्चरणपूर्वकं श्री शिवात्मकाऽयोनिजनन्दीश्वरपुत्रप्राप्तिस्तस्यात्यायुर्योगज्ञानात्पतिपो नन्दीश्वरस्य तपश्चर्यार्थं वनगमनञ्च । | |
| ७. | तपः प्रतीतान्महेश्वरान्नन्दीश्वरस्य गणाधिपत्वप्राप्तिर्विवाहवर्णनं शिवभक्तिवरप्राप्तिश्च । | |
| ८. | अहमेवसर्वेश्वरो न कश्चिन्मत्तोऽधिक इति ब्रह्मगर्वनाशाय कालभैरवापरनामुकरुद्रावतार वर्णनम् । | |
| ९. | भैरवस्य त्रिलोकीतीर्थभ्रमणेऽप्यनपगतविधिशिरश्छेदजब्रह्महत्या काश्यां कपालमोचनतीर्थे सद्योविलयं गतति कपालमोचनतीर्थस्य सर्वश्रेष्ठत्वोक्तिः । | |
| १०. | नृसिंहस्य चरितवर्णने तदुग्ररुड्ज्वालासंतप्तजगत्त्रयीरक्षणोपायप्रश्नार्थं समागतदेवानुद्दिश्य तद्दुःखोपशमाय श्रीमहादेवस्य प्रतिवचनम् । | |
| ११. | श्रीमहादेवाज्ञया दृप्तनृसिंहोपशमाय गणाग्रग्यवीरभद्रस्य तदुपकण्ठ आगत्यससामनिनिवेदनेऽपि नृसिंहगर्वानपागमात्कोपप्रकाशनम् । | |
| १२. | शम्भोश्शरभावतार प्रसदुंगेसनृसिंह शिरच्छेदस्तत्कृत्तिवसनेन च तस्य वृत्तिवासा इति सोपपत्तिकनामकथनम् । | |
| १३. | अत्युग्रतपोनिरतविश्वासनराख्यमुनि प्रतिशुचिष्मत्यां त्वत्पत्न्यां गृहपतिनाम्ना पुत्रतामेष्यामीति शम्भोः प्रतिज्ञा । | |
| १४. | गृहपत्यवतारसमये विष्णवादिदेवानामागमनम् । विहितोपनयनादिसंस्कारस्य तस्य नारदेनायुल्पाभिधानम् । | |
| १५. | अकालमृत्युच्छिदे गृहपतेस्तपश्चरणम् । शकरूपेण शम्भुना तत्परीक्षणं स्वातमनि तद्दृढप्रेमावलोकनात्सपरितोषं तस्मा अग्निपदवी प्रदानम् । | |
| १६. | समुद्रमथनोद्भूतसुधासन्तृप्तदृप्तदेवमदापहाराय शम्भोर्यक्षेश्वरावतारवर्णनम् । | |
| १७. | शंभोः सशक्तिकमहाकालातारादिदशावतारवर्णनम् । | |
| १८. | दैत्योपद्रुतदेवरक्षाकामकश्यपतपः परितुष्टशिवस्य सर्वतस्सुरक्षायै कपाल्याद्येकादशरुद्रावतारधारणम् । | |
| १९. | पुत्रकामस्यात्रेः सर्वश्रेष्ठदेवतपश्चरणं ब्रह्मविष्णुशिवात्मिकाया देवत्रय्या वरं याचस्वेति तदन्तिकमागमनम् । तदंशभ्यश्चन्द्रदत्तात्रेयदुर्वास- सामुद्भवो दुःर्वाससोऽम्बरीषादीनान्धर्मपरीक्षावर्णनञ्च । | |
| २०. | मोहिनीरूपमुग्धस्य हरस्य मनःक्षोभाद्वीर्यच्युतिः । सप्तर्षिद्वारा गौतमसुतायामञ्जन्यां श्रवणद्वारा तस्याऽऽधानम् ततश्च यथावसरं हनुमज्जनिः । हनुमतः सूर्यादध्ययनं तन्निदेशेन च तस्य सुग्रीवोपकण्ठं गमनं सीतान्वेषणादि श्रीरामकार्यकरणादि च । | |
| २१. | भैरवाय मनुजो भवेति गिरिजायाः शापदानम् । | |
| २२. | समुद्रसञ्जातदिव्यनारीभिः पाताले विष्णोर्विहरणम् । चिरायैवं विष्णवासक्तिमालोक्य महेशस्य तद्बोधनाय वृषरूपधारणञ्च । | |
| २३. | अतुलबलवृषरूपेण शिवेन विष्णुशम्भुयुद्धे विष्णोः पराजये शिवाज्ञया तस्य स्वलोकगमनम् । | |
| २४. | दधीचमुनिपत्न्यां शम्भोः पिप्पलादवतारवर्णनम् । | |
| २५. | पिप्पलादूयानरण्यसुतया विवाहस्ततप्रसंगे पिप्पलादीनां स्मरणे शनिकृतपीडाविनाशवर्णनम् । | |
| २६. | महानन्दावेश्याभक्तिसमाकृष्टचित्तस्य शम्भोर्वेश्यानाथाह्वावतारवर्णनम् । | |
| २७. | द्विजेशाह्वशिवावतारप्रसंगे भद्रायुनुपभक्तिपरीक्षा तस्मा आयुषोऽन्ते स्वलोकप्राप्तिवरदानञ्च । | |
| २८. | सभार्याहुकभिल्लस्य भक्त्या तुष्टेन शिवेन यतिरूपेण परीक्षणम् । परीक्षिताया आहुकायै जन्मान्तरे त्वं विदर्भराजतनया आहुकश्च नलोऽहञ्च भवत्प्रीतिकरो हंसो भविष्यामीति वरदानम् । | |
| २९. | इक्ष्वाकुवंश्यनभगचरित्रवर्णनप्रसंगे कृष्णदर्शनशिवावतारवर्णनम् । | |
| ३०. | स्वावज्ञया शक्रं जिघांसोः शिवस्य प्रणिपातपुरस्सरं गुरोः प्रार्थना प्रतीताच्च तस्मात्तद्दर्शनपूर्वकमिष्टलाभः इन्द्रञ्जीवयति गुरूनिर्बन्धेनेश्वेरेणे- न्द्रजीवनं गुरवे च जीव इति संज्ञा प्रददे । | |
| ३१. | विदभसत्यरथराज्ञः संग्रामे च शत्रुभिः पराभवे जाते अन्तर्वत्न्याः तत्पत्न्या गृहान्निर्गताया मार्गे सुतजननोत्तरकाले निधनम् । जातमात्रस्यापत्यस्य रक्षार्थं भिक्षुरूपशम्भुप्रेरणया कस्याश्चिद्विधवा ब्राह्मण्या आगमनम् । तद्बाल रक्षा चेत्यादिप्रसंगेन शिवस्य भिक्षुवर्यावतारवर्णनम् । | |
| ३२. | क्षीराथ तपस्यत उपमन्योः शक्ररूपिशंभुकृतपरीक्षणं कृतपरीक्षाय तस्मै दधिदुग्धादिसमुद्रदानाद्यनेकवरप्रदानपूर्वकं स्वगणपदवितरणञ्च । | |
| ३३. | श्रीशिववरप्राप्तये तपस्यन्त्याः शिवाया ब्रह्मचारीरूपेण तस्या भावपरीक्षणम् । | |
| ३४. | पार्वतीप्राप्तप्च्छया हिमवद्गृहे शंभोः सुनर्तकरूपेणात्यशतलीलाप्रदर्शनपुरस्सरं तस्यायांच । | |
| ३५. | अज्ञातकुलशीलाय शिवाय पार्वतीप्रदानन्न सांप्रतमिति मतिदातुं हिमवत्पार्श्वे साधुद्विजरूपिशिवगमनम् । | |
| ३६. | पुत्रार्थमत्युग्रतपश्चरतो द्रोणस्य पत्न्यामश्वत्थामरूपेण शम्भोरवतारवर्णनं पाण्डवैः सह युद्धविवरणञ्च । | |
| ३७. | द्वैतवनस्थपाण्डवानामन्तिके तदनिष्ठाय दुर्योधनेन दुर्वाससःप्रेषणं कृष्णकृपया तदुद्धार जाते व्यासस्य तदन्तिके गमनं शैवास्त्रप्राप्तये चन्द्रकीलपर्वतेऽर्जुनप्रेषणम् । | |

| | | |
|---|---|---|
| ३८. | व्यासेनार्जुनविरहकातर पाण्डवाश्वासनमर्जुनतपस्तेजजोऽसहनेनेन्द्रकील रक्षकाणामिन्द्रसमीपे तद्वृत्तवर्णनमिन्द्रस्यार्जुनपरीक्षापूर्वकं भगवतः शिवस्याराधने तन्नियोजनम् । | |
| ३९. | तपस्यदर्जुनवधाय दुर्योधनेन शूकररूपिमूकाख्यदैत्यप्रेषणं श्रीवेनार्जुनरक्षायै धृतभिल्लपतिवेषेणार्जुनबाणपातसमकालमेव मूकवध कृतः । | |
| ४०. | युगपन्मुक्तशरयोर्हतशूकरयोः शिवार्जुनयोरहमेव विजटयहमेव विजयीति विवादः । | |
| ४१. | भिल्लराजरूपिशिवस्यार्जुनेन युद्धमर्जुनाय शिव वरदानन्तस्य श्व गृहे प्रत्यागमनं कृष्णदर्शनञ्च । | |
| ४२. | श्रीशम्भोर्द्वादशज्योतिर्लिङ्गावतारवर्णनम् । | |
| **इति तृतीया शतरुद्रसंहिता** | | |
| **अथ चतुर्थी कोटिशतरुद्रसंहिता** | | |
| १. | शिवलिङ्गमहात्म्यवर्णने द्वादशज्योतिर्लिङ्ग वर्णनम् । | |
| २. | काशीस्थलिंगानां नामाऽनुकीर्तनपूर्वकतन्माहात्म्यकथनम् । | |
| ३. | अत्रीश्वरकथाऽनुवर्णनेऽनावृष्टौ सपत्नीकात्रितपोवर्णनम् । | |
| ४. | अनसूयातपस्तुष्टा गंगा तदाश्रमे न्युवास । वरदित्सयोपस्थितं शिव प्रति भवताऽत्रैवस्थासव्यमिति सपत्नीमात्रिंवरयाचनम् । | |
| ५. | नन्दिकेशमाहात्म्यवर्णने कश्चिद् द्विजोऽर्भकाभ्यां प्रियां समर्प्य काशीं गतो मृतश्च ततो ज्येष्ठपुत्रो मृतमात्रस्थि काशीं निनीषन्प्रस्थितो रात्रिमुखे कस्यचिद्द्विजस्य भवने न्युवासेति वर्णनम् । | |
| ६. | गृहेशपुत्रवधेन कृष्णत्वमाप्तया गवा सहोपनन्दिकेशं नर्मदातटं प्राप्य तत्र स्नानेन पुनः शुक्लांगामवलोच्य विस्मयमानो व्रजन्गंगया बोधितः स्वमात्रस्थि नर्मदायां प्रक्षिप्य दिव्यरूपामम्बां स्वर्यान्तीमवलोच्य गृहं निवृत्तः पुत्रः । | |
| ७. | बालविधवामृषिकन्यकां तपःप्रवृत्तां स्मराकृष्टमनसा मूढनाम्नाऽसुरेण पीडयमानां रिरक्षिषुः शिव आविर्भूय दैत्यं जघान । सर्वे देवा गंगा च तदा तत्र समागताः पश्चात्प्रतिवर्षे वैशाखसितसप्तम्यां गंगा तत्र ग्रयातीति वर्णनम् । | |
| ८. | गोकर्णक्षेत्रस्थमहाबलाख्यशिवलिंग माहात्म्यवर्णनम् । | |
| ९. | सौमिनी द्विजकन्या व्यभिचारत्यक्ता शूद्रपत्नी भूत्वा गोवत्सं हत्वा जन्मान्तरे चाण्डालकन्या भूत्वा गोकर्णे गत्वा केनापि दत्तं विल्वपत्रमसारतया प्रचिक्षेप दैवाच्छिवलिंगे तत्पातात्परपदमवाप । | |
| १०. | गुरुशापाद्राक्षसत्वमाप्तो मित्रसहोराजा मुनिकिशोरदस्यतितः किशोरमभक्षयत् । हत्याविकलमना गौतमोपदिष्टः काकर्णे स्नात्वा महाबलमभ्यर्च्य तत्पदमवाप । | |
| ११. | उत्तरदिक्स्थशिवलिङ्गवर्णनेचन्द्रभालपशुपतीत्यादिवर्णनम् । | |
| १२. | ऋषिशापभूमिपतितशिवलिंग दह्यमानभुवनरक्षणाय ऋषिप्रार्थनया पार्वत्या स्वयानौ लिंगधरणे भुवनशान्तिः हाटकेशनाम्ना तल्लिंगप्रसिद्धिश्च । | |
| १३. | अन्धकदमनाऽन्धकेश्वरमाहात्म्यवर्णनोत्तरं वटुकोत्पत्तिकथनम् । | |
| १४. | सप्तविंशतिभार्यासु रोहिण्यामेवाधिकस्नेहादक्षेण क्षयी भव इति चन्द्रः शप्तः विध्युपपदेशतः षण्मासं प्रभासे शिवार्चनात्पक्षक्षयिलं पक्षं वर्धमानत्वञ्च लेभे सोमेश्वर नाम्ना तज्ज्योतिर्लिंगप्रसिद्धिश्च । | |
| १५. | मल्लिकार्जुन द्वितीयज्योतिर्लिंगवर्णनम् । | |
| १६. | दूषणदैत्यत्रस्तशैवद्विजार्चनगर्तादुत्पद्य दैत्यं हत्वा द्विजप्रार्थनया तत्रैव शिवस्तस्थाविति महाकाल तृतीयज्योतिर्लिंगवर्णनम् । | |
| १७. | चन्द्रसेनराज-श्रीकरगोपबालक-सुखप्रदानादिमहाकालमाहात्म्य वर्णनम् । | |
| १८. | विन्ध्यकथोक्तिपूर्वकमोंकारेश्वर चतुर्थज्योतिर्लिंगवर्णनम् । | |
| १९. | केदारेश्वर पंचमज्योतिर्लिंगमहात्म्यवर्णनम् । | |
| २०. | भीमेश्वर षष्ठज्योतिर्लिंगमाहात्म्यनिरूपणे कुम्भकर्णपुत्रभीमाऽसुरकृतोपद्रववर्णनम् । | |
| २१. | स्वभक्त कामरूपेश्वरमनुगृह्णन् सपरिवारं भस्माऽसुरं भस्मसाचकारेति भीमेश्वर नाम्ना प्रसिद्धिः । | |
| २२. | विश्वेश्वर सप्तमज्योतिर्लिंगमाहात्म्यवर्णने काश्यां रुद्रगमनवर्णनम् । | |
| २३. | श्रीकाशीमाहात्म्यवर्णनम् । | |
| २४. | त्र्यम्बकेश्वराष्टमज्योतिर्लिंगमाहात्म्यवर्णने गौतमर्षिप्रभावनिरूपणम् । | |
| २५. | अनावृष्टौ तपस्तुष्टवरुणवरब्धगौतमतोयपूर्णगर्तलिप्सयान्यर्षयो गणेशवरतो गोहत्यादोष व्याजतस्सपत्नीकं गौतमन्निस्सारयामासुः । ततो ऋषीणामाज्ञया गौतमस्य पार्थिवेश्वरार्चनप्रवृत्तिः । | |
| २६. | शिवाऽनुग्रहतो गौतमस्य निष्पापत्व गंगात्र्यम्बकेश्वरयोस्सदैव तत्र स्थितश्चावर्णि । | |
| २७. | गंगाकृतगौतमद्वेष्पृष्यनादरः कल्पभेदेनगौतमकृत ऋषिषु शापश्च । | |
| २८. | वैद्यनाथेश्वर नवमज्योतिर्लिंग माहात्म्यवर्णनम् । | |

| | | |
|---|---|---|
| १२. | ओंकारार्थकथनप्रसंगान्नान्दीश्राद्धब्रह्मयज्ञादि विधिवर्णनं, प्रणवार्थश्च साक्षात्सदाशिव इत्यादि कथनं च । | |
| १३. | प्रणवजपाधिकारार्थं विरजाहोमप्रकारकथनं रात्रौ गायत्रीजपविधानोत्तरं संन्यासविधानादिवर्णनम् । | |
| १४. | ओंकारस्य षट्प्रकारकथनपूर्वकस्वरूपवर्णनम् । | |
| १५. | उपासनार्थं शिवात्सृष्टेरुत्पत्तिवर्णनंसगुणशिवस्वरूपवर्णनं, सृष्ट्युपक्रमोपसंहार प्रकारकथनंच । | |
| १६. | ब्रह्मादिस्थावरान्तसृष्टेः कारणं शिवो वा शक्तिर्वेति वामदेवप्रश्नस्योत्तरत्वेनोंकार एव सावारणकारणमित्यभिप्रायादिप्रकाशवर्णनम् । | |
| १७. | शिवशक्त्योः स्वरूपवर्णनावसरे शिवस्योपरित्व प्रकृतेश्चाधस्थत्वं यदुक्तं महात्मना तद्विरुद्धेयमुक्तिरिति वामदेवस्य संशयपरिहाराय शिवाद्वैतज्ञानोपदेशाय च स्कन्दकृततत्त्वसृष्टिकथनम् । | |
| १८. | यतीनां गुरुत्वकारणवर्णनम्, सन्यासपद्धत्या शिष्यकरणविधिवर्णनम् । | |
| १९. | तत्प्रसंगान्महावाक्यान्युक्त्वा तदर्थंवर्णनेत्तरं योगपट्टविधिवर्णनम् । | |
| २०. | यतिक्षौरयतिस्नानाद्याचारकथनम् । | |
| २१. | यतीनां दाहनिषेधात्खननविधानं तत्प्रकारवर्णनोत्तरं दशाहान्तकर्मकथनम् । | |
| २२. | मृतयतीनामेकादशाहकृत्यकथनम् । | |
| २३. | त्रयोदशाहे गुर्वराधनादि विधिकथनम् । | |
| | **इति षष्ठी कैलाससंहिता** | |
| | **अथ सप्तम्या वायवीयसंहितायाः पूर्वभागः** | |
| १. | वेदादिचतुर्दशविद्यापुराणाविर्भावकथनम्, तत्र पुराणसंख्यालक्षणादि निरूपणश्च । | |
| २. | कः परः इति विवदमानानानां षट्कुलीनमुनीन विधिंप्रति प्रश्नः । | |
| ३. | शिव एक सर्वस्मात्परस्तत्प्रसादादेव जीवान् मुक्तिरिति विध्युत्तरं प्रसंगान्नैमिषवर्णनञ्च । | |
| ४. | ऋषिसत्रसमाप्त्युत्तरं तत्र वायोरागनमृषीणां प्रश्नानुरोधाद्वायोः शिवैश्वर्यकथनारम्भः । | |
| ५. | पशुपतिशब्दार्थविषये वायुनैमिषेयऋषिमविवादः । | |
| ६. | उपर्युक्तशब्दार्थः शिव एवेति वायोः प्रत्युत्तरं प्रसंगाद् ब्रह्मदीनामायुर्मानकथनञ्च । | |
| ७. | कालः शिवाद्भिन्नो नेत्युक्त्वा तस्य स्वरूपशक्त्यादिविवरणम् । | |
| ८. | कृत्स्नमिदं सृष्ट्वा तत्र क्रीडानिमित्तं शिवस्य सृष्ट्यादि भवति । | |
| ९. | ऋषीणां वायुं प्रति शिवस्य क्रीडाविषयकसृष्टिविषयानेकप्रश्नकथनम् । | |
| १०. | अखिलब्रह्माण्डस्थितिस्वरूपादिविवरणम् । | |
| ११. | मन्वन्तरकल्पप्रतिकल्पादिभेदेन सर्गप्रतिसर्गोद्भवः । | |
| १२. | ब्रह्मणः सकाशान्मोहगदातिसर्गः । भूतपिशाचासुरराक्षसां चोत्पत्तिविसर्गौ । | |
| १३. | कल्पभेदेन ब्रह्मविष्णुरुद्रादीनामन्योन्यतः प्रादुर्भावकथनम् । | |
| १४. | प्रतिकल्पे ब्रह्मणः सकाशाद्रुद्रोत्पत्तिवर्णनम् । | |
| १५. | अर्धनारीश्वररुपेण प्रादुर्भुताच्छिवाद् ब्रह्मणो मैथुनसृष्टिकल्पना । | |
| १६. | मैथुनसृष्टिकथने प्रसंगाच्छक्तिनिर्माणकथनम् । | |
| १७. | मैथुनसृष्टिकथने प्रसंगाच्छक्तिनिर्माणकथनम् । | |
| १८. | शिवायाः सतीनाम्ना दक्षोदराज्जन्म, दक्षस्य रुद्रद्वेषेकारणम् । | |
| १९. | शिवद्वेषनिमित्तात्सतीदेहत्यागवर्णनञ्च वीरभद्रोत्पत्तिश्च । | |
| २०. | सगणस्य वस्रभद्रस्य दक्षयज्ञस्थानागमनं तत्कृतदक्षमखविध्वंसनवर्णनम् । | |
| २१. | यज्ञस्थानाद्विष्ण्वादीनां गमनक् । अग्न्यादीनां च पलायनवर्णनम् । | |
| २२. | दक्षस्य पक्षपाताद्वीरभद्रदेवयोर्मध्ये दारुणसंग्रामः तत्र वस्रभद्रकृतदेवादीनां विरूपकरणस्य वर्णनम् । | |
| २३. | पराभूतदेवैः कृतया स्तुत्या प्रसन्नाच्छिवान्मखसंधानेदेवसन्त्वानशिवान्तर्धानादिकथनम् । | |
| २४. | ततो मन्दराचले शिवस्य तपोर्थं गमनं प्रसंगान्मन्दरवर्णनं च । अत्रान्तरे शुम्भनिशुम्भदैत्योरुत्पत्तिः विधिप्रार्थनया च तद्वधार्थं प्रवृत्तयोः शिवाशिवयो- र्विचित्रलीलाप्रपंचनम् । | |
| २५. | शिवेन कालीत्यभिहिता शिवा तपोऽर्थं हिमाचलं जगाम तत्रोग्रं तपश्चरन्तीं देवीं दैत्यवधेच्छया ब्रह्माऽऽजगाम तदा कालीं मां गौरी कुरु, मत्सिंहश्च शिवभक्तो भपत्विति तं देव्युक्तिः । | |
| २६. | ब्रह्माण च तथास्त्वित्युक्ते सा सखीभिस्सिंहेन च सह शिवं द्रष्टुं गता । ब्रह्मापि गौयाः स्वदेहकोशान्निर्मितां कौशिकीं गृहीत्वा दैत्यवधार्थं स्वलोकं जगामेत्यादिवर्णनम् । | |

| | | |
|---|---|---|
| २७. | मंदरे गौरीगतौ शिवगणकृतोत्साहवर्णनं शिवयोः संमेलनप्रसंगकथनं शिवयाऽऽनीतस्य सिंहस्य शिवप्रसादः । | |
| २८. | विश्वस्यास्य याऽग्नीषोमीयता पूर्वोक्ता तस्याः प्रपंचः प्रसंगाद्भस्ममहिमवर्णनं च । | |
| २९. | वागर्था इव चास्य विश्वस्य शिवस्य संबन्धः पूर्वोक्तःस्तस्य विवरणं तथा षडध्वस्वरूपकथनम् । | |
| ३०. | शिवविचित्र चरितश्रवणनास्तिकउप्रवृत्तबुद्धिप्रवाहस्यनिवर्तनक्षम शिवतत्त्वविषयक ऋषिप्रश्नप्रपञ्च । | |
| ३१. | उत्तरत्वेन वायुप्रोक्तानेकाग्न्यादिदृष्टान्तैर्विशुद्धशिवतत्वकथनम् । | |
| ३२. | मोक्षाप्रापकश्रेष्ठधर्मप्रच्छानुरोधाच्छैवधर्मानुष्ठानमेव नान्यदित्यादि विवरणम् । तस्य च पंच विधत्वनिरुक्तिः । | |
| ३३. | सप्रपंचपाशुपतव्रतकथनंभष्ममहिमवर्णनञ्च । | |
| ३४. | प्रश्नानुसारेण शिशुत्वेऽप्युपमन्योः शैवागमतत्त्वज्ञानं तस्य पूर्वजन्मवृत्तकथनं रुद्रकृतया तस्य विभूतिलाभश्च । | |
| ३५. | उपमन्युपस्तप्ता देवाः शिवशरणं प्राप्तास्तदाशक्ररूपशिवेनोपमन्युसमीपं गत्वा वरं याचस्वेत्युक्तेबालकेनोक्तं शिवभक्तिं विना मम किमपि नेष्टं तदा शक्ररूपी शिवः शिवनिन्दामकरोत्तांश्रुत्वा चोपमन्युस्तं शप्तुं प्रवृत्तस्तदा शिवरूपेण तस्य कामवरं दत्त्वा स्वलोक गत इत्यादिवर्णनम् । | |
| | **इति सप्तम्या वायवीयसंहितायाः पूर्वखण्डः** | |
| | **अथ सप्तम्या वायवीयसंहिताया उत्तरखण्डः** | |
| १. | एकदा पुत्रकामनया शिवसंनिधिं गतस्य श्रीकृष्णस्योपमन्योर्लब्धात्पाशुपाख्यवार्षिक व्रताच्छिवतुष्ट्या सांबनामक पुत्रप्राप्तिवर्णनम् । | |
| २. | ऋषिप्रश्नानुरोधात्पाशुपतज्ञानस्यवायुकृतवितरणं तत्संवधादेव पशुपतिं विना कस्यापि पशो (जीवस्य) तृणच्छेदनेपि शक्त्यभावात्पशुपपतिरूपाच्छिवादिदं संसारचक्रं भ्रमत इत्यादिनिरूपणम् । | |
| ३. | सर्वस्यास्य जगतः शिवमयत्वासर्वेषामभयदानात्सपर्वोपकारकरणाय च पुत्रपौत्रादिप्रीत्या पितृसंतोषस्तथा शिवस्तुष्यतीत्याद्युपमन्यो कृष्णं प्रत्युपदेशः । | |
| ४. | श्रीकृष्णकृतप्रश्नयोत्तरत्वेन चंद्रचंद्रिकादिदं विश्वो गौरीशंकराधिष्ठितमित्युपमन्युकृतविवर्णनम् । | |
| ५. | विश्वस्यास्य वस्तुतः शिवस्वरूपत्वे पाशसामर्थ्यात्पशवो जीवा एक तं बहुधा वदंति इत्यस्योपमन्युकृतविस्तारकथनम् । | |
| ६. | यथा जीवानां मायाहंकारादिबंधतस्तथ । शिवस्य नेत्यादिसविस्तरप्रतिपादनम् । | |
| ७. | यथा वह्नेः सकाशादनेके स्फुलिंगा उत्पद्यन्ते लीयंते च तथा शिवादनंताः शक्तय उत्पद्यन्ते विलयं प्राप्नुवंतीत्येवंप्रकारेण शक्तिस्वरूप- कथनं तासांच सम्यग्ज्ञानाच्छिवभक्त्या च शिवतत्त्वज्ञानाप्राप्तिरित्यादि प्रपञ्चनम् । | |
| ८. | वेदान्तज्ञानाधीनं शिवतत्त्वज्ञानं बुद्धिहीनानां नेति च यदुक्तं तत्प्रसंगादादौ व्यासावतारकथनम् । | |
| ९. | युगेयुगे शिवस्य योगावतारवर्णनम् । | |
| १०. | गौरींप्रति ससाधनायाः शिवभक्तेः स्वरूपफलादिप्रकारकथनम् । | |
| ११. | ब्राह्मणानां तदितरभक्तानामधिकारिणां च धर्मप्रपञ्चनम् । | |
| १२. | नमः शिवाय इति पञ्चाक्षरमन्त्रमाहात्म्यकथनम् । | |
| १३. | कलिकलुषितकालेति श्रद्धायुक्तपञ्चाक्षरमन्त्रानुष्ठानाच्छिवसालोक्यप्राप्तिरित्यादिकथनम् । | |
| १४. | पञ्चाक्षरमन्त्रजपविधानकथनम् । | |
| १५. | शिवदीक्षाविधानकथनं तत्प्रसंगादगुरुमाहात्म्यवर्णनं च । | |
| १६. | शिवदीक्षायां शिष्यसंस्कारविधानकथनम् । | |
| १७. | गुरोः शिष्ययोग्यताविचारणायां षड्ध्वविज्ञानविचारणावश्यं कार्येत्यभिधाय तत्प्रसंगेन षडध्वलक्षणप्रपञ्चनं दीक्षादानप्रकारकथनञ्च । | |
| १८. | षडध्वशद्धितद्विधाननिरूपणम् । | |
| १९. | साधकसंस्कारमन्त्रमाहात्म्यनिरूपणम् तत्र मंत्रग्रहण जयप्रकारतत्फलादीन्यभिहितानि । | |
| २०. | शिष्यस्य आचर्यत्वायाऽभिषेचनस्य प्रकारोभिहितः । | |
| २१. | नित्यनैमित्तिककर्मकथनं, तत्र सूर्यपूजापञ्चयज्ञानां प्रकारश्चाभिहितः । | |
| २२. | न्यासप्रकारनिरुक्तिः तत्र मातृकान्यासषडङ्गन्यासादिकप्रपञ्चनम् । | |
| २३. | शैवागमोक्तपूजापद्धतिव्याख्याकथनम् । | |
| २४. | शैवानां लिंग पूजाविधिकथनम् । | |
| २५. | पूजास्थोपचाराणां प्रत्येकस्य स्वरूपकथनम् । | |
| २६. | महोग्रपातकृतिशिवलिङ्गपूजनात्पापनाशो भवत्यतः सर्वेषां सांगोपांगलिंगपूजायामधिकारोऽभिहितः । | |
| २७. | अग्निकार्ये कुंडादिकथनम् । हेमद्रव्यसंख्यादिकथनम् । | |

॥ अथ श्रीशिवमहापुराण् ॥
॥ विश्वेश्वरसंहिता ॥
॥ श्रगणेशाय नमः ॥
॥ श्रीगुरुभ्यो नमः ॥
॥ श्री सरस्वत्यै नमः ॥
॥ अथ शिवपुराणे प्रथमा विद्येश्वरसंहिताप्रारभ्यते ॥

## ॥ अथ प्रथमोऽध्यायः ॥

आद्यन्तमंगलमजातसमानभावमार्यं तमीशमजरामरमात्मदेवम् ।
पञ्चाननं प्रबलपञ्चविनोदशीलं संभावये मनसिशंकरमम्बिकेशम् ॥
व्यास उवाच ॥
धर्मक्षेत्रे महाक्षेत्रे गंगाकालिन्दिसंगमे । प्रयागे परमे पुण्ये ब्रह्मलोकस्य वर्त्मनि ॥१॥
मुनयः शंसितात्मानस्सत्यव्रतपरायणाः । महौजसो महाभागा महासत्रं वितेनिरे ॥२॥
तत्र सत्रं समाकर्ण्य व्यासशिष्यो महामुनिः । आजगाम मुनीन्द्रष्टुं सूतः पौराणिकोत्तमः ॥३॥
तं दृष्ट्वा सूतमायांतं हर्षिता मुनयस्तदा । चेतसा सुप्रसन्नेन पूजां चव्र ुर्यथाविधि ॥४॥
ततो विनयसंयुक्ता प्रोचुः स्साञ्जलयश्चते । सुप्रसन्ना महात्मानः स्तुतिं कृत्वायथाविधि ॥५॥
रोमहर्षण सर्वज्ञ भवान्वै भाग्यगौरवात् । पुराणविद्यामखिलां व्यासात्प्रत्यर्थमीयिवान् ॥६॥
तस्मादाश्चर्य्यभूतानां कथानांत्वं हि भाजनम् । रत्नानामुरुसाराणां रत्नाकर इवार्णवः ॥७॥
यच्च भूतं च भव्यं च यच्चान्यद्वस्तुवर्तते । न त्वयाऽविदितं किंचित्त्रिषु लोकेषु विद्यते ॥८॥
त्वं मद्दिष्टवशादस्य दर्शनार्थमिहागतः । कु र्वन्किमपिनः श्रेयो न वृथा गंतुमर्हसि ॥९॥
तत्त्वं श्रुतंस्मनः सर्वं पूर्वमेव शुभाशुभम् । नतृप्तिमधिगच्छामः श्रवणेच्छा मुहुर्मुहुः ॥१०॥
इदानीमेकमेवास्ति श्रोतव्यं सूत सन्मते । तद्रहस्यमपि ब्रूहि यदि तेऽनुग्रहो भवेत् ॥११॥
प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः । दुराचाररताः सर्वे सत्यवार्तापराङ्मुखाः ॥१२॥
परापवादनिरताः परद्रव्याभिलाषिणः । परस्त्रीसक्तमनसः परहिंसापरायणाः ॥१३॥
देहात्मदृष्टया मूढा नास्तिकाः पशुबुद्धयः । मातृपितृ कृतद्वेषाः स्त्रीदेवाः कामकिंकराः ॥१४॥
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः । धनार्जनार्थमभ्यस्तविद्यामदविमोहिताः ॥१५॥
बत्यक्तस्वजातिकर्माणः प्रायशःपरवंचकाः । त्रिकालसन्ध्ययाहीना ब्रह्मबोधविवर्जिताः ॥१६॥
अदयाः पण्डितं मन्यास्वाचारव्रतलोपकाः । कृष्युद्यमरताः क्रूरस्वभावा मलिनाशयाः ॥१७॥
क्षत्रियाश्च तथा सर्वे स्वधर्मत्यागशीलिनः । असत्सङ्गाः पापरता व्यभिचारपरायणाः ॥१८॥
अशूरा अरणप्रीताः पलायन परायणाः । कुचौरवृत्तयः शूद्राः कामकिंकरचेतसः ॥१९॥
शस्त्रास्त्रविद्ययाहीना धेनुविप्रावनोज्भिताः । शरण्यावनहीनाश्च कामिन्यूतिमृगास्सदा ॥२०॥
प्रजापालनसद्धर्मविहीना भोगततपराः । प्रजासंहारका दुष्टा जीवहिंसाकरा मुदा ॥२१॥
वैश्याः संस्कारहीनास्ते स्वधर्मत्यागशीलिनः । कुपथाः स्वार्जनरतास्तुलाकर्मकुवृत्तयः ॥२२॥
गुरुदेवद्विजातीनां भक्तिहीनाः कुबुद्धयः । अभोजितद्विजाः प्रायः कृपणा बद्धमुष्टयः ॥२३॥
कामिनीजारभावेषु सुरता मलिनाशयाः । लोभमोहविचेतस्काः पूर्तादिसुवृषोज्भिताः ॥२४॥
तद्वच्छूद्राश्च ये केचिद्ब्राह्मणाचारतत्पराः । उज्ज्वलाकृतयो मूढाः स्वधर्मत्यागशीलिनः ॥२५॥

कर्तारस्तपसां भूयो द्विजतेजोपहारकाः। शिश्वल्पमृत्युकाराश्च मंत्रोच्चारपरायणाः ॥२६॥
शालिग्रामशिलादीनां पूजकाहोमतत्पराः । प्रतिकूलविचाराश्च कुटिला द्विजदूषकाः ॥२७॥
धनवंतः कुकर्म्माणो विद्यावन्तो विवादिनः। आख्यायोपासना धर्मवक्तारो धर्मलोपकाः ॥२८॥
सुभूषाकृतयोदंभाः सुदातारो महामदाः । विप्रादीन्सेवकान्मत्वा मन्यमाना निजं प्रभुम् ॥२९॥
स्वधर्मरहिता मूढाः संकराः क्रूरबुद्धयः। महाभिमानिनो नित्यं चतुर्वर्णविलोपकाः ॥३०॥
सुकुलीनान्निजान्मत्वा चतुर्वर्णैर्विवर्तनाः । सर्ववर्णभ्रष्टकरा मूढास्सत्कर्मकारिणः ॥३१॥
स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञानकारिकाः। श्वशुरद्रोहकारिण्यो निर्भया मलिनाशनाः ॥३२॥
कुहावभावनिरताः कुशीलास्स्मरविह्वलाः। जारसंगरता नित्यं स्वस्वामिविमुखास्तथा ॥३३॥
तनया मातृपित्रोश्च भक्तिहीना दुराशयाः । अविद्यापाठका नित्यं रोगग्रसितदेहकाः ॥३४॥
एतेषां नष्टबुद्धीनां स्वधर्मत्यागशीलिनाम् । परलोकेपीहलोके कथं सूत गतिर्भवेत् ॥३५॥
इति चिन्ताकुलं चित्तं जायते सततं हिनः । परोपकारसदृशो नास्ति धर्मो परः खलु ॥३६॥
लघूपायेन येनैषां भवेत्सद्योघनाशनम् । सर्व्वसिद्धान्तवित्त्वं हि कृपया तद्वदाधुना ॥३७॥
व्यास उवाच ॥
इत्याकर्ण्य वचस्तेषां मुनीनां भावितात्मनाम् । मनसा शंकरं स्मृत्वा सूतः प्रोवाच तान्मुनीन् ॥३८॥
इति श्रीशैवेमहापुराणे विद्येश्वरसंहितायां मुनिप्रश्नवर्णनो नाम प्रथमोऽध्यायः ॥१॥
आदितः श्लोकानां समष्टयङ्काः-०+३८=३८



## ॥ अथ द्वितीयोऽध्यायः ॥

सूत उवाच ॥
साधुपृष्टं साधवो वस्त्रैलोक्यहितकारकम् । गुरुं स्मृत्वा भवत्स्नेहाद्वक्ष्ये तच्छृणुतादरात् ॥१॥
वेदांतसारसर्वस्वं पुराणं शैवमुत्तमम् । सर्वाघौघोद्धारकरं परत्र परमार्थदम् ॥२॥
कलिकल्मषविध्वंसि यस्मिञ्छिवयशः परम् । विजृम्भते सदा विप्राश्चतुर्वर्गफलप्रदम् ॥३॥
तस्याध्ययनमात्रेण पुराणस्य द्विजोत्तमाः । सर्वोत्तमस्य शैवस्य ते यास्यंति सुसद्गतिम् ॥४॥
तावद्विजृंभते पापं ब्रह्महत्यापुरस्सरम् । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥५॥
तावत्कलिमहोत्पाताः संचरिष्यंति निर्भयाः । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥६॥
तावत्सर्वाणि शास्त्राणि विवदंति परस्परम् । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥७॥
तावत्स्वरूपं दुर्बोधं शिवस्य महतामपि । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥८॥
तावद्यमभटाः क्रूराः संचरिष्यंति निर्भयाः । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥९॥
तावत्सर्वपुराणानि प्रगर्जंति महीतले । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥१०॥
तावत्सर्वाणि तीर्थानि विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति जगत्यहो ॥११॥
तावत्सर्वाणि मंत्राणि विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१२॥
तावत्सर्वाणि क्षेत्राणि विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१३॥
तावत्सर्वाणि पीठानि विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१४॥
तावत्सर्वाणि दानानि विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१५॥
तावत्सर्वे च ते देवा विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१६॥
तावत्सर्वे च सिद्धान्ता विवदंति महीतले । यावच्छिवपुराणं हि नोदेष्यति महीतले ॥१७॥
अस्य शैवपुराणस्य कीर्तनश्रवणाद्द्विजाः। फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तमाः ॥१८॥
तथापि तस्य माहात्म्यं वक्ष्ये किंचित्तु वोनघाः। चित्तमाधाय शृणुत व्यासेनोक्तं पुरा मम ॥१९॥
एतच्छिवपुराणं हि श्लोकं श्लोकार्धमेव च । यः पठेद्भक्तिसंयुक्तस्स पापान्मुच्यते क्षणात् ॥२०॥
एतच्छिवपुराणं हि यः प्रत्यहमतंद्रितः। यथाशक्ति पठेद्भक्त्या स जीवन्मुक्त उच्यते ॥२१॥

एतच्छिवपुराणं हि यो भक्त्यार्चयते सदा । दिने दिनेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥२२॥
एतच्छिवपुराणं यस्साधारणपदेच्छया । अन्यतः शृणुयात्सोऽपि मत्तो मुच्येत पातकात् ॥२३॥
एतच्छिवपुराणं यो नमस्कुर्याददूरतः। सर्व देवार्चन फलं स प्राप्नोति न संशयः ॥२४॥
एतच्छिवपुराणं वै लिखित्वा पुस्तकं स्वयम् । यो दद्याच्छिवभक्तेभ्यस्तस्य पुण्यफलं शृणु ॥२५॥
अधीतेषु च शास्त्रेषु वेदेषु व्याकृतेषु च । यत्फलं दुर्लभं लोके तत्फलं तस्य संभवेत् ॥२६॥
एतच्छिवपुराणं हि चतुर्दश्यामुपोषितः। शिवभक्तसभायां यो व्याकरोति स उत्तमः ॥२७॥
प्रत्यक्षरं तु गायत्रीपुरश्चर्य्याफलं लभेत् । इह भुक्त्वाखिलान्कामानं ते निर्वाणतां व्रजेत् ॥२८॥
उपोषितश्चतुर्दश्यां रात्रौ जागरणान्वितः। यः पठेच्छृणुयाद्वापि तस्य पुण्यं वदाम्यहम् ॥२९॥
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः। आत्मतुल्यधनं सूर्य्यग्रहणे सर्वतोमुखे ॥३०॥
विप्रेभ्यो व्यासमुख्येभ्यो दत्त्वायत्फलमश्नुते । तत्फलं संभवेत्तस्य सत्यं सत्यं न संशयः ॥३१॥
एतच्छिवपुराणं हि गायते योप्यहर्निशम् । आज्ञां तस्य प्रतीक्षेरन्देवा इन्द्रपुरो गमाः ॥३२॥
एतच्छिवपुराणं यः पठञ्छृण्वन्हि नित्यशः। यद्यत्करोति सत्कर्म तत्कोटिगुणितं भवेत् ॥३३॥
समाहितः पठेद्यस्तु तत्र श्रीरुद्रसंहिताम् । स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेवादिनैर्भवेत् ॥३४॥
तां रुद्र संहितां यस्तु भैरवप्रतिमांतिके । त्रिः पठेत्प्रत्यहं मौनी स कामानखिलाँल्लभेत् ॥३५॥
तां रुद्रसंहितां यस्तु सपठेद्वटबिल्वयोः । प्रदक्षिणां प्रकुर्वाणो ब्रह्महत्या निवर्तते ॥३६॥
कैलाससंहिता तत्र ततोऽपि परमस्मृता । ब्रह्मस्वरूपिणी साक्षात्प्रणवार्थप्रकाशिका ॥३७॥
कैलाससंहितायास्तु माहात्म्यं वेत्ति शंकरः । कृत्स्नं तदर्द्धं व्यासश्च तदर्द्धं वेद्म्यहं द्विजाः ॥३८॥
तत्र किंचित्प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते । यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥३९॥
न नाशयति यत्पापं सा रौद्री संहिता द्विजाः । तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ॥४०॥
शिवेनोपनिषत्सिंधुमन्थनोत्पादितां मुदा । कुमारायार्पितां तां वै सुधां पीत्वाऽमरो भवेत् ॥४१॥
ब्रह्महत्यादिपापानां निष्कृतिं कर्तुमुद्यतः । मासमात्रं संहितां तां पठित्वा मुच्यते ततः ॥४२॥
दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम् । पापं सकृत्कीर्तनेन संहिता सा विनाशयेत् ॥४३॥
शिवालये बिल्ववने संहितां तां पठेत्तु यः । स तत्फलमवाप्नोति यद्वाचोऽपि न गोचरे ॥४४॥
संहितां तां पठन्भक्त्या यः श्राद्धे भोजयेद्द्विजान् । तस्य ये पितरः सर्वे यांति शंभोः परं पदम् ॥४५॥
चतुर्दश्यां निराहारो यः पठेत्संहितां च ताम् । बिल्वमूले शिवः साक्षात्स देवैश्च प्रपूज्यते ॥४६॥
अन्यापि संहिता तत्र सर्वकामफलप्रदा । उभे विशिष्टे विज्ञेये लीलाविज्ञानपूरिते ॥४७॥
तदिदं शैवमाख्यातं पुराणं वेदसंमितम् । निर्मितं तच्छिवेनैव प्रथमं ब्रह्मसंमितम् ॥४८॥
विद्येशंच तथा रौद्रं वैनायकमथौमिकम् । मात्रं रुद्रैकादशकं कैलासं शतरुद्रकम् ॥४९॥
कोटिरुद्रसहस्राद्यं कोटिरुद्रं तथैव च । वायवीयं धर्मसंज्ञं पुराणमिति भेदतः ॥५०॥
संहिता द्वादशमिता महापुण्यतरा मता । तासां संख्यां ब्रुवे विप्राः शृणुतादरतोखिलम् ॥५१॥
विद्येशं दशसाहस्रं रुद्रं वैनायकं तथा । औमं मातृपुराणाख्यं प्रत्येकाष्टसहस्रकम् ॥५२॥
त्रयोदशसहस्रं हि रुद्रैकादशकं द्विजाः । षट्सहस्रं च कैलासं शतरुद्रं तदर्धकम् ॥५३॥
कोटिरुद्रं त्रिगुणितमेकादशसहस्रकम् । सहस्रकोटिरुद्राख्यमुदितं ग्रंथसंख्यया ॥५४॥
वायवीयं खाब्धिशतं घर्मं रविसहस्रकम् । तदेवं लक्षसंख्याकं शैवसंख्याविभेदतः ॥५५॥
व्यासेन तत्तु संक्षिप्तं चतुर्विंशत्सहस्रकम् । शैवं तत्र चतुर्थं वै पुराणं सप्तसंहितम् ॥५६॥
शिवे संकल्पितं पूर्वं पुराणं ग्रन्थसंख्यया । शतकोटिप्रमाणं हि पुरा सृष्टौ सुविस्मृतम् ॥५७॥
व्यस्तेष्टादशधा चैव पुराणे द्वापरादिषु । चतुर्लक्षेण संक्षिप्ते कृते द्वैपायनादिभिः ॥५८॥
प्रोक्तं शिवपुराणं हि चतुर्विंशत्सहस्रकम् । श्लोकानां संख्यया सप्तसंहितं ब्रह्मसंमितम् ॥५९॥
विद्येश्वराख्या तत्राद्या रौद्री ज्ञेया द्वितीयिका । तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका ॥६०॥
पञ्चमी चैव मौमाख्या षष्ठी कैलाससंज्ञिका । सप्तमी वायवीयाख्या सप्तैवं संहितामताः ॥६१॥
ससप्तसंहितं दिव्यं पुराणं शिवसंज्ञकम् । वरीवर्ति ब्रह्मतुल्यं सर्वोपरि गतिप्रदम् ॥६२॥

एतच्छिवपुराणं हि सप्तसंहितमादरात् । परिपूर्णं पठेद्यस्तु स जीवन्मुक्त उच्यते ॥६३॥
श्रुतिस्मृतिपुराणेतिहासागमशतानि च । एतच्छिवपुराणस्य नार्हंत्यल्पां कलामपि ॥६४॥
शैवं पुराणममलं शिवकीर्तितं तद्व्यासेन शैवप्रवणेन न संगृहीतम् ।
संक्षेपतः सकलजीवगुणोपकारे तापत्रयघ्नमतुलं शिवदं सतां हि ॥६५॥
विकैतवो धर्म इह प्रगीतो वेदांतविज्ञानमयः प्रधानः । अमत्सरांतर्बुधवेद्यवस्तु सत्क्लृप्तमत्रैव त्रिवर्गयुक्तम् ॥६६॥
शैवं पुराणतिलकं खलु सत्पुराणं वेदांतवेदविलसत्परवस्तुगीतम् ।
यो वै पठेच्च शृणुयात्परमादरेण शंभुप्रियः स हि लभेत्परमां गतिं वै ॥६७॥
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां द्वितीयोऽध्यायः ॥२॥
आदितः श्लोकानां समष्ट्यङ्काः-३८+६७=१०५



## ॥ अथ तृतीयोऽध्यायः ॥

व्यास उवाच ॥
इत्याकर्ण्य वचः सौतं प्रोचुस्ते परमर्षयः । वेदान्तसारसर्वस्वं पुराणं श्रावयाद्भुतम् ॥१॥
इति श्रुत्वा मुनीनां स वचनं सुप्रहर्षितः । संस्मरञ्छङ्करं सूतः प्रोवाच मुनिसत्तमान् ॥२॥
सूत उवाच ॥
शृण्वन्तु ऋषयः सर्वे स्मृत्वा शिवमनामयम् । पुराणप्रवणं शैवं पुराणं वेदसारजम् ॥३॥
यत्र गीतं त्रिकं प्रीत्या भक्तिज्ञानविरागकम् ॥४॥
वेदान्तवेद्यं सद्वस्तु विशेषेण प्रवर्णितम् ॥५॥
सूत उवाच ॥
शृण्वन्तु ऋषयः सर्वे पुराणं वेदसारजम् । पुरा कालेन महता कल्पेऽतीते पुनःपुनः ॥६॥
अस्मिन्नुपस्थिते कल्पे प्रवृत्ते सृष्टिकर्मणि । मुनीनां षट्कुलीनानां ब्रुवतामितरेतरम् ॥७॥
इदं परमिदं नेति विवादः सुमहानभूत् । तेऽभिजग्मुर्विधातारं ब्रह्माणं प्रष्टुमव्ययम् ॥८॥
वाग्भिर्विनयगर्भाभिः सर्वे प्राञ्जलयोऽब्रुवन् । त्वं हि सर्वजगद्धाता सर्वकारणकारणम् ॥९॥
कः पुमान्सर्वतत्त्वेभ्यः पुराणः परतः परः ।
ब्रह्मोवाच ॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥१०॥
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सहभूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥११॥
एष देवो महादेवः सर्वज्ञो जगदीश्वरः । अयं तु परया भक्त्या दृश्यते नाऽन्यथा क्वचित् ॥१२॥
रुद्रो हरिर्हरश्चैव तथान्ये च सुरेश्वराः । भक्त्या परमया तस्य नित्यं दर्शनकाङ्क्षिणः ॥१३॥
बहुनात्र किमुक्तेन शिवे भक्त्या विमुच्यते । प्रसादाद्देवताभक्तिः प्रसादो भक्तिसंभवः ॥
यथेहाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः ॥१४॥
तस्मादीशप्रसादार्थं यूयं गत्वा भुवं द्विजाः । दीर्घसत्रं समाकृध्वं यूयं वर्षसहस्रकम् ॥१५॥
अमुष्यै वाध्वरेशस्य शिवस्यैव प्रसादतः । वेदोक्तविद्यासारं तु ज्ञायते साध्यसाधनम् ॥१६॥
मुनय ऊचुः ॥
अथ किं परमं साध्यं किंवा तत्साधनं परम् । साधकः कीदृशस्तत्र तदिदं ब्रूहि तत्त्वतः ॥१७॥
ब्रह्मोवाच ॥
साध्यं शिवपदप्राप्तिः साधनं तस्य सेवनम् । साधकस्तत्प्रसादाद्योऽनित्यादिफलनिःस्पृहः ॥१८॥
कर्म कृत्वा तु वेदोक्तं तदर्पितमहाफलम् । परमेशपदप्राप्तः सालोक्यादिक्रमात्ततः ॥ १९॥
तत्तद्भक्त्यनुसारेण सर्वेषां परमं फलम् । तत्साधनं बहुविधं साक्षादीशेन बोधितम् ॥२०॥
संक्षिप्य तत्र वः सारं साधनं प्रब्रवीम्यहम् । श्रोत्रेण श्रवणं तस्य वचसा कीर्तनं तथा ॥२१॥

मनसा मननं तस्य महासाधनमुच्यते । श्रोतव्यः कीर्तितव्यश्च मन्तव्यश्च महेश्वरः ॥२२॥
इति श्रुति प्रमाणं नः साधनेनाऽमुनापरम् । साध्यं व्रजत सर्वार्थसाधनैकपरायणाः ॥२३॥
प्रत्यक्षं चक्षुषा दृष्ट्वा तत्र लोकः प्रवर्तते। अप्रत्यक्षं हि सर्वत्र ज्ञात्वा श्रोत्रेण चेष्टते ॥२४॥
तस्माच्छ्रवणमेवादौ श्रुत्वा गुरुमुखाद् बुधः। ततः संसाधयेदन्यत्कीर्तनं मननं सुधीः ॥२५॥
क्रमान्मननपर्यन्ते साधनेऽस्मिन्सुसाधिते । शिवयोगो भवेत्तेन सालोक्यादिक्रमाच्छनैः ॥२६॥
सर्वाङ्गव्याधयः पश्चात्सर्वानन्दश्च लीयते । अभ्यासात्क्लेशमेतद्वै पश्चादाद्यन्तमङ्गलम् ॥२७॥
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां साध्यसाधनखण्डे तृतीयोऽध्यायः ॥३॥
आदितः श्लोकानां समष्टयङ्काः-१०५+२७=१३२



## ॥ अथ चतुर्थोऽध्यायः ॥

मुनय ऊचुः ॥
मननं कीदृशं ब्रह्मञ्छ्रवणं चापि कीदृशम् । कीर्तनं वा कथं तस्य कीर्तयैतद्यथायथम् ॥१॥
ब्रह्मोवाच ॥
पूजाजपेशगुणरूपविलासनाम्नां युक्तिप्रियेण मनसा परिशोधनं यत् ।
तत्सन्ततं मननमीश्वरदृष्टिलभ्यं सर्वेषु साधनवरेष्वपि मुख्यमुख्यम् ॥२॥
गीतात्मना श्रुतिपदेन च भाषया वा शंभुप्रतापगुणरूपविलासनाम्नाम् ।
वाचा स्फुटं तु रसवत्स्तवनं यदस्य तत्कीर्तनं भवति साधनमत्र मध्यम् ॥३॥
येनापि केन करणेन च शब्दपुञ्जं यत्र क्वचिच्छिवपरं श्रवणेन्द्रियेण ।
स्त्रीकेलिवद्दृढतरं प्रणिधीयते यत्तद्वै बुधाः श्रवणमत्र जगत्प्रसिद्धम् ॥४॥
सत्सङ्गमेन भवति श्रवणं पुरस्तात्संकीर्तनं पशुपतेरथ तद्दृढं स्यात् ।
सर्वोत्तमं भवति तन्मननं तदन्ते सर्वं हि सम्भवति शंकर दृष्टिपाते ॥५॥
सूत उवाच ॥
अस्मिन्साधनमाहत्म्ये पुरा वृत्तं मुनीश्वराः। युष्मदर्थं प्रवक्ष्यामि शृणुध्वमवधानतः ॥६॥
पुरा मम गुरुर्व्यासः पराशरमुनेः सुतः। तपश्चचार संभ्रान्तः सरस्वत्यास्तटे शुभे ॥७॥
गच्छन्यादृछय तत्र विमानेनार्करोचिषा । सनत्कुमारो भगवान्ददर्श मम देशिकम् ॥८॥
ध्यानारूढः प्रबुद्धोऽसौ ददर्श तमजात्मजम् । प्रणिपत्याह संभ्रान्तः परं कौतूहलं मुनिः ॥९॥
दत्त्वार्घ्यमस्मै प्रददौ देवयोग्यं च विष्टिरम् । प्रसन्नः प्राह तं प्रह्वं प्रभुर्गम्भीरया गिरा ॥१०॥
सनत्कुमार उवाच ॥
सत्यं वस्तु मुने दध्याः साक्षात्करणगोचरः। स शिवोथासहायोत्र तपश्चरसि किं कृते ॥११॥
एवमुक्तः कुमारेण प्रोवाच स्वाशयं मुनिः। धर्मार्थकाममोक्षाश्च वेदमार्गे कृतादराः ॥१२॥
बहुधास्थापिता लोके मया त्वत्कृपया तथा । एवं भुतस्य मेप्येवं गुरुभूतस्य सर्वतः ॥१३॥
मुक्तिसाधनकं ज्ञानं नोदेति परमाद्भुतम् । तपश्चरामि मुक्त्यर्थं न जाने तत्र कारणम् ॥१४॥
इत्थं कुमारो भगवान्व्यासेन मुनिनार्थितः। समर्थः प्राह विप्रेन्द्रा निश्चयं मुक्तिकारणम् ॥१५॥
श्रवणं कीर्तनं शंभोर्मननं च महत्तरम् । त्रयं साधनमुक्तं च विद्यते वेदसंमतम् ॥१६॥
पुराहमथ संभ्रान्तो ह्यन्यसाधनसंभ्रमः। अचले मन्दरे शैले तपश्चरणमाचरम् ॥१७॥
शिवाज्ञया ततः प्राप्तो भगवान्नन्दिकेश्वरः। स मे दयालुर्भगवान्सर्वसाक्षी गणेश्वरः ॥१८॥
उवाच मह्यं सस्नेहं मुक्तिसाधनमुत्तमम् । श्रवणं कीर्तनं शंभोर्मननं वेदसंमतम् ॥१९॥
त्रिकं च साधनं मुक्तौ शिवेन मम भाषितम् । श्रवणादिं त्रिकं ब्रह्मन्कुरुष्वेति मुहुर्मुहुः ॥२०॥
एवमुक्त्वा ततो व्यासं सानुगो विधिनन्दनः। जगाम स्वविमानेन पदं परमशोभनम् ॥२१॥
एवमुक्तं समासेन पूर्ववृत्तान्तमुत्तमम् ।

ऋषय ऊचुः ॥
श्रवणादित्रयं सूत मुक्त्योपायस्त्वयेरितः ॥२२॥
श्रवणादित्रिकेऽशक्तः किं कृत्वा मुच्यते जनः। अयत्नेनैव मुक्तिः स्यात्कर्म णा केन हेतुना ॥२३॥
इति श्रीशिवमहापुराणे प्रथमायां विद्येश्वरसंहितायां साध्यसाधनखण्डे चतुर्थोऽध्यायः ॥४॥
आदितः श्लोकानां समष्ट्यङ्काः-१३२+२३=१५५



## ॥ अथ पञ्चमोऽध्यायः ॥

सूत उवाच ॥
श्रवणादित्रिकेऽशक्तो लिङ्गं बेरं च शाङ्करम् । संस्थाप्य नित्यमभ्यर्च्य तरेत्संसारसागरम् ॥१॥
अपि द्रव्यं वहेदेव यथाबलमवञ्चयन् । अर्पयेल्लिङ्गबेरार्थमर्चयेदपि संततम् ॥२॥
मण्डपं गोपुरं तीर्थं मठं क्षेत्रं तथोत्सवम् । वस्त्रं गन्धं च माल्यं च धूपं दीपं च भक्तितः ॥३॥
विविधान्नं च नैवेद्यमपूपव्यञ्जनैर्युतम् । छत्रं ध्वजं च व्यजनं चामरं चापि साङ्गकम् ॥४॥
राजोपचारवत्सर्वं धारयेल्लिङ्गबेरयोः। प्रदक्षिणां नमस्कारं यथाशक्ति जपं तथा ॥५॥
आवाहनादिसर्गान्तं नित्यं कुर्यात्सुभक्तितः। इत्थमभ्यर्च्यर्यन्देवं लिङ्गेबेरे च शाङ्करे ॥६॥
सिद्धिमेति शिवप्रीत्या हित्वापि श्रवणादिकम् ।लिङ्गबेरार्चनामात्रान्मुक्ताः पुर्वे महाजनाः ॥७॥
मुनय ऊचुः ॥
बेरमात्रे तु सर्वत्र पूज्यन्ते देवतागणाः । लिङ्गेबेरे च सर्वत्र कथं सम्पूज्यते शिवः ॥८॥
सूत उवाच ॥
अहो मुनीश्वराः पुण्यं प्रश्नमेतन्महाद्भुतम् । अत्र वक्ता महादेवो नान्योऽस्ति पुरुषः क्वचित् ॥९॥
शिवेनोक्तं प्रवक्ष्यामि क्रमाद्गुरुमुखाच्छ्रुतम् । शिवैको ब्रह्मरूपत्वान्निष्कलः परिकीर्तितः ॥१०॥
रूपित्वात्सकलस्तद्वत्तस्मात्सकलनिष्कलः । निष्कलत्वान्निराकारं लिङ्गं तस्य समागतम् ॥११॥
सकलत्वात्तथा बेरं साकारं तस्य सङ्गतम् । सकलाकलरूपत्वाद्ब्रह्मशब्दाभिधः परः ॥१२॥
अपि लिङ्गे च बेरे च नित्यमभ्यर्च्यते जनैः । अब्रह्मत्वात्तदन्येषां निष्कलत्वं न हि क्वचित् ॥१३॥
तस्मात्ते निष्कले लिङ्गे नाराध्यन्ते सुरेश्वराः । अब्रह्मत्वाच्च जीवत्वात्तथान्ये देवतागणाः ॥१४॥
तूष्णीं सकलमात्रत्वादर्च्यन्ते बेरमात्रके । जीवत्वं शंकरान्येषां ब्रह्मत्वं शंकरस्य च ॥१५॥
वेदान्तसारसंसिद्धं प्रणवार्थे प्रकाशनात् । एवमेव पुरा पृष्टो मन्दरे नन्दिकेश्वरः ॥१६॥
सनत्कुमारमुनिना ब्रह्मपुत्रेण धीमता ।
सनत्कुमार उवाच ॥
शिवान्यदेववश्यानां सर्वेषामपि सर्वतः ॥१७॥
बेरमात्रं च पूजार्थं श्रुतं दृष्टं च भूरिशः । शिवमात्रस्य पूजायां लिङ्गं बेरं च दृश्यते ॥१८॥
अतस्तद्ब्रूहि कल्याण तत्त्वं मे साधुबोधनम् ।
नन्दिकेश्वर उवाच ॥
अनुत्तरमिमं प्रश्नं रहस्यं ब्रह्मलक्षणम् ॥१९॥
कथयामि शिवेनोक्तं भक्तियुक्तस्य तेऽनघ । शिवस्य ब्रह्मरूपत्वान्निष्कलत्वाच्च निष्कलम् ॥२०॥
लिङ्गं तस्यैव पूजायां सर्ववेदेषु संमतम् ।तस्यैव सकलत्वाच्च तथा सकलनिष्कलम् ॥२१॥
सकलं च तथा बेरं पूजायां लोकसंमतम् । शिवान्येषां च जीवत्वात्सकलत्वाच्च सर्वतः ॥२२॥
बेरमात्रं च पूजायां सम्मतं वेदनिर्णये । स्वाविर्भावे च देवानां सकलं रूपमेव हि ॥२३॥
शिवस्य लिङ्गं बेरं च दर्शने दृश्यते खलु ।
सनत्कुमार उवाच ॥
उक्तं त्वया महाभाग लिङ्गबेरप्रचारणम् ॥२४॥

शिवस्य च तदन्येषां विभज्य परमार्थतः।तस्मात्तदेव परमं लिङ्गबेरादिसंभवम्॥२५॥
श्रोतुमिच्छामि योगीन्द्र लिङ्गाविर्भावलक्षणम्।
नन्दिकेश्वर उवाच॥
शृणु वत्स भवत्प्रीत्या वक्ष्यामि परमार्थतः॥२६॥
पुराकल्पे महाकाले प्रपन्ने लोकविश्रुते। आयुध्येतां महात्मानौ ब्रह्मविष्णू परस्परम्॥२७॥
तयोर्मानं निराकर्तुं तन्मध्ये परमेश्वरः। निष्कलस्तम्भरूपेण स्वरूपं समदर्शयत्॥२८॥
ततः स्वलिङ्गचिह्नत्वात्स्तम्भतो निष्कलं शिवः। स्वलिङ्गं दर्शयामास जगतां हितकाम्यया॥२९॥
तदाप्रभृति लोकेषु निष्कलं लिङ्गमैश्वरम्।सकलं च तथा बेरं शिवस्यैव प्रकल्पितम्॥३०॥
शिवान्येषः तु देवानां बेरमात्रं प्रकल्पितम्।तत्तद्बेरं तु देवानां तत्तद्भोगप्रदं शुभम्॥
शिवस्य लिङ्गबेरत्वं भोगमोक्षप्रदं शुभम्॥३१॥
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां पञ्चमोऽध्यायः॥५॥
आदितः श्लोकानां समष्ट्यङ्काः-१५५+३१=१८६



## ॥ अथ षष्ठोऽध्यायः ॥

नन्दिकेश्वर उवाच॥
पुरा कदाचिद्योगीन्द्र विष्णुर्विषधरासनः। सुष्वाप परया भूत्या स्वानुगैरपि संवृतः॥१॥
यदृच्छया गतस्तत्र ब्रह्मा ब्रह्मविदांवरः। अपृच्छत्पुण्डरीकाक्षं शयनं सर्वसुन्दरम्॥२॥
कस्त्वं पुरुषवच्छेषे दृष्ट्वा मामपि दृप्तवत्। उत्तिष्ठ वत्स मां पश्य तव नाथमिहागतम्॥३॥
आगतं गुरुमाराध्यं दृष्ट्वा यो दृप्तवच्चरेत्। द्रोहिणस्तस्य मूढस्य प्रायश्चित्तं विधीयते॥४॥
इति श्रुत्वा वचः क्रुद्धो बहिः शान्तवदाचरत्। स्वस्ति ते स्वागतं वत्स तिष्ठ पीठमितो विश॥५॥
किमु ते व्याग्रवद्वक्त्रं विभाति विषमेक्षणम्।
ब्रह्मोवाच॥
वत्स विष्णो महामानमागतं कालवेगतः॥६॥
पितामहश्च जगतः पाता च तव वत्सक।
विष्णुरुवाच॥
मत्स्थं जगदिदं वत्स मनुषे त्वं हि चोरवत्॥७॥
मन्नाभिकमलाज्जातः पुत्रस्त्वं भाषसे वृथा।
नन्दिकेश्वर उवाच॥
एवं हि वदतोस्तत्र मुग्धयोरजयोस्तदा॥८॥
अहमेव बरो न त्वमहं प्रभुरहं प्रभुः। परस्परं हन्तुकामौ चक्रतुः समरोद्यमम्॥९॥
युयुधातेऽमरौ वीरौ हंसपक्षीन्द्रवाहनौ। वैरंच्या वैष्णवाश्चैवं मिथो युयुधिरे तदा॥१०॥
तावद्विमानगतयः सर्वा वै देवजातयः। दिदृक्षवः समाजग्मुः समरं तं महाद्भुतम्॥११॥
क्षिपन्तः पुष्पवर्षाणि पश्यन्तः स्वैरमम्बरे। सुपर्णवाहनस्तत्र क्रुद्धो वै ब्रह्मवक्षसि॥१२॥
मुमोच बाणानसहानस्त्रांश्च विविधान्बहून्। मुमोचाऽथ विधिः क्रुद्धो विष्णोरुरसि दुःसहान्॥१३॥
बाणाननलसंकाशानस्त्रांश्च बहुशस्तदा। तदाश्चर्यमिति स्पष्टं तयोः समरगोचरम्॥१४॥
समीक्ष्य दैवतगणाः शशंसुर्भृशमाकुलाः। ततो विष्णुः सुसंक्रुद्धः श्वसन्व्यसनकर्शितः॥१५॥
माहेश्वरास्त्रं मतिमान् संदधे ब्रह्मणोपरि। ततो ब्रह्मा भृशं क्रुद्धः कम्पयन्विश्वमेव हि॥१६॥
अस्त्रं पाशुपतं घोरं संदधे विष्णुवक्षसि। ततस्तदुत्थितं व्योम्नि तपनायुतसन्निभम्॥१७॥
सहस्रमुखमत्युग्रं चण्डवातभयङ्करम्। अस्त्रद्वयमिदं तत्र ब्रह्मविष्ण्वोर्भयङ्करम्॥१८॥
इत्थं बभूव समरो ब्रह्मविष्ण्वोः परस्परम्। ततो देवगणाः सर्वे विषण्णा भृशमाकुलाः॥

ऊचुः परस्परं तात राजक्षोभे यथा द्विजाः ॥१९॥
सृष्टिः स्थितिश्च संहारस्तिरो भावोप्यनुग्रहः। यस्मात्प्रवर्तते तस्मै ब्रह्मणे च त्रिशूलिने ॥२०॥
अशक्यमन्यैर्यदनुग्रहं विना । तृणक्षयोप्यत्र यदृच्छया क्वचित् ॥२१॥
इति देवाभयं कृत्वा विचिन्वन्तः शिवक्षयम् । जग्मुः कैलासशिखरं यत्रास्ते चन्द्रशेखरः ॥२२॥
दृष्ट्वैवममरा हृष्टाः पदन्तत्पारमेश्वरम् । प्रणेमुः प्रणवाकारं प्रविष्टास्तत्र सद्मनि ॥२३॥
तेपि तत्र सभामध्ये मण्डपे मणिविष्टरे। विराजमानमुमया ददृशुर्देवपुङ्गवम् ॥२४॥
सव्योत्तरेतरपदं तदर्हितकरां बुजम् । स्वगणैः सर्वतो जुष्टं सर्वलक्षणलक्षितम् ॥२५॥
वीज्यमानं विशेषजैः स्त्रीजनैस्तीव्रभावनैः। शस्यमानं सदावेदैरनुगृह्णन्तमीश्वरम् ॥२६॥
दृष्ट्वैवमीशममराः सन्तोषसलिलेक्षणाः। दण्डवद्दूरतो वत्स नमश्चक्रुर्महागणाः ॥२७॥
तानवेक्ष्य पतिर्देवान्समीपे चाह्वयद्गणैः। अथ संह्लादयन्देवान्देवो देवशिखामणिः ॥
अवोचदर्थगम्भीरं वचनं मधुमङ्गलम् ॥२८॥
इति श्रीशिवमहापुराणे विद्येश्वरसंहितायां षष्ठोऽध्यायः ॥६॥
आदितः श्लोकानां समष्ट्यङ्काः-१८६+२८=२१४



## ॥ अथ सप्तमोऽध्यायः ॥

ईश्वर उवाच ॥
वत्सकाः स्वस्तिवः कच्चिद्वर्तते मम शासनात् । जगच्च देवतावंशः स्वस्वकर्मणि किं नवा ॥१॥
प्रागेव विदितं युद्धं ब्रह्मविष्ण्वोर्मयासुराः। भवतामभितापेन पौनरुक्त्येन भाषितम् ॥२॥
इति सस्मितया माध्व्या कुमारपरिभाषया। समतोषयदंबायाः स पतिस्तत्सुरव्रजम् ॥३॥
अथ युद्धाङ्गणं गन्तुं हरिधात्रोरधीश्वरः। आज्ञापयद्गणेशानां शतं तत्रैव संसदि ॥४॥
ततो वाद्यं बहुविधं प्रयाणाय परेशितुः। गणेश्वराश्च संनद्धा नानावाहनभूषणाः ॥५॥
प्रणवाकारमाद्यन्तं पञ्चमण्डलमण्डितम् । आरुरोह रथं भद्रमम्बिकापतिरीश्वरः ॥
ससूनुगणमिन्द्राद्याः सर्वेप्यनुययुः सुराः ॥६॥
चित्रध्वजव्यजनचामरपुष्पवर्षसङ्गतिनृत्यनिवहैरपि वाद्यवर्गैः।
संमानितः पशुपतिः परया च देव्या साकं तयोः समरभूमिमगात्ससैन्यः ॥७॥
समीक्ष्यं तु तयोर्युद्धं निगूढोऽभ्रं समास्थितः। समाप्तवाद्यनिर्घोषः शान्तोरुगणनिःस्वनः ॥८॥
अथ ब्रह्माच्युतौ वीरौ हन्तुकामौ परस्परम् । माहेश्वरेण चाऽस्त्रेण तथा पाशुपतेन च ॥९॥
अस्त्रज्वालैरथो दग्धं ब्रह्मविष्ण्वोर्जगत्त्रयम् । ईशोपि तं निरीक्ष्याथ ह्यकालप्रलयं भृशम् ॥१०॥
महानलस्तम्भविभीषणाकृतिर्बभूव तन्मध्यतले स निष्कलः ॥११॥
ते अस्त्रे चापि सज्वाले लोकसंहरणक्षमे । निपतेतुः क्षणे नैव ह्याविर्भूते महानले ॥१२॥
दृष्ट्वा तदद्भुतं चित्रमस्त्रशान्तिकरं शुभम् । किमेतदद्भुताकारमित्यूचुश्च परस्परम् ॥१३॥
अतीन्द्रियमिदं स्तम्भमग्निरूपं किमुत्थितम् । अस्योर्ध्वमपि चाधश्च आवयोर्लक्ष्यमेव हि ॥१४॥
इति व्यवसितौ वीरौ मिलितौ वीरमानिनौ । तत्परौ तत्परीक्षार्थं प्रतस्थातेऽथ सत्वरम् ॥१५॥
आवयोर्मिश्रयोस्तत्र कार्यमेकं न संभवेत् । इत्युक्त्वा सूकरतनुर्विष्णुस्तस्यादिमीयिवान् ॥१६॥
तथा ब्रह्माहंसतनुस्तदन्तं वीक्षितुं ययौ । भित्त्वा पातालनिलयं गत्वा दूरतरं हरिः ॥१७॥
नाऽपश्यत्तस्य संस्थानं स्तम्भस्यानलवर्चसः। श्रान्तः स सूकरहरिः प्रापपूर्वं रणाङ्गणम् ॥१८॥
अथ गच्छंस्तु व्योम्ना च विधिस्तात पिता तव। ददर्श केतकी पुष्पं किञ्चिद्विच्युतमद्भुतम् ॥१९॥
अतिसौरभ्यमम्लानं बहुवर्षच्युतं तथा । अन्वीक्ष्य च तयोः कृत्यं भगवान्परमेश्वरः ॥२०॥
परिहासं तु कृतवान्कम्पनाच्चलितं शिरः। तस्मात्तावनुगृह्णातुं च्युतं केतकमुत्तमम् ॥२१॥
किं त्वं पतसि पुष्पेश पुष्पराट् केन वा धृतम् । आदिमस्याप्रमेयस्य स्तम्भमध्याच्च्युतश्चिरम् ॥२२॥

स हि सर्वजगन्नाथः सिसृक्षुरखिलं जगत् । ब्रह्माणं विदधे साक्षात्पुत्रमग्रे सनातनम् ॥२८॥
तस्मै प्रथमपुत्राय ब्रह्मणे विश्वयोनये । विद्याश्चेमा ददौ पूर्वं विश्वसृष्ट्यर्थमीश्वरः ॥२९॥
पालनाय हरिं देवं रक्षाशक्तिं ददौ ततः । मध्यमं तनयं विष्णुं पातारं ब्रह्मणोऽपि हि ॥३०॥
लब्धविद्येन विधिना प्रजासृष्टिं वितन्वता । प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ॥३१॥
अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः । प्रवृत्तिस्सर्वशास्त्राणां तन्मुखादभवत्ततः ॥३२॥
यदास्य विस्तरं शक्ता नाधिगंतुं प्रजा भुवि । तदा विद्यासमासार्थं विश्वेश्वरनियोगतः ॥३३॥
द्वापरान्तेषु विश्वात्मा विष्णुर्विश्वंभरः प्रभुः । व्यासनाम्ना चरत्यस्मिन्नवतीर्य महीतले ॥३४॥
एवं व्यस्ताश्च वेदाश्च द्वापरेद्वापरे द्विजाः । निर्मितानि पुराणानि अन्यानि च ततः परम् ॥३५॥
स पुनर्द्वापरे चास्मिन्कृष्णद्वैपायनाख्यया । अरण्यामिव हव्याशी सत्यवत्यामजायत ॥३६॥
संक्षिप्य स पुनर्वेदांश्चतुर्धा कृतवान्मुनिः । व्यस्तवेदतया लोके वेदव्यास इति श्रुतः ॥३७॥
पुराणानाञ्च संक्षिप्तं चतुर्लक्षप्रमाणतः । अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥३८॥
यो विद्याच्चतुरो वेदान् साङ्गोपणिषदान्द्विजः । न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥३९॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥४०॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥४१॥
दशधा चाष्टधा चैतत्पुराणमुपदिश्यते । बृहत्सूक्ष्मप्रभेदेन मुनिभिस्तत्त्ववित्तमैः ॥४२॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । भविष्यं नारदीयं च मार्कण्डेयमतः परम् ॥४३॥
आग्नेयं ब्रह्मवैवर्तं लैंगं वाराहमेव च । स्कान्दं च वामनं चैव कौर्म्यं मात्स्यं च गारुडम् ॥४४॥
ब्रह्माण्डं चेति पुण्योऽयं पुराणानामनुक्रमः । तत्र शैवं तुरीयं यच्छार्वं सर्वार्थसाधकम् ॥४५॥
ग्रंथो लक्षप्रमाणं तद्व्यस्तं द्वादशसंहितम् । निर्मितं तच्छिवेनैव तत्र धर्मः प्रतिष्ठितः ॥४६॥
तदुक्तेनैव धर्मेण शैवास्त्रैवर्णिका नराः । तस्माद्विमुकुतिमन्विच्छञ्छिवमेव समाश्रयेत् ॥४७॥
तमाश्रित्यैव देवानामपि मुक्तिर्न चान्यथा ॥४८॥
यदिदं शैवमाख्यातं पुराणं वेदसंमितम् । तस्य भेदान्समासेन ब्रुवतो मे निबोधत ॥४९॥
विद्येश्वरं तथा रौद्रं वैनायकमनुत्तमम् । औमं मातृपुराणं च रुद्रैकादशकं तथा ॥५०॥
कैलासं शतरुद्रं च शतरुद्राख्यमेव च । सहस्रकोटिरुद्राख्यं वायवीयं ततःपरम् ॥५१॥
धर्मसंज्ञं पुराणं चेत्येवं द्वादश संहिताः । विद्येशं दशसाहस्रमुदितं ग्रंथसंख्यया ॥५२॥
रौद्रं वैनायकं चौमं मातृकाख्यं ततः परम् । प्रत्येकमष्टसाहस्रं त्रयोदशसहस्रकम् ॥५३॥
रौद्रकादशकाख्यं यत्कैलासं षट्सहस्रकम् । शतरुद्रं त्रिसाहस्रं कोटिरुद्रं ततः परम् ॥५४॥
सहस्रैर्नवभिर्युक्तं सर्वार्थज्ञानसंयुतम् । सहस्रकोटिरुद्राख्यमेकादशसहस्रकम् ॥५५॥
चतुस्सहस्रसंख्येयं वायवीयमनुत्तमम् । धर्मसंज्ञं पुराणं यत्तद्द्वादशसहस्रकम् ॥५६॥
तदेवं लक्षमुद्दिष्टं शैवं शाखाविभेदतः । पुराणं वेदसारं तद्भुक्तिमुक्तिफलप्रदम् ॥५७॥
व्यासेन तत्तु संक्षिप्तं चतुर्विंशत्सहस्रकम् । शैवन्तत्र पुराणं वै चतुर्थं सप्तसंहितम् ॥५८॥
विद्येश्वराख्या तत्राद्या द्वितीया रुद्रसंहिता । तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका ॥५९॥
पञ्चमी कथिता चोमा षष्ठी कैलाससंहिता । सप्तमी वायवीयाख्या सप्तैवं संहिता इह ॥६०॥
विद्येश्वरं द्विसाहस्रं रौद्रं पञ्चशतायुतम् । त्रिंशत्तथा द्विसाहस्रं सार्धैकशतमीरितम् ॥६१॥
शतरुद्रन्तथा कोटिरुद्रं व्योमयुगाधिकम् । द्विसाहस्रं च द्विशतं तथोमं भूसहस्रकम् ॥६२॥
चत्वारिंशत्साष्टशतं कैलासं भूसहस्रकम् । चत्वारिंशच्च द्विशतं वायवीयमतः परम् ॥६३॥
चतुस्साहस्रसंख्याकमेवं संख्याविभेदतः । श्रुतम्परमपुण्यन्तु पुराणं शिवसंज्ञकम् ॥६४॥
चतुःसाहस्रकं यत्तु वायवीयमुदीरितम् । तदिदं वर्तयिष्यामि भागद्वयसमन्वितम् ॥६५॥
नावेदविदुषे वाच्यमिदं शास्त्रमनुत्तमम् । न चैवाश्रद्धधानाय नापुराणविदे तथा ॥६६॥
परीक्षिताय शिष्याय धार्मिकायानसूयवे । प्रदेयं शिवभक्ताय शिवधर्मानुसारिणे ॥६७॥
पुराणसंहिता यस्य प्रसादान्मयि वर्तते । नमो भगवते तस्मै व्यासायामिततेजसे ॥६८॥

**इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे विद्यावतारकथनं नाम प्रथमोऽध्यायः ॥१॥**
**आदितः श्लोकानां समष्टयङ्काः-२०,१३९+६८=२०,२०७**



## ॥ अथ द्वितीयोऽध्यायः ॥

सूत उवाच ॥
पुरा कालेन महता कल्पेतीते पुनःपुनः । अस्मिन्नुपस्थिते कल्पे प्रवृत्ते सृष्टिकर्मणि ॥१॥
प्रतिष्ठितायां वार्तायां प्रबुद्धासु प्रजासु च । मुनीनां षट्कुलीयानां ब्रुवतामितरेतरम् ॥२॥
इदं परमिदं नेति विवादस्सुमहानभूत् । परस्य दुर्निरूपत्वान्न जातस्तत्र निश्चयः ॥३॥
तेऽभिजग्मुर्विधातारं द्रष्टुं ब्रह्माणमव्ययम् । यत्रास्ते भगवान् ब्रह्मा स्तूयमानस्सुरासुरैः ॥४॥
मेरुशृंगे शुभे रम्ये देवदानवसंकुले । सिद्धचारणसंवादे यक्षगन्धर्वसेविते ॥५॥
विहंगसंघसंघुष्टे मणिविद्रुमभूषिते । निकुंजकंदरदरीगृहानिर्झरशोभिते ॥६॥
तत्र ब्रह्मवनं नाम नानामृगसमाकुलम् । दशयोजनविस्तीर्णं शतयोजनमायतम् ॥७॥
सुरसामलपानीयपूर्णरम्यसरोवरम् । मत्तभ्रमरसंछन्नरम्यपुष्पितपादपम् ॥८॥
तरुणादित्यसंकाशं तत्र चारु महत्पुरम् । दुर्धर्षबलदृप्तानां दैत्यदानवरक्षसाम् ॥९॥
तप्तजांबूनदमयं प्रांशुप्राकारतोरणम् । निर्व्यूहवलभीकूटप्रतोलीशतमण्डितम् ॥१०॥
महार्हमणिचित्राभिर्लेलिहानमिवांबरम् । महाभवनकोटीभिरनेकाभिरलंकृतम् ॥११॥
तस्मिन्निवसति ब्रह्मा सभ्यैः सार्धं प्रजापतिः । तत्र गत्वा महात्मानं साक्षाल्लोकपितामहम् ॥१२॥
ददृशुर्मुनयो देवा देवर्षिगणसेवितम् । शुद्धचामीकरप्रख्यं सर्वाभरणभूषितम् ॥१३॥
प्रसन्नवदनं सौम्यं पद्मपत्रायतेक्षणम् । दिव्यकांतिसमायुक्तं दिव्यगन्धानुलेपनम् ॥१४॥
दिव्यशुक्लांबरधरं दिव्यमालाविभूषितम् । सुरासुरेन्द्रयोगीन्द्रवंद्यमानपदांबुजम् ॥१५॥
सर्वलक्षणयुक्ताङ्ग्या लब्धचामरहस्तया । भ्राजमानं सरस्वत्या प्रभयेव दिवाकरम् ॥१६॥
तं दृष्ट्वा मुनयस्सर्वे प्रसन्नवदनेक्षणाः । शिरस्यंजलिमाधाय तुष्टुवुस्सुरपुंगवम् ॥१७॥
मुनय ऊचुः ॥
नमस्त्रिमूर्तये तुभ्यं सर्गस्थित्यन्तहेतवे । पुरुषाय पुराणाय ब्रह्मणे परमात्मने ॥१८॥
नमः प्रधानदेहाय प्रधानक्षोभकारिणे । त्रयोविंशतिभेदेन विकृतायाविकारिणे ॥१९॥
नमो ब्रह्माण्डदेहाय ब्रह्मांडोदरवर्तिने । तत्र संसिद्धकार्याय संसिद्धकरणाय च ॥२०॥
नमोस्तु सर्वलोकाय सर्वलोकविधायिने । सर्वात्मदेहसंयोग वियोगविधिहेतवे ॥२१॥
त्वयैव निखिलं सृष्टं संहृतं पालितं जगत् । तथापि मायया नाथ न विद्मस्त्वां पितामह ॥२२॥
सूत उवाच ॥
एवं ब्रह्मा महाभागैर्महर्षिभिरभिष्टुतः । प्राह गंभीरया वाचा मुनीन् प्रह्लादयन्निव ॥२३॥
ब्रह्मोवाच ॥
ऋषयो हे महाभागा महासत्त्वा महौजसः । किमर्थं सहितास्सर्वे यूयमत्र समागताः ॥२४॥
तमेवंवादिनं देवं ब्रह्माणं ब्रह्मवित्तमाः । वाग्भिर्विनयगर्भाभिस्सर्वे प्रांजलयोऽब्रुवन् ॥२५॥
मुनय ऊचुः ॥
भगवन्नन्धकारेण महता वयमावृताः । खिन्ना विवदमानाश्च न पश्यामोऽत्र यत्परम् ॥२६॥
त्वं हि सर्वजगद्धाता सर्वकारणकारणम् । त्वया ह्यविदितं नाथ नेह किंचन विद्यते ॥२७॥
कः पुमान् सर्वसत्त्वेभ्यः पुराणः पुरुषः परः । विशुद्धः परिपूर्णश्च शाश्वतः परमेश्वरः ॥२८॥
केनैव चित्रकृत्येन प्रथमं सृज्यते जगत् । तत्त्वं वद महाप्राज्ञ स्वसंदेहापनुत्तये ॥२९॥
एवं पृष्टस्तदा ब्रह्मा विस्मयस्मेरवीक्षणः । देवानां दानवानां च मुनीनामपि सन्निधौ ॥३०॥
उत्थाय सुचिरं ध्यात्वा रुद्र इत्युद्धरन् गिरिम् । आनंदक्लिन्नसर्वाङ्गः कृताञ्जलिरभाषत ॥३१॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे मुनिप्रस्ताववर्णनं नाम द्वितीयोऽध्यायः ॥२॥
आदितः श्लोकानां समष्टयङ्काः-२०,२०७+३१=२०,२३८



## ॥ अथ तृतीयोऽध्यायः ॥

ब्रह्मोवाच ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं यस्य वै विद्वान्न बिभेति कुतश्चन ॥१॥
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् । सह भूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥२॥
कारणानां च यो धाता ध्याता परमकारणम् । न संप्रसूयतेऽन्यस्मात्कुतश्चन कदाचन ॥३॥
सर्वैश्वर्येण संपन्नो नाम्ना सर्वेश्वरः स्वयम् । सर्वैर्मुमुक्षुभिर्ध्येयश्शंभुराकाशमध्यगः ॥४॥
योऽग्रे मां विदधे पुत्रं ज्ञानं च प्रहिणोति मे । तत्प्रसादान्मयालब्धं प्राजापत्यमिदं पदम् ॥५॥
ईशो वृक्ष इव स्तब्धो य एको दिवि तिष्ठति । येनेदमखिलं पूर्णं पुरुषेण महात्मना ॥६॥
एको बहूनां जन्तूनां निष्क्रियाणां च सक्रियः । य एको बहुधा बीजं करोति स महेश्वरः ॥७॥
जीवैरेभिरिमांल्लोकान्सर्वानीशो य ईशते । य एको भागवान्रुद्रो न द्वितीयोऽस्ति कश्चन ॥८॥
सदा जनानां हृदये संनिविष्टोऽपि यः परैः । अलक्ष्यो लक्षयन्विश्वमधितिष्ठति सर्वदा ॥९॥
यस्तु कालात्प्रमुक्तानि कारणान्यखिलान्यपि । अनन्तशक्तिरेवैको भगवानधितिष्ठति ॥१०॥
न यस्य दिवसो रात्रिर्न समानो न चाधिकः । स्वभाविकी पराशक्तिर्नित्या ज्ञानक्रिये अपि ॥११॥
यदिदं क्षरमव्यक्तं यदप्यमृतमक्षरम् । तावुभावक्षरात्मानावेको देवः स्वयं हरः ॥१२॥
ईशते तदभिध्यानाद्योजनासत्त्वभावनः । भूयो ह्यस्य पशोरन्ते विश्वमाया निवर्तते ॥१३॥
यस्मिन्न भासते विद्युन्न सूर्यो न च चन्द्रमाः । यस्य भासा विभातीदमित्येषा शाश्वती श्रुतिः ॥१४॥
एको देवो महादेवो विज्ञेयस्तु महेश्वरः । न तस्य परमं किञ्चित्पदं समधिगम्यते ॥१५॥
अयमादिरनाद्यन्तस्स्वभावादेव निर्मलः । स्वतन्त्रः परिपूर्णश्च स्वेच्छाधीनश्चराचरः ॥१६॥
अप्राकृतवपुः श्रीमांल्लक्ष्यलक्षणवर्जितः । अयं मुक्तो मोचकश्च ह्यकालः कालचोदकः ॥१७॥
सर्वोपरिकृतावासस्सर्वावासश्च सर्ववित् । षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतिः ॥१८॥
उत्तरोत्तरभूतानामुत्तरश्च निरुत्तरः । अनन्तानन्तसन्दोहमकरंदमधुव्रतः ॥१९॥
अखण्डजगदण्डानां पिंडीकरणपंडितः । औदार्यवीर्यगांभीर्यमाधुर्यमकरालयः ॥२०॥
नैवास्य सदृशं वस्तु नाधिकं चापि किंचन । अतुलः सर्वभूतानां राजराजश्च तिष्ठति ॥२१॥
अनेन चित्रकृत्येन प्रथमं सृज्यते जगत् । अंतकाले पुनश्चेदं तस्मिन्प्रलयमेष्यते ॥२२॥
अस्य भूतानि वश्यानि अयं सर्वनियोजकः । अयं तु परया भक्त्या दृश्यते नान्यथा क्वचित् ॥२३॥
व्रतानि सर्वदानानि तपांसि नियमास्तथा । कथितानि पुरा सद्भिर्भावार्थं नात्र संशयः ॥२४॥
हरिश्चाहं च रुद्रश्च तथान्ये च सुरासुराः । तपोभिरुग्रैरद्यापि तस्य दर्शनकांक्षिणः ॥२५॥
अदृश्यः पतितैर्मूढैर्दुर्जनैरपि कुत्सितैः । भक्तैरन्तर्बहिश्चापि पूज्यः संभाष्य एव च ॥२६॥
तदिदं त्रिविधं रूपं स्थूलं सूक्ष्मं ततः परम् । अस्मदाद्यमरैर्दृश्यं स्थूलं सूक्ष्मं तु योगिभिः ॥२७॥
ततः परं तु यन्नित्यं ज्ञानमानंदमव्ययम् । तन्निष्ठैस्तत्परैर्भक्तैर्दृश्यं तद्व्रतमाश्रितैः ॥२८॥
बहुनात्र किमुक्तेन गुह्याद्गुह्यतरं परम् । शिवे भक्तिर्न सन्देहस्तया युक्तो विमुच्यते ॥२९॥
प्रसादादेव सा भक्तिः प्रसादो भक्तिसंभवः । यथा चाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः ॥३०॥
प्रसादपूर्विका एव पशोस्सर्वत्र सिद्धयः । स एव साधनैरन्ते सर्वैरपि च साध्यते ॥३१॥
प्रसादसाधनं धर्मस्स च वेदेन दर्शितः । तदभ्यासवशात्साम्यं पूर्वयोः पुण्यपापयोः ॥३२॥
साम्यात्प्रसादसंपर्को धर्मस्यातिशयस्ततः । धर्मातिशयमासाद्य पशोः पापपरिक्षयः ॥३३॥
एवं प्रक्षीणपापस्य बहुभिर्जन्मभिः क्रमात् । सांबे सर्वेश्वरे भक्तिर्ज्ञानपूर्वा प्रजायते ॥३४॥
भावानुगुणमीशस्य प्रसादो व्यतिरिच्यते । प्रसादात्कर्मसन्त्यागः फलतो न स्वरूपतः ॥३५॥

तस्मात्कर्मफलत्यागाच्छिवधर्मान्वयः शुभः । स च गु र्वनपेक्षश्च तदपेक्ष इति द्विधा ॥३६॥
तत्रानपेक्षात्सापेक्षो मुख्यः शतगुणाधिकः । शिवधर्मान्वयस्यास्य शिवज्ञानसमन्वयः ॥३७॥
ज्ञानान्वयवशात्पुंसः संसारे दोषदर्शनम् । ततो विषयवैराग्यं वैराग्याद्भावसाधनम् ॥३८॥
भावसिद्ध्युपपन्नस्य ध्याने निष्ठा न कर्मणि । ज्ञानध्यानाभियुक्तस्य पुंसो योगः प्रवर्तते ॥३९॥
योगेन तु परा भक्तिः प्रसादस्तदनन्तरम् । प्रसादान्मुच्यते जन्तुर्मुक्तः शिवसमो भवेत् ॥४०॥
अनुग्रहप्रकारस्य क्रमोऽयमविवक्षितः । यादृशी योग्यता पुंसस्तस्य तादृगनुग्रहः ॥४१॥
गर्भस्थो मुच्यते कश्चिज्जायमानस्तथापरः । बालो वा तरुणो वाथ वृद्धो वा मुच्यते परः ॥४२॥
तिर्यग्योनिगतः कश्चिन्मुच्यते नारकोऽपरः । अपरस्तु पदं प्राप्तो मुच्यते स्वपदक्षये ॥४३॥
कश्चित्क्षीणपदो भूत्वा पुनरावर्त्य मुच्यते । कश्चिदध्वगतस्तस्मिन् स्थित्वास्थित्वा विमुच्यते ॥४४॥
तस्मान्नैकप्रकारेण नराणां मुक्तिरिष्यते । ज्ञानभावानुरूपेण प्रसादेनैव निर्वृतिः ॥४५॥
तस्मादस्य प्रसादार्थं वाङ्मनोदोषवर्जिताः । ध्यायन्तश्शिवमेवैकं सदारतनयाग्नयः ॥४६॥
तन्निष्ठास्तत्परास्सर्वे तद्युक्तास्तदुपाश्रयाः । सर्वक्रियाः प्रकुर्वाणास्तमेव मनसागताः ॥४७॥
दीर्घसूत्रसमारब्धं दिव्यवर्षसहस्रकम् । सत्रान्ते मन्त्रयोगेन वायुस्तत्र गमिष्यति ॥४८॥
स एव भवतः श्रेयः सोपायं कथयिष्यति । ततो वाराणसी पुण्या पुरी परमशोभना ॥४९॥
गंतव्या यत्र विश्वेशो देव्या सह पिनाकधृक् । सदा विहरति श्रीमान् भक्तानुग्रहकारणात् ॥५०॥
तत्राश्चर्यं महद्दृष्ट्वा मत्समीपं गमिष्यथ । ततो वः कथयिष्यामि मोक्षोपाय द्विजोत्तमाः ॥५१॥
येनैकजन्मना मुक्तिर्युष्मत्करतले स्थिता । अनेकजन्मसंसारबन्धनिर्मोक्षकारिणी ॥५२॥
एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते । यत्रास्य शीर्यते नेमिः स देशस्तपसश्शुभः ॥५३॥
इत्युक्त्वा सूर्यसंकाशं चक्रं दृष्ट्वा मनोमयम् । प्रणिपत्य महादेवं विससर्ज पितामहः ॥५४॥
तेऽपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुम् । प्रययुस्तस्य चक्रस्य यत्र नेमिरशीर्यत ॥५५॥
चक्रं तदपि संक्षिप्तं श्लक्ष्णं चारुशिलातले । विमलस्वादुपानीये निजपात वने क्वचित् ॥५६॥
तद्वनं तेन विख्यातं नैमिषं मुनिपूजितम् । अनेकयक्षगन्धर्वविद्याधरसमाकुलम् ॥५७॥
अष्टादश समुद्रस्य द्वीपानश्नन्पुरूरवाः । विलासवशमुर्वश्या यातो दैवेन चोदितः ॥५८॥
अक्रमेण हरन्मोहाद्यज्ञवाटं हिरण्मयम् । मुनिभिर्यत्र संक्रुद्धैः कुशवज्रैर्निपातितः ॥५९॥
विश्वं सिसृक्षमाणा वै यत्र विश्वसृजः पुरा । सत्रमारेभिरे दिव्यं ब्रह्मज्ञा गार्हपत्यगाः ॥६०॥
ऋषिभिर्यत्र विद्वद्भिः शब्दार्थन्यायकोविदैः । शक्तिप्रज्ञाक्रियायोगैर्विधिरासीदनुष्ठितः ॥६१॥
यत्र वेदविदो नित्यं वेदवादबहिष्कृतान् । वादजल्पबलैर्घ्नन्ति वचोभिरतिवादिनः ॥६२॥
स्फटिकमयमहीभृत्पादजाभ्यश्शिलाभ्यः प्रसरदमृतकल्पस्स्वच्छपानीयरम्यम् ।
अतिरसफलवृक्षप्रायमव्यालसत्त्वं तपस उचितमासीन्नैमिषं तन्मुनीनाम् ॥६३॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे नैमिषोपाख्यानं नाम तृतीयोऽध्यायः ॥३॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,२३८+६३=२०,३०१



## ॥ अथ चतुर्थोऽध्यायः ॥

सूत उवाच ॥

तस्मिन्देशे महाभागा मुनयश्शंसितव्रताः । अर्चयन्तो महादेवं सत्रमारेभिरे तदा ॥१॥
तच्च सत्रं प्रववृते सर्वाश्चर्यं महर्षिणाम् । विश्वं सिसृक्षमाणानां पुरा विश्वसृजामिव ॥२॥
अथ काले गते सत्रे समाप्ते भूरिदक्षिणे । पितामहनियोगेन वायुस्तत्रागमत्स्वयम् ॥३॥
शिष्यस्स्वयंभुवो देवस्सर्वप्रत्यक्षदृग्वशी । आज्ञायां मरुतो यस्य संस्थितास्सप्तसप्तकाः ॥४॥
प्रेरयञ्छश्वदंगानि प्राणाद्याभिः स्ववृत्तिभिः । सर्वभूतशरीराणां कुरुते यश्च धारणम् ॥५॥
अणिमादिभिरष्टाभिरैश्वर्यैश्च समन्वितः । तिर्यक्कालादिभिर्मेध्यैर्भुवनानि बिभर्ति यः ॥६॥

आकाशयोनिर्द्विगुणः स्पर्शशब्दसमन्वयात् । तेजसां प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः ॥७॥
तमाश्रमगतं दृष्ट्वा मुनयो दीर्घसत्रिणः । पितामहवचः स्मृत्वा प्रहर्षमतुलं ययुः ॥८॥
अभ्युत्थाय ततस्सर्वे प्रणम्यांबरसंभवम् । चामीकरमयं तस्मै विष्टरं समकल्पयन् ॥९॥
सोपि तत्र समासीनो मुनिभिस्सम्यगर्चितः । प्रतिनंद्य च तान् सर्वान् पप्रच्छ कुशलं ततः ॥१०॥
वायुरुवाच ॥
अत्र वः कुशलं विप्राः कच्चिद्वृत्ते महाक्रतौ । कच्चिद्यज्ञहनो दैत्या न बाधेरन्सुरद्विषः ॥११॥
प्रायश्चित्तं दुरिष्टं वा न कच्चित्समजायत । स्तोत्रशास्त्रगृहैर्देवान् पितॄन् पित्र्यैश्च कर्मभिः ॥१२॥
कच्चिदभ्यर्च्य युष्माभिर्विधिरासीत्स्वनुष्ठितः । निवृत्ते च महासत्रे पश्चात्किं वश्चिकीर्षितम् ॥१३॥
इत्युक्ता मुनयः सर्वे वायुना शिवभाविना । प्रहृष्टमनसः पूताः प्रत्यूचुर्विनयान्विताः ॥१४॥
मुनय ऊचुः ॥
अद्य नः कुशलं सर्वमद्य साधु भवेत्तफ । अस्मच्छ्रेयोभिवृद्ध्यर्थं भवानत्रागतो यतः ॥१५॥
शृणु चेदं पुरावृत्तं तमसाक्रान्तमानसैः । उपासितः पुरास्माभिर्विज्ञानार्थं प्रजापतिः ॥१६॥
सोप्यस्मान्नुगृह्याह शरण्यश्शरणागतान् । सर्वस्मादधिको रुद्रो विप्राः परमकारणम् ॥१७॥
तमप्रतर्क्यं याथात्म्यं भक्तिमानेव पश्यति । भक्तिश्चास्य प्रसादेन प्रसादादेव निर्वृतिः ॥१८॥
तस्मादस्य प्रसादार्थं नैमिषे सत्रयोगतः । यजध्वं दीर्घसत्रेण रुद्रं परमकारणम् ॥१९॥
तत्प्रसादेन सत्रान्ते वायुस्तत्रागमिष्यति । तन्मुखाज्ज्ञानलाभो वस्तत्र श्रेयो भविष्यति ॥२०॥
इत्यादिश्य वयं सर्वे प्रेषिता परमेष्ठिना । अस्मिन्देशे महाभाग तवागमनकांक्षिणः ॥२१॥
दीर्घसत्रं समासीना दिव्यवर्षसहस्रकम् । अतस्तवागमादन्यत्प्रार्थ्यं नो नास्ति किंचन ॥२२॥
इत्याकर्ण्य पुरावृत्तमृषीणां दीर्घसत्रिणाम् । वायुः प्रीतमना भूत्वा तत्रासीन्मुनिसंवृतः ॥२३॥
ततस्तैर्मुनिभिः पृष्टस्तेषां भावविवृद्धये । सर्गादि शार्वमैश्वर्यं समासाद वदद्विभुः ॥२४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे वायुसमागमो नाम चतुर्थोऽध्यायः ॥४॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,३०१+२४=२०,३२५



## ॥ अथ पञ्चमोऽध्यायः ॥

सूत उवाच ॥
तत्र पूर्वं महाभागा नैमिषारण्यवासिनः । प्रणिपत्य यथान्यायं पप्रच्छुः पवनं प्रभुम् ॥१॥
नैमिषीया ऊचुः ॥
भवान् कथमनुप्राप्तो ज्ञानमीश्वरगोचरम् । कथं च शिवभावस्ते ब्रह्मणोऽव्यक्तजन्मनः ॥२॥
वायुरुवाच ॥
एकोनविंशतिः कल्पो विज्ञेयः श्वेतलोहितः । तस्मिन्कल्पे चतुर्वक्त्रस्स्रष्टुकामोऽतपत्तप ॥३॥
तपसा तेन तीव्रेण तुष्टस्तस्य पिता स्वयम् । दिव्यं कौमारमास्थाय रूपं रूपवतां वरः ॥४॥
श्वेतो नाम मुनिर्भूत्वा दिव्यां वाचमुदीरयन् । दर्शनं प्रददौ तस्मै देवदेवो महेश्वरः ॥५॥
तं दृष्ट्वा पितरं ब्रह्मा ब्रह्मणोऽधिपतिं पतिम् । प्रणम्य परमज्ञानं गायत्र्या सह लब्धवान् ॥६॥
ततस्स लब्धविज्ञानो विश्वकर्मा चतुर्मुखः । असृजत्सर्वभूतानि स्थावराणि चराणि च ॥७॥
यतश्श्रुत्वामृतं लब्धं ब्रह्मणा परमेश्वरात् । ततस्तद्वदनादेव मया लब्धं तपोबलात् ॥८॥
मुनय ऊचुः ॥
किं तज्ज्ञानं त्वया लब्धं तथ्यात्तथ्यन्तरं शुभम् । यत्र कृत्वा परां निष्ठां पुरुषस्सुखमृच्छति ॥९॥
वायुरुवाच ॥
पशुपाशपतिज्ञानं यल्लब्धं तु मया पुरा । तत्र निष्ठा परा कार्या पुरुषेण सुखार्थिना ॥१०॥
अज्ञानप्रभवं दुःखं ज्ञानेनैव निवर्तते । ज्ञानं वस्तुपरिच्छेदो वस्तु च द्विविधं स्मृतम् ॥११॥

अजडं च जडं चैव नियन्तृ च तयोरपि । पशुः पाशः पतिश्चेति कथ्यते तत्त्रयं क्रमात् ॥१२॥
अक्षरं च क्षरं चैव क्षराक्षरपरं तथा । तदेतत्त्रितयं भूम्ना कथ्यते तत्त्ववेदिभिः ॥१३॥
अक्षरं पशुरित्युक्तः क्षरं पाश उदाहृतः । क्षराक्षरपरं यत्तत्पतिरित्यभिधीयते ॥१४॥
मुनय ऊचुः ॥
किं तदक्षरमित्युक्तं किं च क्षरमुदाहृतम् । तयोश्च परमं किं वा तदेतद् ब्रूहि मारुत ॥१५॥
वायुरुवाच ॥
प्रकृतिः क्षरमित्युक्तं पुरुषोऽक्षर उच्यते । ताविमौ प्रेरयत्यन्यस्स परा परमेश्वरः ॥१६॥
मुनय ऊचुः ॥
कैषा प्रकृतिरित्युक्ता क एष पुरुषो मतः । अनयोः केन सम्बन्धः कोयं प्रेरक ईश्वरः ॥१७॥
वायुरुवाच ॥
माया प्रकृतिरुद्दिष्टा पुरुषो मायया वृतः । संबन्धो मूलकर्मभ्यां शिवः प्रेरक ईश्वरः ॥१८॥
मुनय ऊचुः ॥
केयं माया समाख्याता किंरूपो मायया वृतः । मूलं कीदृक्कुतो वास्य किं शिवत्वं कुतश्शिवः ॥१९॥
वायुरुवाच ॥
माया माहेश्वरी शक्तिश्चिद्रूपो मायया वृतः । मलश्चिच्छादको नैजो विशुद्धिश्शिवता स्वतः ॥२०॥
मुनय ऊचुः ॥
आवृणोति कथं माया व्यापिनं केन हेतुना । किमर्थं चावृतिः पुंसः केन वा विनिवर्तते ॥२१॥
वायुरुवाच ॥
आवृतिर्व्यापिनोऽपि स्याद्व्यापि यस्मात्कलाद्यपि । हेतुः कर्मैव भोगार्थं निवर्तेत मलक्षयात् ॥२२॥
मुनय ऊचुः ॥
कलादि कथ्यते किं तत्कर्म वा किमुदाहृतम् । तत्किमादि किमन्तं वा किं फलं वा किमाश्रयम् ॥२३॥
कस्य भोगेन किं भोग्यं किं वा तद्भोगसाधनम् । मलक्षयस्य को हेतुः कीदृक्क्षीणमलः पुमान् ॥२४॥
वायुरुवाच ॥
कला विद्या च रागश्च कालो नियतिरेव च । कलादयस्समाख्याता यो भोक्ता पुरुषो भवेत् ॥२५॥
पुण्यपापात्मकं कर्म सुखदुःखफलं तु यत् । अनादिमलभोगान्तमज्ञानात्मसमाश्रयम् ॥२६॥
भोगः कर्मविनाशाय भोगमव्यक्तमुच्यते । बाह्यान्तःकरणद्वारं शरीरं भोगसाधनम् ॥२७॥
भावातिशयलब्धेन प्रसादेन मलक्षयः । क्षीणे चात्ममले तस्मिन् पुमाञ्छिवसमो भवेत् ॥२८॥
मुनय ऊचुः ॥
कलादिपञ्चतत्त्वानां किं कर्म पृथगुच्यते । भोक्तेति पुरुषश्चेति येनात्मा व्यपदिश्यते ॥२९॥
किमात्मकं तदव्यक्तं केनाकारेण भुज्यते । किं तस्य शरणं भुक्तौ शरीरं च किमुच्यते ॥३०॥
वायुरुवाच ॥
दिक्क्रियाव्यंजका विद्या कालो रागः प्रवर्तकः । कालोऽवच्छेदकस्तत्र नियतिस्तु नियामिका ॥३१॥
अव्यक्तं कारणं यत्तत्त्रिगुणं प्रभवाप्ययम् । प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः ॥३२॥
कलातस्तदभिव्यक्तमनभिव्यक्तलक्षणम् । सुखदुःखविमोहात्मा भुज्यते गुणवांस्त्रिधा ॥३३॥
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । प्रकृतौ सूक्ष्मरूपेण तिले तैलमिव स्थिताः ॥३४॥
सुखं च सुखहेतुश्च समासात्सात्त्विकं स्मृतम् । राजसं तद्विपर्यासात्स्तम्भमोहौ तु तामसौ ॥३५॥
सात्त्विक्यूर्ध्वगतिः प्रोक्ता तामसी स्यादधोगतिः । मध्यमा तु गतिर्या सा राजसी परिपठ्यते ॥३६॥
तन्मात्रापञ्चकं चैव भूतपञ्चकमेव च । ज्ञानेन्द्रियाणि पञ्चैक्यं पञ्च कर्मेन्द्रियाणि च ॥३७॥
प्रधानबुद्ध्यहङ्कारमनांसि च चतुष्टयम् । समासादेवमव्यक्तं सविकारमुदाहृतम् ॥३८॥
तत्कारणदशापन्नमव्यक्तमिति कथ्यते । व्यक्तं कार्यदशापन्नं शरीरादिघटादिवत् ॥३९॥
यथा घटादिकं कार्यं मृदादेर्नातिभिद्यते । शरीरादि तथा व्यक्तमव्यक्तान्नातिभिद्यते ॥४०॥

तस्मादव्यक्तमेवैक्यकारणं करणानि च । शरीरं च तदाधारं तद्भोग्यं चापि नेतरत् ॥४१॥
मुनय ऊचुः ॥
बुद्धीन्द्रियशरीरेभ्यो व्यतिरेकस्य कस्यचित् । आत्मशब्दाभिधेयस्य वस्तुतोऽपि कुतः स्थितिः ॥४२॥
वायुरुवाच ॥
बुद्धीन्द्रियशरीरेभ्यो व्यतिरेको विभोर्ध्रुवम् । अस्त्येव कश्चिदात्मेति हेतुस्तत्र सुदुर्गमः ॥४३॥
बुद्धीन्द्रियशरीराणां नात्मता सद्भिरिष्यते । स्मृतेरनियतज्ञानादयावद्देहवेदनात् ॥४४॥
अतः स्मर्तानुभूतानामशेषज्ञेयगोचरः । अन्तर्यामीति वेदेषु वेदान्तेषु च गीयते ॥४५॥
सर्वं तत्र स सर्वत्र व्याप्य तिष्ठति शाश्वतः । तथापि क्वापि केनापि व्यक्तमेष न दृश्यते ॥४६॥
नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि । मनसैव प्रदीप्तेन महानात्मावसीयते ॥४७॥
न च स्त्री न पुमानेष नैव चापि नपुंसकः । नैवोर्ध्वं नापि तिर्यक्नाधस्तान्न कुतश्चन ॥४८॥
अशरीरं शरीरेषु चलेषु स्थाणुमव्ययम् । सदा पश्यति तं धीरो नरः प्रत्यवमर्शनात् ॥४९॥
किमत्र बहुनोक्तेन पुरुषो देहतः पृथक् । अपृथग्ये तु पश्यन्ति ह्यसम्यक्तेषु दर्शनम् ॥५०॥
यच्छरीरमिदं प्रोक्तं पुरुषस्य ततः परम् । अशुद्धमवशं दुःखमध्रुवं न च विद्यते ॥५१॥
विपदां वीजभूतेन पुरुषस्तेन संयुतः । सुखी दुःखी च मूढश्च भवति स्वेन कर्मणा ॥५२॥
अद्भिराप्लवितं क्षेत्रं जनयत्यङ्कुरं यथा । आज्ञानात्प्लावितं कर्म देहं जनयते तथा ॥५३॥
अत्यन्तमसुखावासास्स्मृताश्चैकान्तमृत्यवः । अनागता अतीताश्च तनवोऽस्य सहस्रशः ॥५४॥
आगत्यागत्य शीर्णेषु शरीरेषु शरीरिणः । अत्यन्तवसतिः क्वापि न केनापि च लभ्यते ॥५५॥
छादितश्च वियुक्तश्च शरीरैरेषु लक्ष्यते । चंद्रबिंबवदाकाशे तरलैरभ्रसञ्चयैः ॥५६॥
अनेकदेहभेदेन भिन्ना वृत्तिरिहात्मनः । अष्टापदपरिक्षेपे ह्यक्षमुद्रेव लक्ष्यते ॥५७॥
नैवास्य भविता कश्चिन्नासौ भवति कस्यचित् । पथि संगम एवायं दारैः पुत्रैश्च बन्धुभिः ॥५८॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥५९॥
स पश्यति शरीरं तच्छरीरं तन्न पश्यति । तौ पश्यति परः कश्चित्तावुभौ तं न पश्यतः ॥६०॥
ब्रह्माद्याः स्थावरान्तश्च पशवः परिकीर्तिताः । पशूनामेव सर्वेषां प्रोक्तमेतन्निदर्शनम् ॥६१॥
स एष बध्यते पाशैः सुखदुःखाशनः पशुः । लीलासाधनभूतो य ईश्वरस्येति सूरयः ॥६२॥
अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥६३॥
सूत उवाच ॥
इत्याकर्ण्यानिलवचो मुनयः प्रीतमानसाः । प्रोचुः प्रणम्य तं वायुं शैवागमविचक्षणम् ॥६४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवतत्त्वज्ञानवर्णनं नाम पञ्चमोऽध्यायः ॥५॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,३२५+६४=२०,३८९



## ॥ अथ षष्ठोऽध्यायः ॥

मुनय ऊचुः ॥
योऽयं पशुरिति प्रोक्तो यश्च पाश उदाहृतः । अभ्यां विलक्षणः कश्चित्कोयमस्ति तयोः पतिः ॥१॥
वायुरुवाच ॥
अस्ति कश्चिदपर्यन्त रमणीयगुणाश्रयः । पतिर्विश्वस्य निर्माता पशुपाशविमोचनः ॥२॥
अभावे तस्य विश्वस्य सृष्टिरेषा कथं भवेत् । अचेतनत्वादज्ञानादनयोः पशुपाशयोः ॥३॥
प्रधानपरमाण्वादि यावत्किंचिदचेतनम् । तत्कर्तृकं स्वयं दृष्टं बुद्धिमत्कारणं विना ॥४॥
जगच्च कर्तृसापेक्षं कार्यं सावयवं यतः । तस्मात्कार्यस्य कर्तृत्वं पत्युर्न पशुपाशयोः ॥५॥
पशोरपि च कर्तृत्वं पत्युः प्रेरणपूर्वकम् । अयथाकरणज्ञानमंधस्य गमनं यथा ॥६॥
आत्मानं च पृथङ्मत्वा प्रेरितारं ततः पृथक् । असौ जुष्टस्ततस्तेन ह्यमृतत्वाय कल्पते ॥७॥

पशोः पाशस्य पत्युश्च तत्त्वतोऽस्ति पदं परम् । ब्रह्मवित्तद्विदित्वैव योनिमुक्तो भविष्यति ॥८॥
संयुक्तमेतद्द्वितयं क्षरमक्षरमेव च । व्यक्ताव्यक्तं बिभर्तीशो विश्वं विश्वविमोचकः ॥९॥
भोक्ता भोग्यं प्रेरयिता मंतव्यं त्रिविधं स्मृतम् । नातः परं विजानद्भिर्वेदितव्यं हि किंचनः ॥१०॥
तिलेषु वा यथा तैलं दध्नि वा सर्पिरर्पितम् । यथाफ स्रोतसि व्याप्ता यथारण्यां हुताशनः ॥११॥
एवमेव महात्मानमात्मन्यात्मविलक्षणम् । सत्येन तपसा चैव नित्ययुक्तोऽनुपश्यति ॥१२॥
य एको जालवानीश ईशानीभिस्स्वशक्तिभिः । सर्वांल्लोकानिमान् कृत्वा एक एव स ईशते ॥१३॥
एक एव तदा रुद्रो न द्वितीयोऽस्ति कश्चन । संसृज्य विश्वभुवनं गोप्ता ते सञ्चुकोच यः ॥१४॥
विश्वतश्चक्षुरेवायमुतायं विश्वतोमुखः । तथैव विश्वतोबाहुविश्वतः पादसंयुतः ॥१५॥
द्यावाभूमी च जनयन् देव एको महेश्वरः । स एव सर्वदेवानां प्रभवश्चोद्भवस्तथा ॥१६॥
हिरण्यगर्भं देवानां प्रथमं जनयेदयम् । विश्वस्मादधिको रुद्रो महर्षिरिति हि श्रुतिः ॥१७॥
वेदाहमेतं पुरुषं महान्तममृतं ध्रुवम् । आदित्यवर्णं तमसः परस्तात्संस्थितं प्रभुम् ॥१८॥
अस्मान्नास्ति परं किञ्चिदपरं परमात्मनः । नाणीयोऽस्ति न च ज्यायस्तेन पूर्णमिदं जगत् ॥१९॥
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी च भगवांस्तस्मात्सर्वगतश्शिवः ॥२०॥
सर्वतः पाणिपादोऽयं सर्वतोऽक्षिशिरोमुखः । सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति ॥२१॥
सर्वेन्द्रियगुणाभासस्सर्वेन्द्रियविवर्जितः । सर्वस्य प्रभुरीशानः सर्वस्य शरणं सुहृत् ॥२२॥
अचक्षुरपि यः पश्यत्यकर्णोऽपि शृणोति यः । सर्वं वेत्ति न वेत्तास्य तमाहुः पुरुषं परम् ॥२३॥
अणोरणीयान्महतो महीयानयमव्ययः । गुहायां निहितश्चापि जन्तोरस्य महेश्वरः ॥२४॥
तमक्रतुं क्रतुप्रायं महिमातिशयान्वितम् । धातुः प्रसादादीशानं वीतशोकः प्रपश्यति ॥२५॥
वेदाहमेनमजरं पुराणं सर्वगं विभुम् । निरोधं जन्मनो यस्य वदंति ब्रह्मवादिनः ॥२६॥
एकोऽपि त्रीनिमांल्लोकान् बहुधा शक्तियोगतः । विदधाति विचेत्यन्ते विश्वमादौ महेश्वरः ॥२७॥
विश्वधात्रीत्यजाख्या च शैवी चित्रा कृतिः परा । तामजां लोहितां शुक्लां कृष्णामेकां त्वजः प्रजाम् ॥२८॥
जनित्रीमनुशेतेऽन्योजुषमाणस्स्वरूपिणीम् । तामेवाजामजोऽन्यस्तु भक्तभोगा जहाति च ॥२९॥
द्वौ सुपर्णौ च सयुजौ समानं वृक्षमास्थितौ । एकोऽत्ति पिप्पलं स्वादु परोऽनश्नन् प्रपश्यति ॥३०॥
वृक्षेस्मिन् पुरुषो मग्नो गुह्यमानश्च शोचति । जुष्टमन्यं यदा पश्येदीशं परमकारणम् ॥३१॥
तदास्य महिमानं च वीतशोकस्सुखी भवेत् । छंदांसि यज्ञाः ऋतवो यद्भूतं भव्यमेव च ॥३२॥
मायी विश्वं सृजत्यस्मिन्निविष्टो मायया परः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥३३॥
तस्यास्त्ववयवैरेव व्याप्तं सर्वमिदं जगत् । सूक्ष्मातिसूक्ष्ममीशानं कललस्यापि मध्यतः ॥३४॥
स्रष्टारमपि विश्वस्य वेष्टितारं च तस्य तु । शिवमेवेश्वरं ज्ञात्वा शान्तिमत्यन्तमृच्छति ॥३५॥
स एव कालो गोप्ता च विश्वस्याधिपतिः प्रभुः । तं विश्वाधिपतिं ज्ञात्वा मृत्युपाशात्प्रमुच्यते ॥३६॥
घृतात्परं मण्डमिव सूक्ष्मं ज्ञात्वा स्थितं प्रभुम् । सर्वभूतेषु गूढं च सर्वपापैः प्रमुच्यते ॥३७॥
एष एव परो देवो विश्वकर्मा महेश्वरः । हृदये संनिविष्टं तं ज्ञात्वैवामृतमश्नुते ॥३८॥
यदा समस्तं न दिवा न रात्रिर्न सदप्यसत् । केवलश्शिव एवैको यतः प्रज्ञा पुरातनी ॥३९॥
नैनमूर्ध्वं न तिर्यक्च न मध्यं पर्यजिग्रहत् । न तस्य प्रतिमा चास्ति यस्य नाम महद्यशः ॥४०॥
अजातमिममेवैके बुद्ध्वा जन्मनि भीरवः । रुद्रस्यास्य प्रपद्यंते रक्षार्थं दक्षिणं सुखम् ॥४१॥
द्वे अक्षरे ब्रह्मपरे त्वनन्ते समुदाहृते । विद्याविद्ये समाख्याते निहिते यत्र गूढवत् ॥४२॥
क्षरं त्वविद्या ह्यमृतं विद्येति परिगीयते । ते उभे ईशते यस्तु सोऽन्यः खलु महेश्वरः ॥४३॥
एकैकं बहुधा जालं विकुर्वन्नेकवच्च यः । सर्वाधिपत्यं कुरुते सृष्ट्वा सर्वान् प्रतापवान् ॥४४॥
दिश ऊर्ध्वमधस्तिर्यक्भासयन् भ्राजते स्वयम् । यो निःस्वभावादप्येको वरेण्यस्त्वधितिष्ठति ॥४५॥
स्वभाववाचकान् सर्वान् वाच्यांश्च परिणामयन् । गुणांश्च भोग्यभोक्तृत्वे तद्विश्वमधितिष्ठति ॥४६॥
ते वै गुह्योपणिषदि गूढं ब्रह्म परात्परम् । ब्रह्मयोनिं जगत्पूर्वं विदुर्देवा महर्षयः ॥४७॥
भावग्राह्यमनीहाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥४८॥

स्वभावमेके मन्यन्ते कालमेके विमोहिताः । देवस्य महिमा ह्येष येनेदं भ्राम्यते जगत् ॥४९॥
येनेदमावृतं नित्यं कालकालात्मना यतः । तेनेरितमिदं कर्म भूतैः सह विवर्तते ॥५०॥
तत्कर्म भूयशः कृत्वा विनिवृत्य च भूयशः । तत्त्वस्य सह तत्त्वेन योगं चापि समेत्य वै ॥५१॥
अष्टाभिश्च त्रिभिश्चैवं द्वाभ्यां चैकेन वा पुनः । कालेनात्मगुणैश्चापि कृत्स्नमेव जगत्स्वयम् ॥५२॥
गुणैरारभ्य कर्माणि स्वभावादीनि योजयेत् । तेषामभावे नाशः स्यात्कृतस्यापि च कर्मणः ॥५३॥
कर्मक्षये पुनश्चान्यत्ततो याति स तत्त्वतः । स एवादिस्स्वयं योगनिमित्तं भोक्तृभोगयोः ॥५४॥
परस्त्रिकालादकलस्स एव परमेश्वरः । सर्ववित्त्रिगुणाधीशो ब्रह्मसाक्षात्परात्परः ॥५५॥
तं विश्वरूपमभवं भवमीड्यं प्रजापतिम् । देवदेवं जगत्पूज्यं स्वचित्तस्थमुपास्महे ॥५६॥
कालादिभिः परो यस्मात्प्रपञ्चः परिवर्तते । धर्मावहं पापनुदं भोगेशं विश्वधाम च ॥५७॥
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेश्वरेश्वरम् ॥५८॥
न तस्य विद्येत कार्यं कारणं च न विद्यते । न तत्समोऽधिकश्चापि क्वचिज्जगति दृश्यते ॥५९॥
परास्य विविधा शक्तिः श्रुतौ स्वाभाविकी श्रुता । ज्ञानं बलं क्रिया चैव याभ्यो विश्वमिदं कृतम् ॥६०॥
तस्यास्ति पतिः कश्चिन्नैव लिङ्गं न चेशिता । कारणं कारणानां च स तेषामधिपाधिफ ॥६१॥
न चास्य जनिता कश्चिन्न च जन्म कुतश्चन । न जन्महेतवस्तद्वन्मलमायादिसंज्ञकाः ॥६२॥
स एकस्सर्वभूतेषु गूढो व्याप्तश्च विश्वतः । सर्वभूतान्तरात्मा च धर्माध्यक्षस्स कथ्यते ॥६३॥
सर्वभूताधिवासश्च साक्षी चेता च निर्गुणः । एको वशी निष्क्रियाणां बहूनां विवशात्मनाम् ॥६४॥
नित्यानामप्यसौ नित्यश्चेतनानां च चेतनः । एको बहूनां चाकामः कामानीशः प्रयच्छति ॥६५॥
सांख्ययोगाधिगम्यं यत्कारणं जगतां पतिम् । ज्ञात्वा देवं पशुः पाशैस्सर्वैरेव विमुच्यते ॥६६॥
विश्वकृद्विश्ववित्स्वात्मयोनिज्ञः कालकृद्गुणी । प्रधानः क्षेत्रज्ञपतिर्गुणेशः पाशमोचकः ॥६७॥
ब्रह्माणं विदधे पूर्वं वेदांश्चोपादिशत्स्वयम् । यो देवस्तमहं बुद्ध्वा स्वात्मबुद्धिप्रसादतः ॥६८॥
मुमुक्षुरस्मात्संसारात्प्रपद्ये शरणं शिवम् । निष्फलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ॥६९॥
अमृतस्य परं सेतुं दग्धेंधनमिवानिलम् । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ॥७०॥
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥७१॥
तपःप्रभावाद्देवस्य प्रसादाच्च महर्षयः । अत्याश्रमोचितज्ञानं पवित्रं पापनाशनम् ॥७२॥
वेदान्ते परमं गुह्यं पुराकल्पप्रचोदितम् । ब्रह्मणो वदनाल्लब्धं मयेदं भाग्यगौरवात् ॥७३॥
नाप्रशान्ताय दातव्यमेतज्ज्ञानमनुत्तमम् । न पुत्रायाशुवृत्ताय नाशिष्याय च सर्वथा ॥७४॥
यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशंते महात्मनः ॥७५॥
अतश्च संक्षेपमिदं शृणुध्वं शिवः परस्तात्प्रकृतेश्च पुंसः ।
स सर्गकाले च करोति सर्वं संहारकाले पुनराददाति ॥७६॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवतत्त्ववर्णनं नाम षष्ठोऽध्यायः ॥६॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,३८९+७६=२०,४६५



## ॥ अथ सप्तमोऽध्यायः ॥

मुनय ऊचुः ॥
कालादुत्पद्यते सर्वं कालदेव विपद्यते । न कालनिरपेक्षं हि क्वचित्किंचन विद्यते ॥१॥
यदास्यान्तर्गतं विश्वं शश्वत्संसारमण्डलम् । सर्गसंहृतिमुद्राभ्यां चक्रवत्परिवर्तते ॥२॥
ब्रह्मा हरिश्च रुद्रश्च तथान्ये च सुरासुराः । यत्कृतां नियतिं प्राप्य प्रभवो नातिवर्तितुम् ॥३॥
भूतभव्यभविष्याद्यैर्विभज्य जरयन् प्रजाः । अतिप्रभुरिति स्वैरं वर्ततेऽतिभयङ्करः ॥४॥
क एष भगवान् कालः कस्य वा वशवर्त्ययम् । क एवास्य वशो न स्यात्कथयैतद्विचक्षण ॥५॥

वायुरुवाच ॥
कालकाष्ठानिमेषादिकलाकलितविग्रहम् । कालात्मेति समाख्यातं तेजो माहेश्वरं परम् ॥६॥
यदलंघ्यमशेषस्य स्थावरस्य चरस्य च । नियोगरूपमीशस्य बलं विश्वनियामकम् ॥७॥
तस्यांशांशमयी मुक्तिः कालात्मनि महात्मनि । ततो निष्क्रम्य संक्रान्ता विसृष्टाग्रेरिवायसी ॥८॥
तस्मात्कालवशे विश्वं न स विश्ववशे स्थितः । शिवस्य तु वशे कालो न कालस्य वशे शिवः ॥९॥
यतोऽप्रतिहतं शार्वं तेजः काले प्रतिष्ठितम् । महती तेन कालस्य मर्यादा हि दुरत्यया ॥१०॥
कालं प्रज्ञाविशेषेण कोऽतिवर्तितुमर्हति । कालेन तु कृतं कर्म न कश्चिदतिवर्तते ॥११॥
एकच्छत्रां महीं कृत्स्नां ये पराक्रम्य शासति । तेऽपि नैवातिवर्तन्ते कालवेलामिवाब्धयः ॥१२॥
ये निगृह्येंद्रियग्रामं जयन्ति सकलं जगत् । न जयन्त्यपि ते कालं कालो जयति तानपि ॥१३॥
आयुर्वेदविदो वैद्यास्त्वनुष्ठितरसायनाः । न मृत्युमतिवर्तन्ते कालो हि दुरतिक्रमः ॥१४॥
श्रिया रूपेण शीलेन बलेन च कुलेन च । अन्यच्चिंतयते जन्तुः कालोऽन्यत्कुरुते बलात् ॥१५॥
अप्रियैश्च प्रियैश्चैव ह्यचिंतितगमागमैः । संयोजयति भूतानि वियोजयति चेश्वरः ॥१६॥
यदैव दुःखितः कश्चित्तदैव सुखितः परः । दुर्विज्ञेयस्वभावस्य कालास्याहो विचित्रता ॥१७॥
यो युवा स भवेद्वृद्धो यो बलीयान्स दुर्बलः । यः श्रीमान्सोऽपि निःश्रीकः कालश्चित्रगतिर्द्विजा ॥१८॥
नाभिजात्यं न वै शीलं न बलं न च नैपुणम् । भवेत्कार्याय पर्याप्तं कालश्च ह्यनिरोधकः ॥१९॥
ये सनाथाश्च दातारो गीतवाद्यैरुपस्थिताः । ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ॥२०॥
फलंत्यकाले न रसायनानि सम्यक्प्रयुक्तान्यपि चौषधानि । तान्येव कालेन समाहृतानि सिद्धिं प्रयान्तयाशु सुखं दिशंति ॥२१॥
नाकालतोऽयं म्रियते जायते वा नाकालतः पुष्टिमग्र्यामुपैति । नाकालतः सुखितं दुःखितं वा नाकालिकं वस्तु समस्ति किञ्चित् ॥२२॥
कालेन शीतः प्रतिवाति वातःकालेन वृष्टिर्जलदानुपैति । कालेन चोष्मा प्रशमं प्रयाति कालेन सर्वं सफलत्वमेति ॥२३॥
कालश्च सर्वस्य भवस्य हेतुः कालेन सस्यानि भवन्ति नित्यम् । कालेन सस्यानि लयं प्रयांति कालेन संजीवति जीवलोकः ॥२४॥
इत्थं कालात्मनस्तत्त्वं यो विजानाति तत्त्वतः । कालात्मानमतिक्रम्य कालातीतं स पश्यति ॥२५॥
न यस्य कालो न च बन्धमुक्ती न यः पुमान्न प्रकृतिर्न विश्वम् । विचित्ररूपाय शिवाय तस्मै नमःपरस्मै परमेश्वराय ॥२६॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे कालमहिमवर्णनं नाम सप्तमोऽध्यायः ॥७॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,४६५+२६=२०,४९१



## ॥ अथाष्टमोऽध्यायः ॥

ऋषय ऊचुः ॥
केन मानेन कालेस्मिन्नायुस्संख्या प्रकल्प्यते । संख्यारूपस्य कालस्य कः पुनः परमोऽवधिः ॥१॥
वायुरुवाच ॥
आयुषोऽत्र निमेषाख्यमाद्यमानं प्रचक्षते । संख्यारूपस्य कालस्य शांत्त्वतीतकलावधि ॥२॥
अक्षिपक्ष्मपरिक्षेपो निमेषः परिकल्पितः । तादृशानां निमेषाणां काष्ठा दश च पञ्च च ॥३॥
काष्ठांस्त्रिंशत्कला नाम कलांस्त्रिंशन्मुहूर्तकः । मुहूर्तानामपि त्रिंशदहोरात्रं प्रचक्षते ॥४॥
त्रिंशत्संख्यैरहोरात्रैर्मासः पक्षद्वयात्मकः । ज्ञेयं पित्र्यमहोरात्रं मासः कृष्णसितात्मकः ॥५॥
मासैस्तैरयनं षड्भिर्वर्षं द्वे चायनं मतम् । लौकिकेनैव मानेन अब्दो यो मानुषः स्मृतः ॥६॥
एतद्दिव्यमहोरात्रमिति शास्त्रस्य निश्चयः । दक्षिणं चायनं रात्रिस्तथोदगयनं दिनम् ॥७॥

मासस्त्रिंशदहोरात्रैर्दिव्यो मानुषवत्स्मृतः । संवत्सरोऽपि देवानां मासैर्द्वादशभिस्तथा ॥८॥
त्रीणि वर्षशतान्येव षष्टिवर्षयुतान्यपि । दिव्यस्संवत्सरो ज्ञेयो मानुषेण प्रकीर्तितः ॥९॥
दिव्येनैव प्रमाणेन युगसंख्या प्रवर्तते । चत्वारि भारते वर्षे युगानि कवयो विदुः ॥१०॥
पूर्वं कृतयुगं नाम ततस्त्रेता विधीयते । द्वापरं च कलिश्चैव युगान्येतानि कृत्स्नशः ॥११॥
चत्वारि तु सहस्राणि वर्षाणां तत्कृतं युगम् । तस्य तावच्छतीसंध्या संध्यांशश्च तथाविधः ॥१२॥
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु । एकापायेन वर्तन्ते सहस्राणि शतानि च ॥१३॥
एतद्द्वादशसाहस्रं साधिकं च चतुर्युगम् । चतुर्युगसहस्रं यत्संकल्प इति कथ्यते ॥१४॥
चतुर्युगैकसप्तत्या मनोरन्तरमुच्यते । कल्पे चतुर्दशैकस्मिन्मनूनां परिवृत्तयः ॥१५॥
एतेन क्रमयोगेन कल्पमन्वंतराणि च । सप्रजानि व्यतीतानि शतशोऽथ सहस्रशः ॥१६॥
अज्ञेयत्वाच्च सर्वेषामसंख्येयतया पुनः । शक्यो नैवानुपूर्व्याद्वै तेषां वक्तुं सुविस्तरः ॥१७॥
कल्पो नाम दिवा प्रोक्तो ब्रह्मणोऽव्यक्तजन्मनः । कल्पानां वै सहस्रं च ब्राह्मं वर्षमिहोच्यते ॥१८॥
वर्षाणामष्टसाहस्रं यच्च तद्ब्रह्मणो युगम् । सवनं युगसाहस्रं ब्रह्मणः पद्मजन्मनः ॥१९॥
सवनानां सहस्रं च त्रिगुणं त्रिवृतं तथा । कल्प्यते सकलः कालो ब्रह्मणः परमेष्ठिनः ॥२०॥
तस्य वै दिवसे यांति चतुर्दश पुरंदराः । शतानि मासे चत्वारि विंशत्या सहितानि च ॥२१॥
अब्दे पञ्च सहस्राणि चत्वारिंशद्युतानि च । चत्वारिंशत्सहस्राणि पञ्च लक्षाणि चायुषि ॥२२॥
ब्रह्मा विष्णोर्दिने चैको विष्णू रुद्रदिने तथा । ईश्वरस्य दिने रुद्रस्सदाख्यस्य तथेश्वरः ॥२३॥
साक्षाच्छिवस्य तत्संख्यस्तथा सोऽपि सदा शिवः । चत्वारिंशत्सहस्राणि पञ्चलक्षाणि चायुषि ॥२४॥
तस्मिन्साक्षाच्छिवेनैष कालात्मा सम्प्रवर्तते । यत्तत्सृष्टेस्समाख्यातं कालान्तरमिह द्विजाः ॥२५॥
एतत्कालान्तरं ज्ञेयमहर्वै पारमेश्वरम् । रात्रिश्च तावती ज्ञेया परमेशस्य कृत्स्नशः ॥२६॥
अहस्तस्य तु या सृष्टी रात्रिश्च प्रलयः स्मृतः । अहर्न विद्यते तस्य न रात्रिरिति धारयेत् ॥२७॥
एषोपचारः क्रियते लोकानां हितकाम्यया । प्रजाः प्रजानां पतयो मूर्तयश्च सुरासुराः ॥२८॥
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च । तन्मात्राण्यथ भूतादिर्बुद्धिश्च सह दैवतः ॥२९॥
अहस्तिष्ठंति सर्वाणि पारमेशस्य धीमतः । अहरन्ते प्रलीयन्ते रात्र्यन्ते विश्वसंभवः ॥३०॥
यो विश्वात्मा कर्मकालस्वभावाद्यर्थे शक्तिर्यस्य नोल्लंघनीया । यस्यैवाज्ञाधीनमेतत्समस्तं नमस्तस्मै महते शंकराय ॥३१॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वभागे कालप्रभावे त्रिदेवायुर्वर्णनं नामाष्टमोऽध्यायः ॥८॥
आदितः श्लोकानां समष्टयङ्काः-२०,४९१+३१=२०,५२२



## ॥ अथ नवमोऽध्यायः ॥

मुनय ऊचुः ॥
कथं जगदिदं कृत्स्नं विधाय च निधाय च । आज्ञया परमां क्रीडां करोति परमेश्वरः ॥१॥
किं तत्प्रथमसंभूतं केनेदमखिलं ततम् । केना वा पुनरेवेदं ग्रस्यते पृथुकुक्षिणा ॥२॥
वायुरुवाच ॥
शक्तिः प्रथमसम्भूता शान्त्यतीतपदोत्तरा । ततो माया ततोऽव्यक्तं  शिवाच्छक्तिमतः प्रभोः ॥३॥
शान्त्यतीतपदं शक्तेस्ततः शान्तिपदक्रमात् । ततो विद्यापदं तस्मात्प्रतिष्ठापदसंभवः ॥४॥
निवृत्तिपदमुत्पन्नं प्रतिष्ठापदतः क्रमात् । एवमुक्ता समासेन सृष्टिरीश्वरचोदिता ॥५॥
आनुलोम्यात्तथैतेषां प्रतिलोम्येन सं हृतिः । अस्मात्पञ्चपदोद्दिष्टात्परस्स्रष्टा समिष्यते ॥६॥
कलाभिः पञ्चभिर्व्याप्तं तस्माद्विश्वमिदं जगत् । अव्यक्तं कारणं यत्तदात्मना समनुष्ठितम् ॥७॥
महदादिविशेषान्तं सृजतीत्यपि संमतम् । किं तु तत्रापि कर्तृत्वं नाव्यक्तस्य न चात्मनः ॥८॥
अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरुषस्य च । प्रधानपरमाण्वादि यावत्किञ्चिदचेतनम् ॥९॥

तत्कर्तृकं स्वयं दृष्टं बुद्धिमत्कारणं विना । जगच्च कर्तृसापेक्षं कार्यं सावयवं यतः ॥१०॥
तस्माच्छक्तस्स्वतन्त्रो यः सर्वशक्तिश्च सर्ववित् । अनादिनिधनश्चायं महदैश्वर्यसंयुतः ॥११॥
स एव जगतः कर्ता महादेवो महेश्वराः । पाता हर्ता च सर्वस्य ततः पृथगनन्वयः ॥१२॥
परिणामः प्रधानस्य प्रवृत्तिः पुरुषस्य च । सर्वं सत्यव्रतस्यैव शासनेन प्रवर्तते ॥१३॥
इतीयं शाश्वती निष्ठा सतां मनसि वर्तते । न चैनं पक्षमाश्रित्य वर्तते स्वल्पचेतनः ॥१४॥
यावदादिसमारंभो यावद्यः प्रलयो महान् । तावदप्येति सकलं ब्रह्मणः शारदां शतम् ॥१५॥
परमित्यायुषो नाम ब्रह्मणोऽव्यक्तजन्मनः । तत्पराख्यं तदर्धं च परार्धमभिधीयते ॥१६॥
परार्धद्वयकालान्ते प्रलये समुपस्थिते । अव्यक्तमात्मनः कार्यमादायात्मनि तिष्ठति ॥१७॥
आत्मन्यवस्थितेऽव्यक्ते विकारे प्रतिसंहृते । साधर्म्येणाधितिष्ठेते प्रधानपुरुषावुभौ ॥१८॥
तमः सत्त्वगुणावेतौ समत्वेन व्यवस्थितौ । अनुद्रिक्तावनन्तौ तावोतप्रोतौ परस्परम् ॥१९॥
गुणसाम्ये तदा तस्मिन्नविभागे तमोदये । शान्तवातैकनीरे च न प्राज्ञायत किंचन ॥२०॥
अप्रज्ञाते जगत्यस्मिन्नेक एव महेश्वरः । उपास्य रजनीं कृत्स्नां परां माहेश्वरीं ततः ॥२१॥
प्रभातायां तु शर्वर्यां प्रधानपुरुषावुभौ । प्रविश्य क्षोभयामास मायायोगान्महेश्वरः ॥२२॥
ततः पुनरशेषाणां भूतानां प्रभवाप्ययात् । अव्यक्तादभवत्सृष्टिराज्ञया परमेष्ठिनः ॥२३॥
विश्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकले सकलस्समाप्तः ।
आत्मानमध्वपतिमध्वविदो वदंति तस्मै नमः सकललोकविलक्षणाय ॥२४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वभागे सृष्टिपालनप्रलयकर्तृत्ववर्णनं नाम नवमोऽध्यायः ॥९॥
आदितः श्लोकानां समष्टयङ्काः-२०,५२२+२४=२०,५४६



## ॥ अथ दशमोऽध्यायः ॥

वायुरुवाच ॥

पुरुषाधिष्ठितात्पूर्वमव्यक्तादीश्वराज्ञया । बुद्ध्यादयो विशेषान्ता विकाराश्चाभवन् क्रमात् ॥१॥
ततस्तेभ्यो विकारेभ्यो रुद्रो विष्णुः पितामहः । कारणत्वेन सर्वेषां त्रयो देवाः प्रजज्ञिरे ॥२॥
सर्वतो भुवनव्याप्तिशक्तिमव्याहतां क्वचित् । ज्ञानमप्रतिमं शश्वदैश्वर्यं चाणिमादिकम् ॥३॥
सृष्टिस्थितिलयाख्येषु कर्मसु त्रिषु हेतुताम् । प्रभुत्वेन सहैतेषां प्रसीददति महेश्वरः ॥४॥
कल्पान्तरे पुनस्तेषामस्पर्धा बुद्धिमोहिनाम् । सर्गरक्षालयाचारं प्रत्येकं प्रददौ च सः ॥५॥
एते परस्परोत्पन्ना धारयन्ति परस्परम् । परस्परेण वर्धन्ते परस्परमनुव्रताः ॥६॥
क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते । नानेन तेषामाधिक्यमैश्वर्यं चातिरिच्यते ॥७॥
मूर्खा निंदंति तान्वाग्भिः संरंभाभिनिवेशिनः । यातुधाना भवंत्येव पिशाचाश्च न संशयः ॥८॥
देवो गुणत्रयातीतश्चतुर्व्यूहो महेश्वरः । सकलस्सकलाधारशक्तेरुत्पत्तिकारणम् ॥९॥
सोयमात्मा त्रयस्यास्य प्रकृतेः पुरुषस्य च । लीलाकृतजगत्सृष्टिरीश्वरत्वे व्यवस्थितः ॥१०॥
यस्सर्वस्मात्परो नित्यो निष्कलः परमेश्वरः । स एव च तदाधारस्तदात्मा तदधिष्ठितः ॥११॥
तस्मान्महेश्वरश्चैव प्रकृतिः पुरुषस्तथा । सदा शिवभवो विष्णुर्ब्रह्मा सर्व शिवात्मकम् ॥१२॥
प्रधानात्प्रथमं जज्ञे वृद्धिः ख्यातिर्मतिर्महान् । महत्तत्त्वस्य संक्षोभादहङ्कारस्त्रिधाऽभवत् ॥१३॥
अहङ्कारश्च भूतानि तन्मात्रानींद्रियाणि च । वैकारिकादहङ्कारात्सत्त्वोद्रिक्तात्तु सात्त्विकः ॥१४॥
वैकारिकः स सर्गस्तु युगपत्संप्रवर्तते । बुद्धीन्द्रियाणि पञ्चैव पञ्चकर्मेंद्रियाणि च ॥१५॥
एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् । तमोयुक्तादहङ्काराद्भूततन्मात्रसंभवः ॥१६॥
भूतानामादिभूतत्वाद्भूतादिः कथ्यते तु सः । भूतादेश्शब्दमात्रं स्यात्तत्र चाकाशसंभवः ॥१७॥
आकाशात्स्पर्श उत्पन्नः स्पर्शाद्वायुसमुद्भवः । वायो रूपं ततस्तेजस्तेजसो रससंभवः ॥१८॥
रसादापस्समुत्पन्नास्तेभ्यो गन्धसमुद्भवः । गन्धाच्च पृथिवी जाता भूतेभ्योन्यच्चराचरम् ॥१९॥

पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च । महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥२०॥
तत्र कार्यं च करणं संसिद्धं ब्रह्मणो यदा । तदण्डे सुप्रवृद्धोऽभूत्क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥२१॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥२२॥
तस्येश्वरस्य प्रतिमा ज्ञानवैराग्यलक्षणा । धर्मैश्वर्यकरी बुद्धिर्ब्राह्मी यज्ञेऽभिमानिनः ॥२३॥
अव्यक्ताज्जायते तस्य मनसा यद्यदीप्सितम् । वशी विकृतवात्त्रैगुण्यात्सापेक्षत्वात्स्वभावतः ॥२४॥
त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्तते । सृजते ग्रसते चैव वीक्षते च त्रिभिस्स्वयम् ॥२५॥
चतुर्मुखस्तु ब्रह्मत्वे कालत्वे चान्तकस्स्मृतः । सहस्रमूर्धा पुरुषस्तिस्रोवस्थास्स्वयंभुवः ॥२६॥
सत्त्वं रजश्च ब्रह्मा च कालत्वे च तमो रजः । विष्णुत्वे केवलं सत्त्वं गुणवृद्धिस्त्रिधा विभौ ॥२७॥
ब्रह्मत्वे सृजते लोकान् कालत्वे संक्षिपत्यपि । पुरुषत्वेऽत्युदासीनः कर्म च त्रिविधं विभोः ॥२८॥
एवं त्रिधा विभिन्नत्वाद्ब्रह्मा त्रिगुण उच्यते । चतुर्धा प्रविभक्तत्वाच्चातुर्व्यूहः प्रकीर्तितः ॥२९॥
आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः । पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः ॥३०॥
हिरण्मयस्तु यो मेरुस्तस्योल्बं सुमहात्मनः । गर्भोदकं समुद्राश्च जरायुश्चाऽपि पर्वताः ॥३१॥
तस्मिन्नंडे त्विमे लोका अंतर्विश्वमिदं जगत् । चंद्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ॥३२॥
अद्भिर्दशगुणाभिस्तु बाह्यतोण्डं समावृतम् । आपो दशगुणेनैव तेजसा बहिरावृताः ॥३३॥
तेजो दशगुणेनैव वायुना बहिरावृतम् । आकाशेनावृतो वायुः खं च भूतादिनावृतम् ॥३४॥
भूतादिर्महता तद्वदव्यक्तेनावृतो महान् । एतैरावरणैरण्डं सप्तभिर्बहिरावृतम् ॥३५॥
एतदावृत्त्य चान्योन्यमष्टौ प्रकृतयः स्थिताः । सृष्टिपालनविध्वंसकर्मकर्त्र्यो द्विजोत्तमाः ॥३६॥
एवं परस्परोत्पन्ना धारयन्ति परस्परम् । आधाराधेयभावेन विकारास्तु विकारिषु ॥३७॥
कूर्मोंगानि यथा पूर्वं प्रसार्य्य विनियच्छति । विकारांश्च तथाऽव्यक्तं सृष्ट्वा भूयो नियच्छति ॥३८॥
अव्यक्तप्रभवं सर्वमानुलोम्येन जायते । प्राप्ते प्रलयकाले तु प्रतिलोम्येनुलीयते ॥३९॥
गुणाः कालवशादेव भवन्ति विषमाः समाः । गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते ॥४०॥
तदिदं ब्रह्मणो योनिरेतदण्डं घनं महत् । ब्रह्मणः क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यते ॥४१॥
इतीदृशानामण्डानां कोटयो ज्ञेयाः सहस्रशः । सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधः स्थिताः ॥४२॥
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः । सृष्टा प्रधानेन तथा लब्ध्वा शम्भोस्तु सन्निधिम् ॥४३॥
महेश्वरः परोव्यक्तादण्डमव्यक्तसंभवम् । अण्डाज्जज्ञे विभुर्ब्रह्मा लोकास्तेन कृतास्त्विमे ॥४४॥
अबुद्धिपूर्वः कथितो मयैष प्रधानसर्गः प्रथमः प्रवृतः । आत्यन्तिकश्च प्रलयोन्तकाले लीलाकृतः केवलमीश्वरस्य ॥४५॥
यत्तत्स्मृतं कारणमप्रमेयं ब्रह्मा प्रधानं प्रकृतेः प्रसूतिः । अनादिमध्यान्तमनन्तवीर्यं शुक्लं सुरक्तं पुरुषेण युक्तम् ॥४६॥
उत्पादकत्वाद्रजसोतिरेकाल्लोकस्य सन्तानविवृद्धिहेतून् । अष्टौ विकारानपि चादिकाले सृष्ट्वा समश्नाति तथान्तकाले ॥४७॥
प्रकृत्यवस्थापितकारणानां या च स्थितिर्या च पुनः प्रवृत्तिः । तत्सर्वमप्राकृतवैभवस्य संकल्पमात्रेण महेश्वरस्य ॥४८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां ब्रह्मांडस्थितिवर्णनं नाम दशमोऽध्यायः ॥१०॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,५४६+४८=२०,५९४



## ॥ अथैकादशोऽध्यायः ॥

मुनय ऊचुः ॥
मन्वंतराणि सर्वाणि कल्पभेदांश्च सर्वशः । तेष्वेवान्तरसर्गं च प्रतिसर्गं च नो वद ॥१॥
वायुरुवाच ॥

कालसंख्याविवृत्तस्य परार्धो ब्रह्मणस्स्मृतः । तावांश्चैवास्य कालोन्यस्तस्यान्ते प्रतिसृज्यते ॥२॥
दिवसे दिवसे तस्य ब्रह्मणः पूर्वजन्मनः । चतुर्दशमहाभागा मनूनां परिवृत्तयः ॥३॥
अनादित्वादनन्तत्वादज्ञेयत्वाच्च कृत्स्नशः । मन्वंतराणि कल्पाश्च न शक्या वचनात्पृथक् ॥४॥
उक्तेष्वपि च सर्वेषु शृण्वतां वो वचो मम । किमिहास्ति फलं तस्मान्न पृथक्वक्तुमुत्सहे ॥५॥
य एव खलु कल्पेषु कल्फ संप्रति वर्तते । तत्र संक्षिप्य वर्तन्ते सृष्टयः प्रतिसृष्टयः ॥६॥
यस्त्वयं वर्तते कल्पो वाराहो नाम नामतः । अस्मिन्नपि द्विजश्रेष्ठा मनवस्तु चतुर्दश ॥७॥
स्वायंभुवादयस्सप्त सप्त सावर्णिकादयः । तेषु वैवस्वतो नाम सप्तमो वर्तते मनुः ॥८॥
मन्वंतरेषु सर्वेषु सर्गसंहारवृत्तयः । प्रायः समाभवंतीति तर्कः कार्यो विजानता ॥९॥
पूर्वकल्पे परावृत्ते प्रवृत्ते कालमारुते । समुन्मूलितमूलेषु वृक्षेषु च वनेषु च ॥१०॥
जगंति तृणवक्त्रीणि देवे दहति पावके । वृष्ट्या भुवि निषिक्तायां विवेलेष्वर्णवेषु च ॥११॥
दिक्षु सर्वासु मग्नासु वारिपूरे महीयसि । तदद्भिश्च दुलाक्षेपैस्तरङ्गभुजमण्डलैः ॥१२॥
प्रारब्धचण्डनृत्येषु ततः प्रलयवारिषु । ब्रह्मा नारायणो भूत्वा सुष्वाप सलिले सुखम् ॥१३॥
इमं चोदाहरन्मन्त्रं श्लोकं नारायणं प्रति । तं शृणुध्वं मुनिश्रेष्ठास्तदर्थं चाक्षराश्रयम् ॥१४॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ता यस्मात्तेन नारायणः स्मृतः ॥१५॥
शिवयोगमयीं निद्रां कुर्वन्तं त्रिदशेश्वरम् । बद्धांजलि पुटास्सिद्धा जनलोकनिवासिनः ॥१६॥
स्तोत्रैः प्रबोधयामासुः प्रभातसमये सुराः । यथा सृष्ट्यादिसमये ईश्वरं श्रुतयः पुरा ॥१७॥
ततः प्रबुद्ध उत्थाय शयनात्तोयमध्यगात् । उदैक्षत दिशः सर्वा योगनिद्रालसेक्षणः ॥१८॥
नापश्यत्स तदा किञ्चित्स्वात्मनो व्यतिरेकि यत् । सविस्मय इवासीनः परां चिन्तामुपागमत् ॥१९॥
क्व सा भगवती या तु मनोज्ञा महती मही । नानाविधमहाशैलनदीनगरकानना ॥२०॥
एवं संचिन्तयन्ब्रह्मा बुबुधे नैव भूस्थितिम् । तदा सस्मार पितरं भगवंतं त्रिलोचनम् ॥२१॥
स्मरणाद्देवदेवस्य भवस्यामिततेजसः । ज्ञातवान्सलिले मग्नां धरणीं धरणीपतिः ॥२२॥
ततो भूमेस्समुद्धारं कर्तुकामः प्रजापतिः । जलक्रीडोचितं दिव्यं वाराहं रूपमस्मरत् ॥२३॥
महापर्वतवर्ष्माणं महाजलदनिःस्वनम् । नीलमेघप्रतीकाशं दीप्तशब्दं भयानकम् ॥२४॥
पीनवृत्तघनस्कंधपीनोन्नतकटीतटम् । ह्रस्ववृत्तोरुजंघाग्रं सुतीक्ष्णपुरमण्डलम् ॥२५॥
पद्मरागमणिप्रख्यं वृत्तभीषणलोचनम् । वृत्तदीर्घमहागात्रं स्तब्धकर्णस्थलोज्ज्वलम् ॥२६॥
उदीर्णोच्छ्वासनिश्वासघूर्णितप्रलयार्ण वम् । विस्फुरत्सुसटाच्छन्नकपोलस्कंधबन्धुरम् ॥२७॥
मणिभिर्भूषणैश्चित्रैर्महारत्नैःपरिष्कृतम् । विराजमानं विद्युद्भिर्मेघसंघमिवोन्नतम् ॥२८॥
आस्थाय विपुलं रूपं वाराहममितं विधिः । पृथिव्युद्धरणार्थाय प्रविवेश रसातलम् ॥२९॥
स तदा शुशुभेऽतीव सूकरो गिरिसंनिभः । लिङ्गाकृतेर्महेशस्य पादमूलं गतो यथा ॥३०॥
ततस्स सलिले मग्नां पृथिवीं पृथिवींधरः । उद्धृत्यालिङ्ग्य दंष्ट्राभ्यामुन्ममज्ज रसातलात् ॥३१॥
तं दृष्ट्वा मुनयस्सिद्धा जनलोकनिवासिनः । मुमुदुर्ननृतुर्मूर्ध्नि तस्य पुष्पैरवाकिरन् ॥३२॥
वपुर्महावराहस्य शुशुभे पुष्पसंवृतम् । पतद्भिरिव खद्योतैः प्राशुरंजनपर्वतः ॥३३॥
ततः संस्थानमानीय वराहो महतीं महीम् । स्वमेव रूपमास्थाय स्थापयामास वै विभुः ॥३४॥
पृथिवीं च समीकृत्य पृथिव्यां स्थापयन्गिरीन् । भूराद्यांश्चतुरो लोकान् कल्पयामास पूर्ववत् ॥३५॥
इति सह महतीं महीं महीध्रैः प्रलयमहाजलधेरधःस्थमध्यात् । उपरि च विनिवेश्य विश्वकर्मा चरमचरं च जगत्ससर्ज भूयः ॥३६॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सृष्ट्यादिवर्णनं नामैकादशोऽध्यायः ॥११॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,५९४+३६=२०,६३०



## ॥ अथ द्वादशोऽध्यायः ॥

वायुरुवाच ॥
सर्गं चिन्तयतस्तस्य तदा वै बुद्धिपूर्वकम् । प्रध्यानकाले मोहस्तु प्रादुर्भूतस्तमोमयः ॥१॥
तमोमोहो महामोहस्तामिस्रश्चान्धसंज्ञितः । अविद्या पञ्चमी चैषा प्रादुर्भूता महात्मनः ॥२॥
पञ्चधाऽवस्थितः सर्गो ध्यायतस्त्वभिमानिनः । सर्वतस्तमसातीव बीजकुम्भवदावृतः ॥३॥
बहिरन्तश्चाप्रकाशः स्तब्धो निःसंज्ञ एव च । तस्मात्तेषां वृता बुद्धिर्मुखानि करणानि च ॥४॥
तस्मात्ते संवृतात्मानो नगा मुख्याः प्रकीर्तिताः । तं दृष्ट्वाऽसाधकं ब्रह्मा प्रथमं सर्गमीदृशम् ॥५॥
अप्रसन्नमना भूत्वा द्वितीयं सोऽभ्यमन्यत । तस्याभिधायतः सर्गं तिर्यक्स्रोतोऽभ्यवर्तत ॥६॥
अन्तःप्रकाशास्तिर्यंच आवृताश्च बहिः पुनः । पश्वात्मानस्ततो जाता उत्पथग्राहिणश्च ते ॥७॥
तमप्यसाधकं ज्ञात्वा सर्गमन्यममन्यत । तदोर्ध्वस्रोतसो वृत्तो देवसर्गस्तु सात्त्विकः ॥८॥
ते सुखप्रीतिबहुला बहिरन्तश्च नावृताः । प्रकाशा बहिरन्तश्चस्वभावादेव संज्ञिताः ॥९॥
ततोऽभिध्यायतोव्यक्तादर्वाक्स्रोतस्तु साधकः । मनुष्यनामा सञ्जातः सर्गो दुःखसमुत्कटः ॥१०॥
प्रकाशाबहिरन्तस्ते तमोद्रिक्ता रजोऽधिकाः । पञ्चमोनुग्रहः सर्गश्चतुर्धा संव्यवस्थितः ॥११॥
विपर्ययेण शक्त्या च तुष्ट्यासिद्ध्या तथैव च । तेऽपरिग्राहिणः सर्वे संविभागरताः पुनः ॥१२॥
खादनाश्चाप्यशीलाश्च भूताद्याः परिकीर्तिताः । प्रथमो महतः सर्गो ब्रह्मणः परमेष्ठिनः ॥१३॥
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते । वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥१४॥
इत्येष प्रकृतेः सर्गः सम्भृतोऽबुद्धिपूर्वकः । मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥१५॥
तिर्यक्स्रोतस्तु यः प्रोक्तस्तिर्यग्योनिः स पञ्चमः । तदूर्ध्वस्रोतसः षष्ठो देवसर्गस्तु स स्मृतः ॥१६॥
ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः । अष्टमोऽनुग्रहः सर्गः कौमारो नवमः स्मृतः ॥१७॥
प्राकृताश्च त्रयः पूर्वे सर्गास्तेऽबुद्धिपूर्वकाः । बुद्धिपूर्वं प्रवर्तन्ते मुख्याद्याः पञ्च वैकृताः ॥१८॥
अग्रे ससर्ज वै ब्रह्मा मानसानात्मनः समान् । सनन्दं सनकञ्चैव विद्वांसञ्च सनातनम् ॥१९॥
ऋभुं सनत्कुमारञ्च पूर्वमेव प्रजापतिः । सर्वे ते योगिनो ज्ञेया वीतरागा विमत्सराः ॥२०॥
ईश्वरासक्तमनसो न चक्रुः सृष्टये मतिम् । तेषु सृष्ट्यनपेक्षेषु गतेषु सनकादिषु ॥२१॥
स्रष्टुकामः पुनर्ब्रह्मा ततAP परमं तफ । तस्यैवं तप्यमानस्य न किञ्चित्समवर्तत ॥२२॥
ततो दीर्घेण कालेन दुःखात्क्रोधो व्यजायत । क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥२३॥
ततस्तेभ्योऽश्रुबिन्दुभ्यो भूताः प्रेतास्तदाभवन् । सर्वांस्तानश्रुजान्दृष्ट्वा ब्रह्मात्मानमनिंदत ॥२४॥
तस्य तीव्राऽभवन्मूर्छा क्रोधामर्षसमुद्भवा । मूर्छितस्तु जहौ प्राणान्क्रोधाविष्टः प्रजापतिः ॥२५॥
ततः प्राणेश्वरो रुद्रो भगवान्नीललोहितः । प्रसादमतुलं कर्तुं प्रादुरासीत्प्रभोर्मुखात् ॥२६॥
दशधा चैकधा चक्रे स्वात्मानं प्रभुरीश्वरः । ते तेनोक्ता महात्मानो दशधा चैकधा कृताः ॥२७॥
यूयं सृष्टा मया वत्सा लोकानुग्रहकारणात् । तस्मात्सर्वस्य लोकस्य स्थापनाय हिताय च ॥२८॥
प्रजासन्तानहेतोश्च प्रयतध्वमतन्द्रिताः । एवमुक्ताश्च रुरुदुर्दुद्रुवुश्च समन्ततः ॥२९॥
रोदनाद्द्रावणाच्चैव ते रुद्रा नामतः स्मृताः । ये रुद्रास्ते खलु प्राणा ये प्राणास्ते महात्मकाः ॥३०॥
ततो मृतस्य देवस्य ब्रह्मणः परमेष्ठिनः । घृणी ददौ पुनः प्राणान्ब्रह्मपुत्रो महेश्वरः ॥३१॥
प्रहृष्टवदनो रुद्रः प्राणप्रत्यागमाद्विभोः । अभ्यभाषत विश्वेशो ब्रह्माणं परमं वचः ॥३२॥
माभैर्माभैर्महाभाग विरिंच जगतां गुरो । मया ते प्राणिताः प्राणाः सुखमुत्तिष्ठ सुव्रत ॥३३॥
स्वप्नानुभूतमिव तच्छ्रुत्वा वाक्यं मनोहरम् । हरं निरीक्ष्य शनकैर्नेत्रैः फुल्लाम्बुजप्रभैः ॥३४॥
तथा प्रत्यागतप्राणः स्निग्धगम्भीरया गिरा । उवाच वचनं ब्रह्मा तमुद्दिश्य कृताञ्जलिः ॥३५॥
त्वं हि दर्शनमात्रेण चानन्दयसि मे मनः । को भवान् विश्वमूर्त्या वा स्थित एकादशात्मकः ॥३६॥
तस्य तद्वचनं श्रुत्वा व्याजहार महेश्वरः । स्पृशन् कराभ्यां ब्रह्माणं सुसुखाभ्यां सुरेश्वरः ॥३७॥
मां विद्धि परमात्मानं तव पुत्रत्वमागतम् । एते चैकादश रुद्रास्त्वां सुरक्षितुमागताः ॥३८॥
तस्मात्तीव्रामिमाम्मूर्छां विधूय मदनुग्रहात् । प्रबुद्धस्व यथापूर्वं प्रजा वै स्रष्टुमर्हसि ॥३९॥
एवं भगवता प्रोक्तो ब्रह्मा प्रीतमना ह्यभूत् । नानाष्टकेन विश्वात्मा तुष्टाव परमेश्वरम् ॥४०॥

ब्रह्मोवाच ॥
नमस्ते भगवन् रुद्र भास्करामिततेजसे । नमो भवाय देवाय रसायाम्बुमयात्मने ॥
शर्वाय क्षितिरूपाय नन्दीसुरभये नमः ॥४१॥
ईशाय वसवे तुभ्यं नमस्स्पर्शमयात्मने । पशूनां पतये चैव पावकायातितेजसे ॥
भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥४२॥
उग्रायोग्रस्वरूपाय यजमानात्मने नमः । महादेवाय सोमाय नमोस्त्वमृतमूर्तये ॥४३॥
एवं स्तुत्वा महादेवं ब्रह्मा लोकपितामहः । प्रार्थयामास विश्वेशं गिरा प्रणतिपूर्वया ॥४४॥
भगवन् भूतभव्येश मम पुत्र महेश्वर । सृष्टिहेतोस्त्वमुत्पन्नो ममाङ्गेऽनंगनाशनः ॥४५॥
तस्मान्महति कार्येस्मिन् व्यापृतस्य जगत्प्रभो । सहायं कुरु सर्वत्र स्रष्टुमर्हसि स प्रजाः ॥४६॥
तेनैषां पावितो देवो रुद्रस्त्रिपुरमर्दनः । बाढमित्येव तां वाणीं प्रतिजग्राह शंकरः ॥४७॥
ततस्स भगवान् ब्रह्मा हृष्टं तमभिनंद्य च । स्रष्टुं तेनाभ्यनुज्ञातस्तथान्याश्चासृजत्प्रजाः ॥४८॥
मरीचिभृग्वंगिरसः पुलस्त्यं पुलहं क्रतुम् । दक्षमत्रिं वसिष्ठं च सोऽसृजन्मनसैव च ॥
पुरस्तादसृजद्ब्रह्मा धर्मं संकल्पमेव च ॥४९॥
इत्येते ब्रह्मणः पुत्रा द्वादशादौ प्रकीर्तिताः । सह रुद्रेण संभूताः पुराणा गृहमेधिनः ॥५०॥
तेषां द्वादश वंशाः स्युर्दिव्या देवगणान्विताः । प्रजावन्तः क्रियावन्तो महर्षिभिरलंकृताः ॥५१॥
अथ देवासुरपितॄन्मनुष्यांश्च चतुष्टयम् । सह रुद्रेण सिसृक्षुरंभस्येतानि वै विधिः ॥५२॥
स सृष्ट्यर्थं समाधाय ब्रह्मात्मानमयूयुजत् । मुखादजनयद्देवान् पितॄंश्चैवोपपक्षतः ॥५३॥
जघनादसुरान् सर्वान् प्रजनादपि मानुषान् । अवस्करे क्षुधाविष्टा राक्षसास्तस्य जज्ञिरे ॥५४॥
पुत्रास्तमोरजःप्राया बलिनस्ते निशाचराः । सर्पा यक्षास्तथा भूता गन्धर्वाः संप्रजज्ञिरे ॥५५॥
वयांसि पक्षतः सृष्टाः पक्षिणो वक्षसोऽसृजत् । मुखतोजांस्तथा पार्श्वादुरगांश्च विनिर्ममे ॥५६॥
पद्भ्यां चाश्वान्समातंगान् शरभान् गवयान्मृगान् । उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्याश्च जातयः ॥५७॥
औषध्यः फलमूलानि रोमभ्यस्तस्य जज्ञिरे । गायत्रीं च ऋचं चैव त्रिवृत्साम रथंतरम् ॥५८॥
अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् । यजूंषि त्रैष्टुभं छंदःस्तोमं पञ्चदशं तथा ॥५९॥
बृहत्साम तथोक्थं च दक्षिणादसृजन्मुखात् । सामानि जगतीछंदः स्तोमं सप्तदशं तथा ॥६०॥
वैरूप्यमतिरात्रं च पश्चिमादसृजन्मुखात् । एकविंशमथर्वाणमाप्तोर्यामाणमेव च ॥६१॥
अनुष्टुभं स वैराजमुत्तरादसृजन्मुखात् । उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥६२॥
यक्षाः पिशाचा गन्धर्वास्तथैवाप्सरसां गणाः । नरकिन्नररक्षांसि वयःपशुमृगोरगाः ॥६३॥
अव्ययं चैव यदिदं स्थाणुस्थावरजंगमम् । तेषां वै यानि कर्माणि प्राक्सृष्टानि प्रपेदिरे ॥६४॥
तान्येव ते प्रपद्यंते सृज्यमानाः पुनः पुनः । हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥६५॥
तद्भाविताः प्रपद्यंते तस्मात्तत्तस्य रोचते । महाभूतेषु नानात्वमिन्द्रियार्थेषु मुक्तिषु ॥६६॥
विनियोगं च भूतानां धातैव व्यदधत्स्वयम् । नाम रूपं च भूतानां प्राकृतानां प्रपञ्चनम् ॥६७॥
वेदशब्देभ्य एवादौ निर्ममेऽसौ पितामहः । आर्षाणि चैव नामानि याश्च वेदेषु वृत्तयः ॥६८॥
शर्वर्यंते प्रसूतानां तान्येवैभ्यो ददावजः । यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ॥६९॥
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । इत्येष करणोद्भूतो लोकसर्गस्स्वयंभुवः ॥७०॥
महदाद्योविशेषान्तो विकारः प्रकृतेः स्वयम् । चंद्रसूर्यप्रभाजुष्टो ग्रहनक्षत्रमण्डितः ॥७१॥
नदीभिश्च समुद्रैश्च पर्वतैश्च स मण्डितः । पुरैश्च विविधैरम्यैस्स्फीतैर्जनपदैस्तथा ॥७२॥
तस्मिन् ब्रह्मवनेऽव्यक्तो ब्रह्मा चरति सर्ववित् । अव्यक्तबीजप्रभव ईश्वरानुग्रहे स्थितः ॥७३॥
बुद्धिस्कंधमहाशाख इन्द्रियान्तरकोटरः । महाभूतप्रमाणश्च विशेषामलपल्लवः ॥७४॥
धर्माधर्मसुपुष्पाढ्यः सुखदुःखफलोदयः । आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ॥७५॥
द्यां मूर्द्धानं तस्य विप्रा वदंति खं वै नाभिं चंद्रसूर्यौ च नेत्रे । दिशः श्रोत्रे चरणौ च क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥७६॥

वक्त्रात्तस्य ब्रह्मणास्संप्रसूतास्तद्वक्षसः क्षत्रियाः पूर्वभागात् ।वैश्या उरुभ्यां तस्य पद्भ्यां च शूद्राः सर्वे वर्णा गात्रतः संप्रसूताः ॥७७॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सृष्टिवर्णनं नाम द्वादशोऽध्यायः ॥१२॥

आदितः श्लोकानां समष्ट्यङ्काः-२०,६३०+७७=२०,७०७



## ॥ अथ त्रयोदशोऽध्यायः ॥

ऋषय ऊचुः ॥

भवता कथिता सृष्टिर्भवस्य परमात्मनः । चतुर्मुखमुखात्तस्य संशयो नः प्रजायते ॥१॥
देवश्रेष्ठो विरूपाक्षो दीप्तश्शूलधरो हरः । कालात्मा भगवान् रुद्रः कपर्दी नीललोहितः ॥२॥
सब्रह्मकमिमं लोकं सविष्णुमपि पावकम् । यः संहरति संक्रुद्धो युगान्ते समुपस्थिते ॥३॥
यस्य ब्रह्मा च विष्णुश्च प्रणामं कुरुतो भयात् । लोकसंकोचकस्यास्य यस्य तौ वशवर्तिनौ ॥४॥
योऽयं देवः स्वकादंगाद्ब्रह्मविष्णू पुरासृजत् । स एव हि तयोर्नित्यं योगक्षेमकरः प्रभुः ॥५॥
स कथं भगवान् रुद्र आदिदेवः पुरातनः । पुत्रत्वमगमच्छंभुर्ब्रह्मणो ऽव्यक्तजन्मनः ॥६॥
प्रजापतिश्च विष्णुश्च रुद्रस्यैतौ परस्परम् । सृष्टौ परस्परस्याङ्गादिति प्रागपि शुश्रुम ॥७॥
कथं पुनरशेषाणां भूतानां हेतुभूतयोः । गुणप्रधानभावेन प्रादुर्भावः परस्परात् ॥८॥
नापृष्टं भवता किञ्चिन्नाश्रुतं च कथंचन । भगवच्छिष्यभूतेन भवता सकलं स्मृतम् ॥९॥
तत्त्वं वद यथा ब्रह्मा मुनीनामवदद्विभुः । वयं श्रद्धालवस्तात श्रोतुमीश्वरसद्यशः ॥१०॥

वायुरुवाच ॥

स्थाने पृष्टमिदं विप्रा भवद्भिः प्रश्नकोविदैः । इदमेव पुरा पृष्टो मम प्राह पितामहः ॥११॥
तदहं सम्प्रवक्ष्यामि यथा रुद्रसमुद्भवः । यथा च पुनरुत्पत्तिर्ब्रह्मविष्ण्वोः परस्परम् ॥१२॥
त्रयस्ते कारणात्मानो जतास्साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः ॥१३॥
परमैश्वर्यसंयुक्ताः परमेश्वरभाविताः । तच्छक्त्याधिष्ठिता नित्यं तत्कार्यकरणक्षमाः ॥१४॥
पित्रा नियमिताः पूर्वं त्रयोपि त्रिषु कर्मसु । ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे तथा ॥१५॥
तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयाशिनः । तपसा तोषयित्वा स्वं पितरं परमेश्वरम् ॥१६॥
लब्ध्वा सर्वात्मना तस्य प्रसादात्परमेष्ठिनः । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥१७॥
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवान्रुद्रं ब्रह्माणमसृजत्पुनः ॥१८॥
नारायणं पुनर्ब्रह्मा ब्रह्माणमसृजत्पुनः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ॥१९॥
परस्परेण जायन्ते परस्परहितैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥२०॥
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् । शृणु तेषां कथां चित्रां पुण्यां पापप्रमोचिनीम् ॥२१॥
कल्पे तत्पुरुषे वृत्तां ब्रह्मणः परमेष्ठिनः । पुरा नारायणो नाम कल्पे वै मेघवाहने ॥२२॥
दिव्यं वर्षसहस्रं तु मेघो भूत्वावहद्धराम् । तस्य भावं समालक्ष्य विष्णोर्विश्वजगद्गुरुः ॥२३॥
सर्वस्सर्वात्मभावेन प्रददौ शक्तिमव्ययाम् । शक्तिं लब्ध्वा तु सर्वात्मा शिवात्सर्वेश्वरात्तदा ॥२४॥
ससर्ज भगावन् विष्णुर्विश्वं विश्वसृजा सह । विष्णोस्तद्वैभवं दृष्ट्वा सृष्टस्तेन पितामहः ॥२५॥
ईर्ष्यया परया ग्रस्तः प्रहसन्निदमब्रवीत् । गच्छ विष्णो मया ज्ञातं तव सर्गस्य कारणम् ॥
आवयोरधिकश्चास्ति स रुद्रो नात्र संशयः ॥२६॥
तस्य देवाधिदेवस्य प्रसादात्परमेष्ठिनः । स्रष्टा त्वं भगवानाद्यः पालकः परमार्थतः ॥२७॥
अहं च तपसाराध्य रुद्रं त्रिदशनायकम् । त्वया सह जगत्सर्वं स्रक्ष्याम्यत्र न संशयः ॥२८॥
एवं विष्णुमुपालभ्य भगवानब्जसम्भवः । एवं विज्ञापयामास तपसा प्राप्य शंकरम् ॥२९॥
भगवन् देवदेवेश विश्वेश्वर महेश्वर । तव वामाङ्गजो विष्णुर्दक्षिणाङ्गभवो ह्यहम् ॥३०॥
मया सह जगत्सर्वं तथाप्यसृजदच्युतः । स मत्सरादुपालब्धस्त्वदाश्रयबलान्मया ॥३१॥

मद्भावान्नाधिकस्तेति भावस्त्वयि महेश्वरे । त्वत्त एव समुत्पत्तिरावयोस्सदृशी यतः ॥३२॥
तस्य भक्त्या यथापूर्वं प्रसादं कृतवानसि । तथा ममापि तत्सर्वं दातुमर्हसि शंकर ॥३३॥
इति विज्ञापितस्तेन भगवान् भगनेत्रहा । न्यायेन वै ददौ सर्वं तस्यापि स घृणानिधिः ॥३४॥
लब्ध्वैवमीश्वरादेव ब्रह्मा सर्वात्मतां क्षणात् । त्वरमाणोथ संगम्य ददर्श पुरुषोत्तमम् ॥३५॥
क्षीरार्णवालये शुभ्रे विमाने सूर्यसंनिभे । हेमरत्नान्विते दिव्ये मनसा तेन निर्मिते ॥३६॥
अनन्तभोगशय्यायां शयानं पंकजेक्षणम् । चतुर्भुजमुदाराङ्गं सर्वाभरणभूषितम् ॥३७॥
शंखचक्रधरं सौम्यं चन्द्रबिंबसमाननम् । श्रीवत्सवक्षसं देवं प्रसन्नमधुरस्मितम् ॥३८॥
धरामृदुकरांभोजस्पर्शरक्तपदांबुजम् । क्षीरार्णवामृतमिव शयानं योगनिद्रया ॥३९॥
तमसा कालरुद्राख्यं रजसा कनकांडजम् । सत्त्वेन सर्वगं विष्णुं निर्गुणत्वे महेश्वरम् ॥४०॥
तं दृष्ट्वा पुरुषं ब्रह्मा प्रगल्भमिदमब्रवीत् । ग्रसामि त्वामहं विष्णो त्वमात्मानं यथा पुरा ॥४१॥
तस्य तद्वचनं श्रुत्वा प्रतिबुद्धय पितामहम् । उदैक्षत महाबाहुस्स्मितमीषच्चकार च ॥४२॥
तस्मिन्नवसरे विष्णुर्ग्रस्तस्तेन महात्मना । सृष्टश्च ब्रह्मणा सद्यो भ्रुवोर्मध्यादयत्नतः ॥४३॥
तस्मिन्नवसरे साक्षाद्भगवानिन्दुभूषणः । शक्तिं तयोरपि द्रष्टुमरूपो रूपमास्थितः ॥४४॥
प्रसादमतुलं कर्तुं पुरा दत्तवरस्तयोः । आगच्छत्तत्र यत्रेमौ ब्रह्मनारायणौ स्थितौ ॥४५॥
अथ तुष्टुवतुर्देवं प्रीतौ भीतौ च कौतुकात् । प्रणेमतुश्च बहुशो बहुमानेन दूरतः ॥४६॥
भवोपि भगवानेतावनुगृह्य पिनाकधृक् । सादरं पश्यतोरेव तयोरन्तरधीयत ॥४७॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे ब्रह्मविष्णुसृष्टिकथनं नाम त्रयोदशोऽध्यायः ॥१३॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,७०७+४७=२०,७५४



## ॥ अथ चतुर्दशोऽध्यायः ॥

वायुरुवाच ॥
प्रतिकल्पं प्रवक्ष्यामि रुद्राविर्भावकारणम् । यतो विच्छिन्नसन्ताना ब्रह्मसृष्टिः प्रवर्तते ॥१॥
कल्पेकल्पे प्रजाः सृष्ट्वा ब्रह्मा ब्रह्मांडसंभवः । अवृद्धिहेतोर्भूतानां मुमोह भृशदुःखितः ॥२॥
तस्य दुःखप्रशान्त्यर्थं प्रजानां च विवृद्धये । तत्तत्कल्पेषु कालात्मा रुद्रो रुद्रगणाधिफ ॥३॥
निर्दिष्टः परमेशेन महेशो नीललोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोनुजः ॥४॥
स एव भगवानीशस्तेजोराशिरनामयः । अनादिनिधनोधाता भूतसंकोचको विभुः ॥५॥
परमैश्वर्यसंयुक्तः परमेश्वरभावितः । तच्छक्त्याधिष्ठितश्शश्वत्तच्चिह्नैरपि चिह्नितः ॥६॥
तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः । तत्तुल्यव्यवहारश्च तदाज्ञापरिपालकः ॥७॥
सहस्रादित्यसंकाशश्चन्द्रावयवभूषणः । भुजंगहारकेयूरवलयो मुंजमेखलः ॥८॥
जलंधरविरिंचेन्द्रकपालशकलोज्ज्वलः । गङ्गातुङ्गतरङ्गार्धपिंगलाननमूर्द्धजः ॥९॥
भग्नदंष्ट्राङ्कुराक्रान्तप्रान्तकान्तधराधरः । सव्यश्रवणपार्श्वान्तमण्डलीकृतकुण्डलः ॥१०॥
महावृषभनिर्याणो महाजलदनिःस्वनः । महानलसमप्रख्यो महाबलपराक्रमः ॥११॥
एवं घोरमहारूपो ब्रह्मपुत्री महेश्वरः । विज्ञानं ब्रह्मणे दत्त्वा सर्गे सहकरोति च ॥१२॥
तस्माद्रुद्रप्रसादेन प्रतिकल्पं प्रजापतेः । प्रवाहरूपतो नित्या प्रजासृष्टिः प्रवर्तते ॥१३॥
कदाचित्प्रार्थितः स्रष्टुं ब्रह्मणा नीललोहितः । स्वात्मना सदृशान् सर्वान् ससर्ज मनसा विभुः ॥१४॥
कपर्दिनो निरातंकान्नीलग्रीवांस्त्रिलोचनान् । जरामरणनिर्मुक्तान् दीप्तशूलवरायुधान् ॥१५॥
तैस्तु सञ्च्छादितं सर्वं चतुर्दशविधं जगत् । तान्दृष्ट्वा विविधान्रुद्रान् रुद्रमाह पितामहः ॥१६॥
नमस्ते देवदेवेश मास्राक्षीरीदृशीः प्रजाः । अन्याः सृज त्वं भद्रं ते प्रजा मृत्युसमन्विताः ॥१७॥
इत्युक्तः प्रहसन्प्राह ब्रह्माणं परमेश्वरः । नास्ति मे तादृशस्सर्गस्सृजत्वमशुभाः प्रजाः ॥१८॥
ये त्विमे मनसा सृष्टा महात्मानो महाबलाः । चरिष्यन्ति मया सार्धं सर्व एव हि याज्ञिकाः ॥१९॥

इत्युक्त्वा विश्वकर्माणं विश्वभूतेश्वरो हरः । सह रुद्रैः प्रजासर्गान्निवृत्तात्मा व्यतिष्ठत ॥२०॥
ततः प्रभृति देवोऽसौ न प्रसूते प्रजाः शुभाः । ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम् ॥२१॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे रुद्राविर्भाववर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,७५४+२१=२०,७७५



## ॥ अथ पञ्चदशोऽध्यायः ॥

वायुरुवाच ॥

यदा पुनः प्रजाः सृष्टा न व्यवर्धन्त वेधसः । तदा मैथुनजां सृष्टिं ब्रह्मा कर्तुममन्यत ॥१॥
न निर्गतं पुरा यस्मान्नारीणां कुलमीश्वरात् । तेन मैथुनजां सृष्टिं न शशाक पितामहः ॥२॥
ततस्स विदधे बुद्धिमर्थनिश्चयगामिनीम् । प्रजानमेव वृद्ध्यर्थं प्रष्टव्यः परमेश्वर ॥३॥
प्रसादेन विना तस्य न वर्धेरन्निमाः प्रजाः । एवं संचिन्त्य विश्वात्मा तपः कर्तुं प्रचक्रमे ॥४॥
तदाद्या परमा शक्तिरनन्ता लोकभाविनी । आद्या सूक्ष्मतरा शुद्धा भावगम्या मनोहरा ॥५॥
निर्गुणा निष्प्रपञ्चा च निष्कला निरुपप्लवा । निरन्तरतरा नित्या नित्यमीश्वरपार्श्वगा ॥६॥
तया परमया शक्त्या भगवंतं त्रियम्बकम् । संचिन्त्य हृदये ब्रह्मा तताप परमं तपः ॥७॥
तीव्रेण तपसा तस्य युक्तस्य परमेष्ठिनः । अचिरेणैव कालेन पिता संप्रतुतोष ह ॥८॥
ततः केनचिदंशेन मूर्तिमाविश्य कामपि । अर्धनारीश्वरो भूत्वा ययौ देवस्स्वयं हरः ॥९॥
तं दृष्ट्वा परमं देवं तमसः परमव्ययम् । अद्वितीयमनिर्देश्यमदृश्यमकृतात्मभिः ॥१०॥
सर्वलोकविधातारं सर्वलोकेश्वरेश्वरम् । सर्वलोकविधायिन्या शक्त्या परमया युतम् ॥११॥
अप्रतर्क्यमनाभासममेयमजरं ध्रुवम् । अचलं निर्गुणं शान्तमनन्तमहिमास्पदम् ॥१२॥
सर्वगं सर्वदं सर्वसदसद्व्यक्तिवर्जितम् । सर्वोपमाननिर्मुक्तं शरण्यं शाश्वतं शिवम् ॥१३॥
प्रणम्य दण्डवद्ब्रह्मा समुत्थाय कृताञ्जलिः । श्रद्धाविनयसंपन्नैः श्राव्यैः संस्करसंयुतैः ॥१४॥
यथार्थयुक्तसर्वार्थैर्वेदार्थपरिबृंहितैः । तुष्टाव देवं देवीं च सूक्तैः सूक्ष्मार्थगोचरैः ॥१५॥

ब्रह्मोवाच ॥

जय देव महादेव जयेश्वर महेश्वर । जय सर्वगुण श्रेष्ठ जय सर्वसुराधिप ॥१६॥
जय प्रकृति कल्याणि जय प्रकृतिनायिके । जय प्रकृतिदूरे त्वं जय प्रकृतिसुन्दरि ॥१७॥
जयामोघमहामाय जयामोघ मनोरथ । जयामोघमहालील जयामोघमहाबल ॥१८॥
जय विश्वजगन्मातर्जय विश्वजगन्मये । जय विश्वजगद्धात्रि जय विश्वजगत्सखि ॥१९॥
जय शाश्वतिकैश्वर्ये जय शाश्वतिकालय । जय शाश्वतिकाकार जय शाश्वतिकानुग ॥२०॥
जयात्मत्रयनिर्मात्रि जयात्मत्रयपालिनि । जयात्मत्रयसंहर्त्रि जयात्मत्रयनायिके ॥२१॥
जयावलोकनायत्तजगत्कारणबृंहण । जयोपेक्षाकटाक्षोत्थहुतभुग्भुक्तभौतिक ॥२२॥
जय देवाद्यविज्ञेये स्वात्मसूक्ष्मदृशोज्वले । जय स्थूलात्मशक्त्येशेजय व्याप्तचराचरे ॥२३॥
जय नामैकविन्यस्तविश्वतत्त्वसमुच्चय । जयासुरशिरोनिष्ठश्रेष्ठानुगकदंबक ॥२४॥
जयोपाश्रितसंरक्षासंविधानपटीयसि । जयोन्मूलितसंसारविषवृक्षाङ्कुरोद्गमे ॥२५॥
जय प्रादेशिकैश्वर्यवीर्यशौर्यविजृंभण । जय विश्वबहिर्भूत निरस्तपरवैभव ॥२६॥
जय प्रणीतपञ्चार्थप्रयोगपरमामृत । जय पञ्चार्थविज्ञानसुधास्तोत्रस्वरूपिणि ॥२७॥
जयति घोरसंसारमहारोगभिषग्वर । जयानादिमलाज्ञानतमःपटलचंद्रिके ॥२८॥
जय त्रिपुरकालाग्ने जय त्रिपुरभैरवि । जय त्रिगुणनिर्मुक्ते जय त्रिगुणमर्दिनि ॥२९॥
जय प्रथमसर्वज्ञ जय सर्वप्रबोधिक । जय प्रचुरदिव्याङ्ग जय प्रार्थितदायिनि ॥३०॥
क्व देव ते परं धाम क्व च तुच्छं च नो वचः । तथापि भगवन् भक्त्या प्रलपंतं क्षमस्व माम् ॥३१॥
विज्ञाप्यैवंविधैः सूक्तैर्विश्वकर्मा चतुर्मुखः । नमश्चकार रुद्राय रद्राण्यै च मुहुर्मुहुः ॥३२॥

इदं स्तोत्रवरं पुण्यं ब्रह्मणा समुदीरितम् । अर्धनारीश्वरं नामीशिवयोर्हर्षवर्द्धनम् ॥३३॥
य इदं कीर्तयेद्भक्त्या यस्य कस्यापि शिक्षया । स तत्फलमवाप्नोति शिवयोः प्रीतिकारणात् ॥३४॥
सकलभुवनभूतभावनाभ्यां जननविनाशविहीनविग्रहाभ्याम् । नरवरयुवतीवपुर्द्धराभ्यां सततमहं प्रणतोस्मि शंकराभ्याम् ॥३५॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवशिवास्तुतिवर्णनं नाम पञ्चदशोऽध्यायः ॥१५॥
आदितः श्लोकानां समष्टयङ्काः-२०,७७५+३४=२०,८०९



## ॥ अथ षोडशोऽध्यायः ॥

वायुरुवाच ॥
अथ देवो महादेवो महाजलदनादया । वाचा मधुरगंभीर शिवदश्लक्ष्णवर्णया ॥१॥
अर्थसंपन्नपदया राजलक्षणयुक्तया । अशेषविषयारंभरक्षाविमलदक्षया ॥२॥
मनोहरतरोदारमधुरस्मितपूर्वया । संबभाषे सुसंपीतो विश्वकर्माणमीश्वरः ॥३॥
ईश्वर उवाच ॥
वत्स वत्स महाभाग मम पुत्र पितामह । ज्ञातमेव मया सर्वं तव वाक्यस्य गौरवम् ॥४॥
प्रजानामेव बृद्ध्यर्थं तपस्तप्तं त्वयाधुना । तपसाऽनेन तुष्टोस्मि ददामि च तवेप्सितम् ॥५॥
इत्युक्त्वा परमोदारं स्वभावमधुरं वचः । ससर्ज वपुषो भागाद्देवीं देववरो हरः ॥६॥
यामाहुर्ब्रह्मविद्वांसो देवीं दिव्यगुणान्विताम् । परस्य परमां शक्तिं भवस्य परमात्मनः ॥७॥
यस्यां न खलु विद्यंते जन्म मृत्युजरादयः । या भवानी भवस्याङ्गात्समाविरभवत्किल ॥८॥
यस्या वाचो निवर्तन्ते मनसा चेंद्रियैः सह । सा भर्तुर्वपुषो भागाज्जातेव समदृश्यत ॥९॥
या सा जगदिदं कृत्स्नं महिम्ना व्याप्य तिष्ठति । शरीरिणीव स देवी विचित्रं समलक्ष्यत ॥१०॥
सर्वं जगदिदं चैषा संमोहयति मायया । ईश्वरात्सैव जाताभूदजाता परमार्थतः ॥११॥
न यस्या परमो भावः सुराणामपि गोचरः । विश्वामरेश्वरी चैव विभक्ता भर्तुरङ्गतः ॥१२॥
तां दृष्ट्वा परमेशानीं सर्वलोकमहेश्वरीम् । सर्वज्ञां सर्वगां सूक्ष्मां सदसद्व्यक्तिवर्जिताम् ॥१३॥
परमां निखिलं भासा भासयन्तीमिदं जगत् । प्रणिपत्य महादेवीं प्रार्थयामास वै विराट् ॥१४॥
ब्रह्मोवाच ॥
देवि देवेन सृष्टोऽहमादौ सर्वजगन्मयि । प्रजासर्गे नियुक्तश्च सृजामि सकलं जगत् ॥१५॥
मनसा निर्मिताः सर्वे देवि देवादयो मया । न वृद्धिमुपगच्छन्ति सृज्यमानाः पुनः पुनः ॥१६॥
मिथुनप्रभवामेव कृत्वा सृष्टिमतः परम् । संवर्धयितुमिच्छामि सर्वा एव मम प्रजाः ॥१७॥
न निर्गतं पुरा त्वत्तो नारीणां कुलमव्ययम् । तेन नारीकुलं स्रष्टुं शक्तिर्मम न विद्यते ॥१८॥
सर्वासामेव शक्तीनां त्वत्तः खलु समुद्भवः । तस्मात्सर्वत्र सर्वेषां सर्वशक्तिप्रदायिनीम् ॥१९॥
त्वामेव वरदां मायां प्रार्थयामि सुरेश्वरीम् । चराचरविवृद्ध्यर्थमंशेनैकेन सर्वगे ॥२०॥
दक्षस्य मम पुत्रस्य पुत्री भव भवार्दिनि । एवं सा याचिता देवी ब्रह्मणा ब्रह्मयोनिना ॥२१॥
शक्तिमेकां भ्रुवोर्मध्यात्ससर्जात्मसमप्रभाम् । तामाह प्रहसन्प्रेक्ष्य देवदेववरो हरः ॥२२॥
ब्रह्माणं तपसाराध्य कुरु तस्य यथेप्सितम् । तामाज्ञां परमेशस्य शिरसा प्रतिगृह्य सा ॥२३॥
ब्रह्मणो वचनाद्देवी दक्षस्य दुहिताभवत् । दत्त्वैवमतुलां शक्तिं ब्रह्मणे ब्रह्मरूपिणीम् ॥२४॥
विवेश देहं देवस्य देवश्चान्तरधीयत । तदा प्रभृति लोकेऽस्मिन् स्त्रियां भोगः प्रतिष्ठितः ॥२५॥
प्रजासृष्टिश्च विप्रेंद्रा मैथुनेन प्रवर्तते । ब्रह्मापि प्राप सानन्दं सन्तोषं मुनिपुंगवाः ॥२६॥
एतद्वस्सर्वमाख्यातं देव्याः शक्तिसमुद्भवम् । पुण्यवृद्धिकरं श्राव्यं भूतसर्गानुपंगतः ॥२७॥
य इदं कीर्तयेन्नित्यं देव्याः शक्तिसमुद्भवम् । पुण्यं सर्वमवाप्नोति पुत्रांश्च लभते शुभान् ॥२८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे देवीशक्त्युद्भवो नाम षोडशोऽध्यायः ॥१६॥

आदितः श्लोकानां समष्टयङ्काः-२०,८०९+२८=२०,८३७



## ॥ अथ सप्तदशोऽध्यायः ॥

वायुरुवाच ॥

एवं लब्ध्वा परां शक्तिमीश्वरादेव शाश्वतीम् । मैथुनप्रभवां सृष्टिं कर्तृकामः प्रजापतिः ॥१॥
स्वयमप्यद्धतो नारी चार्धेन पुरुषोऽभवत् । यार्धेन नारी सा तस्माच्छतरूपा व्यजायत ॥२॥
विराजमसृजद्ब्रह्मा सोऽर्धन पुरुषोऽभवत् । स वै स्वायंभुवः पूर्वं पुरुषो मनुरुच्यते ॥३॥
सा देवी शतरूपा तु तफ कृत्वा सुदुश्चरम् । भर्तारं दीप्तयशसं मनुमेवान्वपद्यत ॥४॥
तस्मात्तु शतरूपा सा पुत्रद्वयमसूयत । प्रियव्रतोत्तानपादौ पुत्रौ पुत्रवतां वरौ ॥५॥
कन्ये द्वे च महाभागे याभ्यां जातास्त्विमाः प्रजाः । आकूतिरेका विज्ञेया प्रसूतिरपरा स्मृता ॥६॥
स्वायंभुवः प्रसूतिं च ददौ दक्षाय तां प्रभुः । रुचेः प्रजापतिश्चैव चाकूतिं समपादयत् ॥७॥
आकूत्यां मिथुनं जज्ञे मानसस्य रुचेः शुभम् । यज्ञश्च दक्षिणा चैव याभ्यां संवर्तितं जगत् ॥८॥
स्वायंभुवसुतायां तु प्रसूत्यां लोकमातरः । चतस्रो विंशतिः कन्या दक्षस्त्वजनयत्प्रभुः ॥९॥
श्रद्धा लक्ष्मीर्धृतिः पुष्टिस्तुष्टिर्मेधा क्रिया तथा । बुद्धिर्लज्जा वपुः शान्तिस्सिद्धिः कीर्तिस्त्रयोदशी ॥१०॥
पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः । ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ॥११॥
ख्यातिः सत्यर्थसंभूतिः स्मृतिः प्रीतिः क्षमा तथा । सन्नतिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ॥१२॥
भृगुश्शर्वो मरीचिश्च अंगिराः पुलहः क्रतुः । पुलस्त्योऽत्रिर्विशिष्ठश्च पावकः पितरस्तथा ॥१३॥
ख्यात्याद्या जगृहुः कन्यामुनयो मुनिसत्तमाः । कामाद्यास्तु यशोंता ये ते त्रयोदश सूनवः ॥१४॥
धर्मस्य जज्ञिरे तास्तु श्रद्धाद्यास्सुसुखोत्तराः । दुःखोत्तराश्च हिंसायामधर्मस्य च सन्ततौ ॥१५॥
निकृत्यादय उत्पन्नाःपुत्राश्च धर्मलक्षणाः । नैषां भार्याश्च पुत्रा वा सर्वे त्वनियमाः स्मृताः ॥१६॥
स एष तामसस्सर्गो जज्ञे धर्मनियामकः । या सा दक्षस्य दुहिता रुद्रस्य दयिता सती ॥१७॥
भर्तृनिन्दाप्रसंगेन त्यक्त्वा दाक्षायिणीं तनुम् । दक्षं च दक्षभार्यां च विनिंद्य सह बन्धुभिः ॥१८॥
सा मेनायामाविरभूत्पुत्री हिमवतो गिरेः । रुद्रस्तु तां सतीं दृष्ट्वा रुद्रांस्त्वात्मसमप्रभान् ॥१९॥
यथासृजदसंख्यातांस्तथा कथितमेव च । भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया ॥२०॥
देवौ धातृविधातारौ मन्वंतरविधारिणौ । तयोर्वै पुत्रपौत्राद्याश्शतशोऽथ सहस्रशः ॥२१॥
स्वायंभुवेऽन्तरे नीताः सर्वे ते भार्गवा मताः । मरीचेरपि संभूतिः पौर्णमासमसूयत ॥२२॥
कन्याचतुष्टयं चैव महीयांसस्तदन्वयाः । येषां वंशे समुत्पन्नो बहुपुत्रस्य कश्यफ ॥२३॥
स्मृतिश्चांगिरसः पत्नी जनयामास वै सुतौ । आग्नीध्रं शरभञ्चैव तथा कन्याचतुष्टयम् ॥२४॥
तदीयाः पुत्रपौत्राश्च येतीतास्ते सहस्रशः । प्रीत्यां पुलस्त्यभार्यायां दन्तोग्निरभवत्सुतः ॥
पूर्वजन्मनि योगस्त्यस्स्मृतः स्वायंभुवेऽन्तरे ॥२५॥
तत्सन्ततीया बहवः पौलस्त्या इति विश्रुताः । क्षमा तु सुषुवे पुत्रान्पुलहस्य प्रजापतेः ॥२६॥
कर्दमश्च सुरिश्चैव सहिष्णुश्चेति ते त्रयः । त्रेताग्निवर्चसस्सर्वे येषां वंशः प्रतिष्ठितः ॥२७॥
क्रतोः क्रतुसमान्भार्या सन्नतिस्सुषुवे सुतान् । नैषां भार्याश्च पुत्राश्च सर्वे ते ह्यूर्ध्वरेतसः ॥२८॥
षष्टिस्तानि सहस्राणि वालखिल्या इति स्मृताः । अनूरोरग्रतो यांति परिवार्य दिवाकरम् ॥२९॥
अत्रेर्भार्यानुसूया च पञ्चात्रेयानसूयत । कन्यकां च श्रुतिं नाम माता शंखपदस्य च ॥३०॥
सत्यनेत्तश्च हव्यश्च आपोमूर्तिश्शनैश्चरः । सोमश्च पञ्चमस्त्वेते पञ्चात्रेयाः प्रकीर्तिताः ॥३१॥
तेषां पुत्राश्च पौत्राश्च ह्यात्रेयाणां महात्मनाम् । स्वायंभुवेऽन्तरेऽतीताः शतशोऽथ सहस्रशः ॥३२॥
ऊर्जायां तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे । ज्यायसी च स्वसा तेषां पुण्डरीका सुमध्यमा ॥३३॥
रजो गात्रोर्ध्वबाहू च सवनश्चानयश्च यः । सुतपाश्शुक्र इत्येते सप्त सप्तर्षयः स्मृताः ॥३४॥
गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनाम् । स्वायंभुवेऽन्तरेऽतीतान्यर्बुदानि शतानि च ॥३५॥

इत्येष ऋषिसर्गस्तु सानुबन्धः प्रकीर्तितः । समासाद्विस्तराद्वक्तुमशक्योऽयमिति द्विजाः ॥३६॥
योऽसौ रुद्रात्मको बह्निब्रह्मणो मानसस्सुतः । स्वाहा तस्य प्रिया लेभे पुत्रांस्त्रीनमितौजसः ॥३७॥
पावकः पवमानश्च शुचिरित्येष ते त्रयः । निर्मंथ्यः पवमानस्स्याद्वैद्युतः पावकस्स्मृतः ॥३८॥
सूर्ये तपति यश्चासौ शुचिः सौर उदाहृतः । हव्यवाहः कव्यवाहः सहरक्षा इति त्रयः ॥३९॥
त्रयाणां क्रमशः पुत्रा देवपितृसुराश्च ते । एतेषां पुत्रपौत्राश्च चत्वारिंशन्नवैव ते ॥४०॥
काम्यनैमित्तिकाजस्रकर्मसु त्रिषु संस्थिताः । सर्वे तपस्विनो ज्ञेयाः सर्वे व्रतभृतस्तथा ॥४१॥
सर्वे रुद्रात्मकश्चैव सर्वे रुद्रपरायणाः । तस्मादग्निमुखे यत्तद्धुतं स्यादेव केनचित् ॥४२॥
तत्सर्वं रुद्रमुद्दिश्य दत्तं स्यान्नात्र संशयः । इत्येवं निश्चयोग्नीनामनुक्रान्तो यथातथम् ॥४३॥
नातिविस्तरतो विप्राः पितृन्वक्ष्याम्यतः परम् । यस्मात्षड्तवस्तेषां स्थानं स्थानाभिमानिनाम् ॥४४॥
ऋतवः पितरस्तस्मादित्येषा वैदिकी श्रुतिः । युष्माद्तुषु सर्वे हि जायन्ते स्थास्नुजंगमा ॥४५॥
तस्मादेते पितर आर्तवा इति च श्रुतम् । एवं पितृणामेतेषामृतुकालाभिमानिनाम् ॥४६॥
आत्मैश्वर्या महात्मानस्तिष्ठंतीहाब्भ्रसंगमात् । आग्निष्वात्ता बर्हिषदः पितरो द्विविधाः स्मृताः ॥४७॥
अयज्वानश्च यज्वानः क्रमात्ते मृहमेधिनः । स्वधासूत पितृभ्यश्च द्वे कन्ये लोकविश्रुते ॥४८॥
मेनां च धरणीं चैव याभ्यां विश्वमिदं धृतम् । अग्निष्वात्तसुता मेना धरणी बर्हिषत्सुता ॥४९॥
मेना हिमवतः पत्नी मैनाकं क्रौंचमेव च । गौरीं गङ्गां च सुषुवे भवाङ्गाश्लेषपावनीम् ॥५०॥
मेरोस्तु धरणी पत्नी दिव्यौषधिसमन्वितम् । मंदरं सुषुवे पुत्रं चित्रिसुन्दरकन्धरम् ॥५१॥
स एव मंदरः श्रीमान्मेरुपुत्रस्तपोबलात् । साक्षाच्छ्रीकण्ठनाथस्य शिवस्यावसथं गतः ॥५२॥
सासूता धरणी भूयस्त्रिंशत्कन्याश्च विश्रुताः । वेलां च नियतिं चैव तृतीयामपि चायतिम् ॥५३॥
आयतिर्नियतिश्चैव पत्न्यौ द्वे भृगुपुत्रयोः । स्वायंभुवेऽन्तरे पूर्वं कथितस्ते तदन्वयः ॥५४॥
सुषुवे सागराद्वेला कन्यामेकामनिन्दिताम् । सवर्णां नाम सामुद्रीं पत्नीं प्राचीनबर्हिषः ॥५५॥
सामुद्री सुषुवे पुत्रान्दश प्राचीनबर्हिषः । सर्वे प्राचेतसा नाम धनुर्वेदस्य पारगाः ॥५६॥
येषां स्वायंभुवे दक्षः पुत्रत्वमगमत्पुरा । त्रियम्बकस्य शापेन चाक्षुषस्यान्तरे मनोः ॥५७॥
इत्येते ब्रह्मपुत्राणां धर्मादीनाम्महात्मनाम् । नातिसंक्षेपतो विप्रा नाति विस्तरतः क्रमात् ॥५८॥
वर्णिता वै मया वंशा दिव्या देवगणान्विताः । क्रियावंतः प्रजावंतो महर्धिभिरलंकृताः ॥५९॥
प्रजानां संनिवेशोऽयं प्रजापतिसमुद्भवः । न हि शक्यः प्रसंख्यातुं वर्षकोटिशतैरपि ॥६०॥
राज्ञामपि च यो वंशो द्विधा सोऽपि प्रवर्तते । सूर्यवंशस्सोमवंश इति पुण्यतमः क्षितौ ॥६१॥
इक्ष्वाकुरम्बरीषश्च ययातिर्नाहुषादयः । पुण्यश्लोकाः श्रुता येऽत्र ते पि तद्वंशसंभवाः ॥६२॥
अन्ये च राजऋषयो नानावीर्यसमन्विता । किं तैः फलमनुत्क्रान्तैरुक्तपूर्वैः पुरातनैः ॥६३॥
किं चेश्वरकथा वृत्ता यत्र तत्रान्यकीर्तनम् । न सद्भिः संमतं मत्वा नोत्सहे बहुभाषितुम् ॥६४॥
प्रसंगादीश्वरस्यैव प्रभावद्योतनादपि । सर्गादयोऽपि कथिता इत्यत्र तत्प्रविस्तरैः ॥६५॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सृष्टिकथनं नाम सप्तदशोऽध्यायः ॥१७॥
आदितः श्लोकानां समष्ट्यङ्काः-२०,८३७+६५=२०,९०२



## ॥ अथाष्टादशोऽध्यायः ॥

ऋषय ऊचुः ॥
देवी दक्षस्य तनया त्यक्त्वा दाक्षायणी तनुम् । कथं हिमवतः पुत्री मेनायामभवत्पुरा ॥१॥
कथं च निन्दितो रुद्रो दक्षेण च महात्मना । निमित्तमपि किं तत्र येन स्यान्निंदितो भवः ॥२॥
उत्पन्नश्च कथं दक्षो अभिशापाद्भवस्य तु । चाक्षुषस्यान्तरे पूर्वं मनोः प्रब्रूहि मारुत ॥३॥
वायुरुवाच ॥
शृण्वंतु कथयिष्यामि दक्षस्य लघुचेतसः । वृत्तं पापात्प्रमादाच्च विश्वामरविदूषणम् ॥४॥

पुरा सुरासुराः सर्वे सिद्धाश्च परमर्षयः । कदाचिद्द्रष्टुमीशानं हिमवच्छिखरं ययुः ॥५॥
तदा देवश्च देवी च दिव्यासनगतावुभौ । दर्शनं ददतुस्तेषां देवादीनां द्विजोत्तमाः ॥६॥
तदानीमेव दक्षोऽपि गतस्तत्र सहामरैः । जामातरं हरं द्रष्टुं द्रष्टुं चात्मसुतां सतीम् ॥७॥
तदात्मगौरवाद्देवो देव्या दक्षे समागते । देवादिभ्यो विशेषेण न कदाचिदभूत्स्मृतिः ॥८॥
तस्य तस्याः परं भावमज्ञातुश्चापि केवलम् । पुत्रीत्येवं विमूढस्य तस्यां वैरमजायत ॥९॥
ततस्तेनैव वैरेण विधिना च प्रचोदितः । नाजुवाह भवं दक्षो दीक्षितस्तामपि द्विषन् ॥१०॥
अन्याञ्जामातरस्सर्वानाहूय स यथाक्रमम् । शतशः पुष्कलामर्चाञ्चकार च पृथक्पृथक् ॥११॥
तथा तान्संगताञ्छ्रुत्वा नारदस्य मुखात्तदा । ययौ रुद्राय रुद्राणी विज्ञाप्य भवनं पितुः ॥१२॥
अथ संनिहितं दिव्यं विमानं विश्वतोमुखम् । लक्षणाढ्यं सुखारोहमतिमात्रमनोहरम् ॥१३॥
तप्तजांबूनदप्रख्यं चित्ररत्नपरिष्कृतम् । मुक्तामयवितानाग्र्यं स्रग्दामसमलंकृतम् ॥१४॥
तप्तकंचननिर्व्यूहं रत्नस्तम्भशतावृतम् । वज्रकल्पितसोपानं विद्रुमस्तम्भतोरणम् ॥१५॥
पुष्पपट्टपरिस्तीर्णं चित्ररत्नमहासनम् । वज्रजालकिरच्छिद्रमच्छिद्रमणिकुट्टिमम् ॥१६॥
मणिदण्डमनोज्ञेन महावृषभलक्ष्मणा । अलंकृतपुरोभागमभ्रशुभ्रेण केतुना ॥१७॥
रत्नकंचुकगुप्ताङ्गैश्चित्रवेत्रकपाणिभिः । अधिष्ठितमहाद्वारमप्रधृष्यैर्गणेश्वरैः ॥१८॥
मृदंगतालगीतादिवेणुवीणाविशारदैः । विदग्धवेषभाषैश्च बहुभिः स्त्रीजनैर्वृतम् ॥१९॥
आरुरोह महादेवी सह प्रियसखीजनैः । चामारव्यञ्जनं तस्या वज्रदण्डमनोहरे ॥२०॥
गृहीत्वा रुद्रकन्ये द्वे विवीजतुरुभे शुभे । तदाचामरयोर्मध्ये देव्या वदनमाबभौ ॥२१॥
अन्योन्यं युध्यतोर्मध्ये हंसयोरिव पंकजम् । छत्रं शशिनिभं तस्याश्चूडोपरि सुमालिनी ॥२२॥
धृतमुक्तापरिक्षिप्तं बभार प्रेमनिर्भरा । तच्छत्रमुज्वलं देव्या रुरुचे वदनोपरि ॥२३॥
उपर्यमृतभाण्डस्य मण्डलं शशिनो यथा । अथ चाग्रे समासीना सुस्मितास्या शुभावती ॥२४॥
अक्षद्यूतविनोदेन रमयामास वै सतीम् । सुयशाः पादुके देव्याश्शुभे रत्नपरिष्कृते ॥२५॥
स्तनयोरन्तरे कृत्वा तदा देवीमसेवतः । अन्या कांचनचार्वंगी दीप्तं जग्राह दर्पणम् ॥२६॥
अपरा तालवृन्तं च परा तांबूलपेटिकाम् । काचित्क्रीडाशुकं चारु करेऽकुरुत भामिनी ॥२७॥
काचित्तु सुमनोज्ञानि पुष्पाणि सुरभीणि च । काचिदाभरणाधारं बभार कमलेक्षणा ॥२८॥
काचिच्च पुनरालेपं सुप्रसूतं शुभांजनम् । अन्याश्च सदृशास्तास्ता यथास्वमुचितक्रियाः ॥२९॥
आवृत्त्या तां महादेवीमसेवंत समंततः । अतीव शुशुभे तासामंतरे परमेश्वरी ॥३०॥
तारापरिषदो मध्ये चंद्रलेखेव शारदी । ततः शंखसमुत्थस्य नादस्य समनन्तरम् ॥३१॥
प्रास्थानिको महानादः पटहः समताड्यत । ततो मधुरवाद्यानि सह तालोद्यतैस्स्वनैः ॥३२॥
अनाहतानि सन्नेदुः काहलानां शतानि च । सायुधानां गणेशानां महेशसमतेजसाम् ॥३३॥
सहस्राणि शतान्यष्टौ तदानीं पुरतो ययुः । तेषां मध्ये वृषारूढो गजारूढो यथा गुरुः ॥३४॥
जगाम गणफ श्रीमान् सोमनंदीश्वरार्चितः । देवदुंदुभयो नेदुर्दिवि दिव्यसुखा घनाः ॥३५॥
ननृतुर्मुनयस्सर्वे मुमुदुः सिद्धयोगिनः । ससृजुः पुष्पवृष्टिं च वितानोपरि वारिदाः ॥३६॥
तदा देवगणैश्चान्यैः पथि सर्वत्र संगता । क्षणादिव पितुर्गेहं प्रविवेश महेश्वरी ॥३७॥
तां दृष्ट्वा कुपितो दक्षश्चात्मनः क्षयकारणात् । तस्या यवीयसीभ्योऽपि चक्रे पूजामसत्कृताम् ॥३८॥
तदा शशिमुखी देवी पितरं सदसि स्थितम् । अंबिका युक्तमव्यग्रमुवाचाकृपणं वचः ॥३९॥
देव्युवाच ॥
ब्रह्मादयः पिशाचान्ता यस्याज्ञावशवर्तिनः । स देवस्सांप्रतं तात विधिना नार्चितः किल ॥४०॥
तदास्तां मम ज्यायस्याः पुत्र्याः पूजां किमीदृशीम् । असत्कृतामवज्ञाय कृतवानसि गर्हितम् ॥४१॥
एवमुक्तोऽब्रवीदेनां दक्षः क्रोधादमर्षितः । त्वत्तः श्रेष्ठा विशिष्टाश्च पूज्या बालाः सुता मम ॥४२॥
तासां तु ये च भर्तारस्ते मे बहुमता मुदा । गुनैश्चाप्यधिकास्सर्वैर्भर्तुस्ते त्र्यम्बकादपि ॥४३॥
स्तब्धात्मा तामसश्शर्वस्त्वमिमं समुपाश्रिता । तेन त्वामवमन्येऽहं प्रतिकूलो हि मे भवः ॥४४॥

तथोक्ता पितरं दक्षं क्रुद्धा देवी तमब्रवीत् । शृण्वतामेव सर्वेषां ये यज्ञसदसि स्थिताः ॥४५॥
अकस्मान्मम भर्तारमजाताशेषदूषणम् । वाचा दूषयसे दक्ष साक्षाल्लोकमहेश्वरम् ॥४६॥
विद्याचौरो गुरुद्रोही वेदेश्वरविदूषकः । त एते बहुपाप्मानस्सर्वे दण्ड्या इति श्रुतिः ॥४७॥
तस्मादत्युत्कटस्यास्य पापस्य सदृशो भृशम् । सहसा दारुणो दण्डस्तव दैवाद्भविष्यति ॥४८॥
त्वया न पूजितो यस्माद्देवदेवस्त्रियंबकः । तस्मात्तव कुलं दुष्टं नष्टमित्यवधारय ॥४९॥
इत्युक्त्वा पितरं रुष्टा सती सन्त्यक्तसाध्वसा । तदीयां च तनुं त्यक्त्वा हिमवंतं ययौ गिरिम् ॥५०॥
स पर्वतपरः श्रीमांल्लब्धपुण्यफलोदयः । तदर्थमेव कृतवान् सुचिरं दुश्चरं तप ॥५१॥
तस्मात्तमनुगृह्णाति भूधरेश्वरमीश्वरी । स्वेच्छया पितरं चक्रे स्वात्मनो योगमायया ॥५२॥
यदा गता सती दक्षं विनिंद्य भयविह्वला । तदा तिरोहिता मन्त्रा विहतश्च ततोऽध्वरः ॥५३॥
तदुपश्रुत्य गमनं देव्यास्त्रिपुरुमर्दनः । दक्षाय च ऋषिभ्यश्च चुकोप च शशाप तान् ॥५४॥
यस्मादवमता दक्षमत्कृतेऽनागसा सती । पूजिताश्चेतराः सर्वाः स्वसुता भर्तृभिः सह ॥५५॥
वैवस्वतेऽन्तरे तस्मात्तव जामातरस्त्वमी । उत्पत्स्यन्ते समं सर्वे ब्रह्मयज्ञेष्वयोनिजाः ॥५६॥
भविता मानुषो राजा चाक्षुषस्य त्वमन्वये । प्राचीनबर्हिषः पौत्रः पुत्रश्चापि प्रचेतसः ॥५७॥
अहं तत्रापि ते विघ्नमाचरिष्यामि दुर्मते । धर्मार्थकामयुक्तेषु कर्मस्वपि पुनः पुनः ॥५८॥
तेनैवं व्याहृतो दक्षो रुद्रेणामिततेजसा । स्वायंभुवीं तनुं त्यक्त्वा पपात भुवि दुःखितः ॥५९॥
ततः प्राचेतसो दक्षो जज्ञे वै चाक्षुषेऽन्तरे । प्राचीनबर्हिषः पौत्रः पुत्त्रश्चैव प्रचेतसाम् ॥६०॥
भृग्वादयोऽपि जाता वै मनोर्वैवस्वतस्य तु । अंतरे ब्रह्मणो यज्ञे वारुणीं बिभ्रतस्तनुम् ॥६१॥
तदा दक्षस्य धर्मार्थं यज्ञे तस्य दुरात्मनः । महेशः कृतवान्विघ्नं मना वैवस्वते सति ॥६२॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सतीदेहत्यागो नामाष्टादशोऽध्यायः ॥१८॥
आदितः श्लोकानां समष्टयङ्काः-२०,९०२+६२=२०,९६४



## ॥ अथैकोनविंशोऽध्यायः ॥

ऋषय ऊचुः ॥
कथं दक्षस्य धर्मार्थं प्रवृत्तस्य दुरात्मनः । महेशः कृतवान् विघ्नमेतदिच्छाम वेदितुम् ॥१॥
वायुरुवाच ॥
विश्वस्य जगतो मातुरपि देव्यास्तपोबलात् । पितृभावमुपागम्य मुदिते हिमवद्गिरौ ॥२॥
देवेऽपि तत्कृतोद्वाहे हिमवच्छिखरालये । संक्रीडति तया सार्धं काले बहुतरे गते ॥३॥
वैवस्वतेऽन्तरे प्राप्ते दक्षः प्राचेतसः स्वयम् । अश्वमेधेन यज्ञेन यक्ष्यमाणोऽन्वपद्यत ॥४॥
ततो हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् । गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥५॥
तस्य तस्मिन्मखेदेवाः सर्वे शक्र पुरोगमाः । गमनाय समागम्य बुद्धिमापेदिरे तदा ॥६॥
आदित्या वसवो रुद्रास्साध्यास्सह मरुद्गणैः । ऊष्मपाः सोमपाश्चैव आज्यपा धूमपास्तथा ॥७॥
अश्विनौ पितरश्चैव तथा चान्ये महर्षयः । विष्णुना सहिताः सर्वे स्वागता यज्ञभागिनः ॥८॥
दृष्ट्वा देवकुलं सर्वमीश्वरेण विनागतम् । दधीचो मन्युनाविष्टो दक्षमेवमभाषत ॥९॥
दधीच उवाच ॥
अप्रपूज्ये चैव पूजा पूज्यानां चाप्य पूजने । नरः पापमवाप्नोति महद्वै नात्र संशयः ॥१०॥
असतां संमतिर्यत्र सतामवमतिस्तथा । दण्डो देवकृतस्तत्र सद्यः पतति दारुणः ॥११॥
एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमभाषत । पूज्यं तु पशुभर्तारं कस्मान्नार्चयसे प्रभुम् ॥१२॥
दक्ष उवाच ॥
संति मे बहवो रुद्राः शूलहस्ताः कपर्दिनः । एकादशावस्थिता ये नान्यं वेद्मि महेश्वरम् ॥१३॥
दधीच उवाच ॥

किमेभिरमरैरन्यैः पूजितैरध्वरे फलम् । राजा चेदध्वरस्यास्य न रुद्रः पूज्यते त्वया ॥१४॥
ब्रह्मविष्णुमहेशानां स्रष्टा यः प्रभुरव्ययः । ब्रह्मादयः पिशाचान्ता यस्य कैंकर्यवादिनः ॥१५॥
प्रकृतीनां परश्चैव पुरुषस्य च यः परः । चिन्तयते योगविद्वद्भिः ऋषिभिस्तत्त्वदर्शिभिः ॥१६॥
अक्षरं परमं ब्रह्म ह्यसच्च सदसच्च यत् । अनादिमध्यनिधनमप्रतर्क्यं सनातनम् ॥१७॥
यः स्रष्टा चैव संहर्ता भर्ता चैव महेश्वरः । तस्मादन्यं न पश्यामि शंकरात्मानमध्वरे ॥१८॥
दक्ष उवाच ॥
एतन्मखेशस्य सुवर्णपात्रे हविः समस्तं विधिमन्त्रपूतम् । विष्णोर्नयाम्यप्रतिमस्य भागं प्रभोर्विभज्यावहनीयमद्य ॥१९॥
दधीच उवाच ॥
यस्मान्नाराधितो रुद्रस्सर्वदेवेश्वरेश्वरः । तस्माद्दक्ष तवाशेषो यज्ञोऽयं न भविष्यति ॥२०॥
इत्युक्त्वा वचनं क्रुद्धो दधीचो मुनिसत्तमः । निर्गम्य च ततो देशाज्जगाम स्वकमाश्रमम् ॥२१॥
निर्गतेऽपि मुनौ तस्मिन्देवा दक्षं न तत्यजुः । अवश्यमनुभावित्वादनर्थस्य तु भाविनः ॥२२॥
एतस्मिन्नेव काले तु ज्ञात्वैतत्सर्वमीश्वरात् । दग्धुं दक्षाध्वरं विप्रा देवी देवमचोदयत् ॥२३॥
देव्या सञ्चोदितो देवो दक्षाध्वरजिघांसया । ससर्ज सहसा वीरं वीरभद्रं गणेश्वरम् ॥२४॥
सहस्रवदनं देवं सहस्रकमलेक्षणम् । सहस्रमुद्गरधरं सहस्रशरपाणिकम् ॥२५॥
शूलटंकगदाहस्तं दीप्तकार्मुकधारिणम् । चक्रवज्रधरं घोरं चंद्रार्धकृतशेखरम् ॥२६॥
कुलिशोद्योतितकरं तडिज्ज्वलितमूर्धजम् । दंष्ट्राकरालं बिभ्राणं महावक्त्रं महोदरम् ॥२७॥
विद्युज्जिह्वं प्रलंबोष्ठं मेघसागरनिःस्वनम् । वसानं चर्म वैयाघ्रं महद्रुधिरनिस्रवम् ॥२८॥
गण्डद्वितयसंसृष्टमण्डलीकृतकुण्डलम् । वरामरशिरोमालावलीकलितशेखरम् ॥२९॥
रणन्नूपुरकेयूरमहाकनकभूषितम् । रत्नसञ्चयसंदीप्तं तारहारावृतोरसम् ॥३०॥
महाशरभशार्दूलसिंहैः सदृशविक्रमम् । प्रशस्तमत्तमातंगसमानगमनालसम् ॥३१॥
शंखचामरकुंदेन्दुमृणालसदृशप्रभम् । सतुषारमिवाद्रीन्द्रं साक्षाज्जंगमतां गतम् ॥३२॥
ज्वालामालापरिक्षिप्तं दीप्तमौक्तिकभूषणम् । तेजसा चैव दीव्यन्तं युगान्त इव पावकम् ॥३३॥
स जानुभ्यां महीं गत्वा प्रणतः प्रांजलिस्ततः । पार्श्वतो देवदेवस्य पर्यतिष्ठद्गणेश्वरः ॥३४॥
मन्युना चासृजद्भद्रां भद्रकालीं महेश्वरीम् । आत्मनः कर्मसाक्षित्वे तेन गंतुं सहैव तु ॥३५॥
तं दृष्ट्वावस्थितं वीरभद्रं कालाग्निसन्निभम् । भद्रया सहितं प्राह भद्रमस्त्विति शंकरः ॥३६॥
स च विज्ञापयामास सह देव्या महेश्वरम् । आज्ञापय महादेव किं कार्यं करवाण्यहम् ॥३७॥
ततस्त्रिपुरहा प्राह हैमवत्याः प्रियेच्छया । वीरभद्रं महाबाहुं वाचा विपुलनादया ॥३८॥
देवदेव उवाच ॥
प्राचेतसस्य दक्षस्य यज्ञं सद्यो विनाशय । भद्रकाल्या सहासित्वमेतत्कृत्यं गणेश्वर ॥३९॥
अहमप्यनया सार्धं रैभ्याश्रमसपीपतः । स्थित्वा वीक्षे गणेशान विक्रमं तव दुःसहम् ॥४०॥
वृक्षा कनखले ये तु गङ्गाद्वारसमीपगाः । सुवर्णशृंगस्य गिरेर्मेरुमंदरसंनिभाः ॥४१॥
तस्मिन्प्रदेशे दक्षस्य युज्ञः संप्रति वर्तते । सहसा तस्य यज्ञस्य विघातं कुरु मा चिरम् ॥४२॥
इत्युक्ते सति देवेन देवी हिमगिरीन्द्रजा । भद्रं भद्रं च संप्रेक्ष्य वत्सं धेनुरिवौरसम् ॥४३॥
आलिङ्गय च समाघ्राय मूर्ध्नि षड्वदनं यथा । सस्मिता वचनं प्राह मधुरं मधुरं स्वयम् ॥४४॥
देव्युवाच ॥
वत्स भद्र महाभाग महाबलपराक्रम । मत्प्रियार्थं त्वमुत्पन्नो मम मन्युं प्रमार्जक ॥४५॥
यज्ञेश्वरमनाहूय यज्ञकर्मरतोऽभवत् । दक्षं वैरेण तं तस्माद्भिंधि यज्ञं गणेश्वर ॥४६॥
यज्ञलक्ष्मीमलक्ष्मीं त्वं भद्र कृत्वा ममाज्ञया । यजमानं च तं हत्वा वत्स हिंसय भद्रया ॥४७॥
अशेषामिव तामाज्ञां शिवयोश्चित्रकृत्ययोः । मूर्ध्नि कृत्वा नमस्कृत्य भद्रो गंतुं प्रचक्रमे ॥४८॥
अथैष भगवान्क्रुद्धः प्रेतावासकृतालयः । वीरभद्रो महादेवो देव्या मन्युप्रमार्जकः ॥४९॥

ससर्ज रोमकूपेभ्यो रोमजाख्यान्गणेश्वरान् । दक्षिणाद्भुजदेशात्तु शतकोटिगविश्वरान् ॥५०॥
पादात्तथोरुदेशाच्च पृष्ठात्पार्श्वान्मुखाद्गलात् । गुह्याद्गुल्फाच्छिरोमध्यात्कण्ठादास्यात्तथोदरात् ॥५१॥
तदा गणेश्वरैर्भद्रैर्भद्रतुल्यपराक्रमैः । संछादितमभूत्सर्वं साकाशविवरं जगत् ॥५२॥
सर्वे सहस्रहस्तास्ते सहस्रायुधपाणयः । रुद्रस्यानुचरास्सर्वे सर्वे रुद्रसमप्रभाः ॥५३॥
शूलशक्तिगदाहस्ताष्टंकोपलशिलाधराः । कालाग्निरुद्रसदृशास्त्रिनेत्राश्च जटाधराः ॥५४॥
निपेतुर्भृशमाकाशे शतशस्सिंहवाहनाः । विनेदुश्च महानादाञ्जलदा इव भद्रजाः ॥५५॥
तैर्भद्रैर्भगवान्भद्रस्तथा परिवृतो बभौ । कालानलशतैर्युक्तो यथान्ते कालभैरवः ॥५६॥
तेषां मध्ये समारुह्य वृषेंद्रं वृषभध्वजः । जगाम भगवान्भद्रश्शुभमभ्रं यथा भवः ॥५७॥
तस्मिन्वृषभमारूढे भद्रे तु भसितप्रभः । बभार मौक्तिकं छत्रं गृहीतसितचामरः ॥५८॥
स तदा शुशुभे पार्श्वे भद्रस्य भसितप्रभः । भगवानिव शैलेन्द्रः पार्श्वे विश्वजगद्गुरोः ॥५९॥
सोऽपि तेन बभौ भद्रः श्वेतचामरपाणिना । बालसोमेन सौम्येन यथा शूलवरायुधः ॥६०॥
दध्मौ शंखं सितं भद्रं भद्रस्य पुरतः शुभम् । भानुकंपो महातेजा हेमरत्नैरलंकृतः ॥६१॥
देवदुंदुभयो नेदुर्दिव्यसंकुलनिःस्वनाः । ववृषुश्शतशो मूर्ध्नि पुष्पवर्षं बलाहकाः ॥६२॥
फुल्लानां मधुगर्भाणां पुष्पाणां गन्धबन्धवः । मार्गानुकूलसंवाहा वबुश्च पथि मारुताः ॥६३॥
ततो गणेश्वराः सर्वे मत्ता युद्धबलोद्धताः । ननृतुर्मुमुदु एदुर्जहसुर्जगदुर्जगुः ॥६४॥
तदा भद्रगणान्तःस्थो बभौ भद्रः स भद्रया । यथा रुद्रगणान्तः स्थस्त्र्यम्बकोंबिकया सह ॥६५॥
तत्क्षणादेव दक्षस्य यज्ञवाटं रणमयम् । प्रविवेश महाबाहुर्वीरभद्रो महानुगः ॥६६॥
ततस्तु दक्षप्रतिपादितस्य क्रतुप्रधानस्य गणप्रधानः । प्रयोगभूमिं प्रविवेश भद्रो रुद्रो यथान्ते भुवनं दिधक्षुः ॥६७॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे वीरभद्रोत्पत्तिवर्णनं नामैकोनविंशोऽध्यायः ॥१९॥
आदितः श्लोकानां समष्टयङ्काः-२०,९६४+६७=२१,०३१



## ॥ अथ विंशोऽध्यायः ॥

वायुरुवाच ॥

ततो विष्णुप्रधानानां सुराणाममितौजसाम् । ददर्श च महत्सत्रं चित्रध्वजपरिच्छदम् ॥१॥
सुदर्भऋतुसंस्तीर्णं सुसमिद्धहुताशनम् । कांचनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलंकृतम् ॥२॥
ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः । विधिना वेददृष्टेन स्वनुष्ठितबहुक्रमम् ॥३॥
देवाङ्गनासहस्राढ्यमप्सरोगणसेवितम् । वेणुवीणारवैर्जुष्टं वेदघोषैश्च बृंहितम् ॥४॥
दृष्ट्वा दक्षाध्वरे वीरो वीरभद्रः प्रतापवान् । सिंहनादं तदा चक्रे गंभीरो जलदो यथा ॥५॥
ततः किलकिलाशब्द आकाशं पूरयन्निव । गणेश्वरैः कृतो जज्ञे महान्न्यक्कृतसागरः ॥६॥
तेन शब्देन महताः ग्रस्ता सर्वेदिवौकसः । दुद्रुवुः परितो भीताः स्रस्तवस्त्रविभूषणाः ॥७॥
किंस्विद्भग्नो महामेरुः किंस्वित्संदीर्यते मही । किमिदं किमिदं वेति जजल्पुस्त्रिदशा भृशम् ॥८॥
मृगेन्द्राणां यथा नादं गजेंद्रा गहने वने । श्रुत्वा तथाविधं केचित्तत्यजुर्जीवितं भयात् ॥९॥
पर्वताश्च व्यशीर्यन्त चकम्पे च वसुंधरा । मरुतश्च व्यघूर्णन्त चुक्षुभे मकरालयः ॥१०॥
अग्नयो नैव दीप्यन्ते न च दीप्यति भास्करः । ग्रहाश्च न प्रकाशंते नक्षत्राणि च तारकाः ॥११॥
एतस्मिन्नेव काले तु यज्ञवाटं तदुज्ज्वलम् । संप्राप भगवान्भद्रो भद्रैश्च सह भद्रया ॥१२॥
तं दृष्ट्वा भीतभीतोऽपि दक्षो दृढ इव स्थितः । क्रुद्धवद्वचनं प्राह को भवान् किमिहेच्छसि ॥१३॥
तस्य तद्वचनं श्रुत्वा दक्षस्य च दुरात्मनः । वीरभद्रो महातेजा मेघसंभीरनिस्स्वनः ॥१४॥
स्मयन्निव तमालोक्य दक्षं देवाश्च ऋत्विजः । अर्थगर्भमसंभ्रान्तमवोचदुचितं वचः ॥१५॥

वीरभद्र उवाच ॥

वयं ह्यनुचराः सर्वे शर्वस्यामिततेजसः । भागाभिलिप्सया प्राप्ता भागो नस्संप्रदीयताम् ॥१६॥

अथ चेदध्वरेऽस्माकं न भागः परिकल्पितः । कथ्यतां कारणं तत्र युध्यतां वा मयामरैः ॥१७॥
इत्युक्तास्ते गणेंद्रेण देवा दक्षपुरोगमाः । ऊचुर्मन्त्राः प्रमाणं नो न वयं प्रभवस्त्विति ॥१८॥
मन्त्रा ऊचुस्सुरा यूयं मोहोपहतचेतसः । येन प्रथमभागार्हं न यजध्वं महेश्वरम् ॥१९॥
मन्त्रोक्ता अपि ते देवाः सर्वे संमूढचेतसः । भद्राय न ददुर्भागं तत्प्रहाणमभीप्सवः ॥२०॥
यदा तथ्यं च पथ्यं च स्ववाक्यं तद्वृथाऽभवत् । तदा ततो ययुर्मन्दा ब्रह्मलोकं सनातनम् ॥२१॥
अथोवाच गणाध्यक्षो देवान्विष्णुपुरोगमान् । मन्त्राः प्रमाणं न कृता युष्माभिर्बलगर्वितैः ॥२२॥
यस्मादस्मिन्मखे देवैरित्थं वयमसत्कृताः । तस्माद्वो जीवितैस्सार्धमपनेष्यामि गर्वितम् ॥२३॥
इत्युक्त्वा भगवान् क्रुद्धो व्यदहन्नेत्रवह्निना । यक्षवाटं महाकूटं यथातिस्रः पुरो हरः ॥२४॥
ततो गणेश्वरास्सर्वे पर्वतोदग्रविग्रहाः । यूपानुत्पाट्य होतॄणां कण्ठेष्वाबध्य रज्जुभिः ॥२५॥
यज्ञपात्राणि चित्राणि भित्त्वा सञ्चूर्ण्य वारिणि । गृहीत्वा चैव यज्ञाङ्गं गङ्गास्रोतसि चिक्षिपुः ॥२६॥
तत्र दिव्यान्नपानानां राशयः पर्वतोपमाः । क्षीरनद्योऽमृतस्रावाः सुस्निग्धदधिकर्दमाः ॥२७॥
उच्चावचानि मांसानि भक्ष्याणि सुरभीणि च । रसवन्ति च पानानि ले ह्यचोष्याणि तानि वै ॥२८॥
वीरास्तद्भुजते वक्त्रैर्विलुंपंति क्षिपंति च । वज्रैश्चक्रैर्महाशूलैश्शक्तिभिः पाशपट्टिशैः ॥२९॥
मुसलैरसिभिष्टंकैर्भिंधिपालैः परश्वधैः । उद्धतांस्त्रिदशान्सर्वाँल्लोकपालपुरस्सरान् ॥३०॥
बिभिदुर्बलिनो वीरा वीरभद्राङ्गसंभवाः । छिंधि भिंधि क्षिप क्षिप्रं मार्यतां दार्यतामिति ॥३१॥
हरस्व प्रहरस्वेति पाटयोत्पाटयेति च । संरंभप्रभवाः क्रूराश्शब्दाः श्रवणशंकवः ॥३२॥
यत्रतत्र गणेशानां जज्ञिरे समरोचिताः । विवृत्तनयनाः केचिद्दष्टदंष्ट्रोष्ठतालवः ॥३३॥
आश्रमस्थान्समाकृष्य मारयन्ति तपोधनात् । स्रुवानपहरन्तश्च क्षिपन्तोग्निं जलेषु च ॥३४॥
कलशानपि भिन्दन्तश्छिन्दन्तो मणिवेदिकाः । गायन्तश्च नदन्तश्च हसन्तश्च मुहुर्मुहुः ॥
रक्तासवं पिबन्तश्च ननृतुर्गणपुंगवाः ॥३५॥
निर्मथ्य सेंद्रानमरान् गणेन्द्रान्वृषेन्द्रनागेन्द्रमृगेन्द्रसाराः । चक्रुर्बहून्यप्रतिमभावाः सहर्षरोमाणि विचेष्टितानि ॥३६॥
नन्दन्ति केचित्प्रहरन्ति केचिद्धावन्ति केचित्प्रलपन्ति केचित् । नृत्यन्ति केचिद्विहसन्ति केचिद्वल्गन्ति केचित्प्रमथा बलेन ॥३७॥
केचिज्जिघृक्षंति घनान्स तोयान्केचिद्ग्रहीतुं रविमुत्पतन्ति । केचित्प्रसर्तुं पवनेन सार्धमिच्छंति भीमाः प्रमथा वियत्स्थाः ॥३८॥
आक्षिप्य केचिच्च वरायुधानि महा भुजंगानिव वैनतेयाः । भ्रमंति देवानपि विद्रवंतः खमण्डले पर्वतकूटकल्पाः ॥३९॥
उत्पाट्य चोत्पाट्यगृहाणि केचित्सजालवातायनवेदिकानि । विक्षिप्य विक्षिप्य जलस्य मध्ये कालांबुदाभाः प्रमथा निनेदुः ॥४०॥
उद्वर्तितद्वारकपाटकुड्यं विध्वस्तशालावलभीगवाक्षम् । अहो बताभज्यत यज्ञवाटमनाथवद्वाक्यमिवायथार्थम् ॥४१॥
हा नाथ तातेति पितुः सुतेति भ्रतर्ममाम्बेति च मातुलेति । उत्पाट्यमानेषु गृहेषु नार्यो ह्यनाथशब्दान्बहुशः प्रचक्रुः ॥४२॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे यज्ञविध्वंसनो नाम विंशोऽध्यायः ॥२०॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,०३१+४२=२१,०७३



## ॥ अथैकविंशोऽध्यायः ॥

वायुरुवाच ॥
ततस्त्रिदशमुख्यास्ते विष्णुशक्तपुरोगमाः । सर्वे भयपरित्रस्तादुद्रुवुर्भयविह्वलाः ॥१॥

निर्जैरदूषितैरङ्गैर्दृष्ट्वा देवानुपद्रुतान् । दण्ड्यानदंडितान्मत्वा चुकोप गणपुंगवः ॥२॥
ततस्त्रिशूलमादाय शर्वशक्तिनिबर्हणम् । ऊर्ध्वदृष्टिर्महाबाहुर्मुखाज्ज्वालाः समुत्सृजन् ॥३॥
अमरानपि दुद्राव द्विरदानिव केसरी । तानभिद्रवतस्तस्य गमनं सुमनोहरम् ॥४॥
वाराणस्येव मत्तस्य जगाम प्रेक्षणीयताम् । ततस्तत्क्षोभयामास महत्सुरबलं बली ॥५॥
महासरोवरं यद्वन्मत्तो वारणयूथफ । विकुर्वन्बहुधावर्णान्नीलपांडुरलोहितान् ॥६॥
बिभ्रद्व्याघ्राजिनं वासो हेमप्रवरतारकम् । छिन्दन्भिन्दन्नुदक्लिन्दन्दारयन्प्रमथन्नपि ॥७॥
व्यचरद्देवसंघेषु भद्रोऽग्निरिव कक्षगः । तत्र तत्र महावेगाच्चरन्तं शूलधारिणम् ॥८॥
तमेकं त्रिदशाः सर्वे सहस्रमिव मेनिरे । भद्रकाली च संक्रुद्धा युद्धवृद्धमदोद्धता ॥९॥
मुक्तज्वालेन शूलेन निर्बिभेद रणे सुरान् । स तया रुरुचे भद्रो रुद्रकोपसमुद्भवः ॥१०॥
प्रभयेव युगान्ताग्निश्चलया धूमधूम्रया भद्रकाली तदायुद्धे विद्रुतत्रिदशाबभौ ॥११॥
कल्पे शेषानलज्वालादग्धाविश्वजगद्यथा । तदा सवाजिनं सूर्यं रुद्रान्रुद्रगणाग्रणीः ॥१२॥
भद्रो मूर्ध्नि जघानाशु वामपादेन लीलया । असिभिः पावकं भद्रः पट्टिशैस्तु यमं यमी ॥१३॥
रुद्रान्दृढेन शूलेन मुद्गरैर्वरुणं दृढैः । परिघैर्निर्ऋतिं वायुं टंकैष्टंकधरः स्वयम् ॥१४॥
निर्बिभेद रणे वीरो लीलयैव गणेश्वरः । सर्वान्देवगणान्सद्यो मुनीञ्छंभोर्विरोधिनः ॥१५॥
ततो देवः सरस्वत्या नासिकाग्रं सुशोभनम् । चिच्छेद करजाग्रेण देवमातुस्तथैव च ॥१६॥
चिच्छेद च कुठारेण बाहुदण्डं विभावसोः । अग्रतो द्व्यंगुलां जिह्वां मातुर्देव्या लुलाव च ॥१७॥
स्वाहादेव्यास्तथा देवो दक्षिणं नासिकापुटम् । चकर्त करजाग्रेण वामं च स्तनचूचुकम् ॥१८॥
भगस्य विपुले नेत्रे शतपत्रसमप्रभे । प्रसह्योत्पाटयामास भद्रः परमवेगवान् ॥१९॥
पूष्णो दशनरेखां च दीप्तां मुक्तावलीमिव । जघान धनुषः कोटया स तेनास्पष्टवागभूत् ॥२०॥
ततश्चंद्रमसं देवः पादाङ्गुष्ठेन लीलया । क्षणं कृमिवदाक्रम्य घर्षयामास भूतले ॥२१॥
शिरश्चिच्छेद दक्षस्य भद्रः परमकोपतः । क्रोशंत्यामेव वैरिण्यां भद्रकाल्यै ददौ च तत् ॥२२॥
तत्प्रहृष्टा समादाय शिरस्तालफलोपमम् । सा देवी कंडुकक्रीडां चकार समराङ्गणे ॥२३॥
ततो दक्षस्य यज्ञस्त्री कुशीला भर्तृभिर्यथा । पादाभ्यां चैव हस्ताभ्यां हन्यते स्म गणेश्वरैः ॥२४॥
अरिष्टनेमिने सोमं धर्मं चैव प्रजापतिम् । बहुपुत्रं चांगिरसं कृशाश्वं कश्यपं तथा ॥२५॥
गले प्रगृह्य बलिनो गणपाः सिंहविक्रमाः । भर्त्सयन्तो भृशं वाग्भिर्निर्जघ्नुर्मूर्ध्नि मुष्टिभिः ॥२६॥
धर्षिता भूतवेतालैर्दारास्सुतपरिग्रहाः । यथा कलियुगे जारैर्बलेन कुलयोषितः ॥२७॥
तच्च विध्वस्तकलशं भग्नयूपं गतोत्सवम् । प्रदीप्तमहाशालं प्रभिन्नद्वारतोरणम् ॥२८॥
उत्पाटितसुरानीकं हन्यमानं तपोधनम् । प्रशान्तब्रह्मनिर्घोषं प्रक्षीणजनसञ्चयम् ॥२९॥
क्रन्दमानातुरस्त्रीकं हताशेषपरिच्छदम् । शून्यारण्यनिभं जज्ञे यज्ञवाटं तदार्दितम् ॥३०॥
शूलवेगप्ररुग्णाश्च भिन्नबाहूरुवक्षसः । विनिकृत्तोत्तमाङ्गाश्च पेतुरुर्व्यां सुरोत्तमाः ॥३१॥
हतेषु तेषु देवेषु पतितेषुः सहस्रशः । प्रविवेश गणेशानः क्षणादाहवनीयकम् ॥३२॥
प्रविष्टमथ तं दृष्ट्वा भद्रं कालाग्निसंनिभम् । दुद्राव मरणाद्भीतो यज्ञो मृगवपुर्धरः ॥३३॥
स विस्फार्य महच्चापं दृढज्याघोषभीषणम् । भद्रस्तमभिदुद्राव विक्षिपन्नेव सायकान् ॥३४॥
आकर्णपूर्णमाकृष्टं धनुरम्बुदसंनिभम् । नादयामास च ज्यां द्यां खं च भूमिं च सर्वशः ॥३५॥
तमुपश्रित्य सन्नादं हतोऽस्मीत्येव विह्वलम् । शरणार्धेन वक्रेण स वीरोऽध्वरपूरुषम् ॥३६॥
महाभयस्खलत्पादं वेपन्तं विगतत्विषम् । मृगरूपेण धावन्तं विशिरस्कं तदाकरोत् ॥३७॥
तमीदृशमवज्ञातं दृष्ट्वा वै सूर्यसंभवम् । विष्णुः परमसंक्रुद्धो युद्धायाभवदुद्यतः ॥३८॥
तमुवाह महावेगात्स्कन्धेन नतसंधिना । सर्वेषां वयसां राजा गरुडः पन्नगाशनः ॥३९॥
देवाश्च हतशिष्टा ये देवराजपुरोगमाः । प्रचक्रुस्तस्य साहाय्यं प्राणांस्त्यक्तुमिवोद्यताः ॥४०॥
विष्णुना सहितान्देवान्मृगेन्द्रः क्रोष्टुकानिव । दृष्ट्वा जहास भूतेन्द्रो मृगेन्द्र इव विव्यथः ॥४१॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे देवदण्डवर्णनं नामैकविंशोऽध्यायः ॥२१॥

आदितः श्लोकानां समष्टयङ्काः-२१,०७३+४१=२१,११४



## ॥ अथ द्वाविंशोऽध्यायः ॥

वायुरुवाच ॥

तस्मिन्नवसरे व्योम्नि समाविरभवद्रथः । सहस्रसूर्यसंकाशश्चारुचीरवृषध्वजः ॥१॥
अश्वरत्नद्वयोदारो रथचक्रचतुष्टयः । सञ्चितानेकदिव्यास्त्रशस्त्ररत्नपरिष्कृतः ॥२॥
तस्यापि रथवर्यस्य स्यात्स एव हि सारथिः । यथा च त्रैपुरे युद्धे पूर्वं शार्वरथे स्थितः ॥३॥
स तं रथवरं ब्रह्मा शासनादेव शूलिनः । हरेस्समीपमानीय कृताञ्जलिरभाषत ॥४॥
भगवन्भद्र भद्राङ्ग भगवानिन्दुभूषणः । आज्ञापयति वीरस्त्वां रथमारोढुमव्ययः ॥५॥
रेभ्याश्रमसमीपस्थस्त्र्यम्बकोऽम्बिकया सह । सम्पश्यते महाबाहो दुस्सहं ते पराक्रमम् ॥६॥
तस्य तद्वचनं श्रुत्वा स वीरो गणकुञ्जरः । आरुरोह रथं दिव्यमनुगृह्य पितामहम् ॥७॥
तथा रथवरे तस्मिन्स्थिते ब्रह्मणि सारथौ । भद्रस्य ववृधे लक्ष्मी रुद्रस्येव पुरद्विषः ॥८॥
ततः शंखवरं दीप्तं पूर्णचंद्रसमप्रभम् । प्रदध्मौ वदने कृत्वा भानुकंपो महाबलः ॥९॥
तस्य शंखस्य तं नादं भिन्नसारससन्निभम् । श्रुत्वा भयेन देवानां जज्वाल जठरानलः ॥१०॥
यक्षविद्याधराहीन्द्रैः सिद्धैर्युद्धदिदृक्षुभिः । क्षणेन निबडीभूताः साकाशविवरा दिशाः ॥११॥
ततः शार्ङ्गेण चापाङ्कात्स नारायणनीरदः । महता बाणवर्षेण तुतोद गणगोवृषम् ॥१२॥
तं दृष्ट्वा विष्णुमायान्तं शतधा बाणवर्षिणम् । स चाददे धनुर्जैत्रं भद्रो बाणसहस्रमुक् ॥१३॥
समादाय च तद्दिव्यं धनुस्समरभैरवम् । शनैर्विस्फारयामास मेरुं धनुरिवेश्वरः ॥१४॥
तस्य विस्फार्यमाणस्य धनुषोऽभून्महास्वनः । तेन स्वनेन महता पृथिवी समकंपयत् ॥१५॥
ततः शरवरं घोरं दीप्तमाशीविषोपमम् । जग्राह गणफ श्रीमान्स्वयमुग्रपराक्रमः ॥१६॥
बाणोद्धारे भुजो ह्यस्य तूणीवदनसंगतः । प्रत्यदृश्यत वल्मीकं विवेक्षुरिव पन्नगः ॥१७॥
समुद्धृतः करे तस्य तत्क्षणं रुरुचे शरेः । महाभुजंगसंदष्टो यथा बालभुजङ्गमः ॥१८॥
शरेण घनतीव्रेण भद्रो रुद्रपराक्रमः । विव्याध कुपितो गाढं ललाटे विष्णुमव्ययम् ॥१९॥
ललाटेऽभिहितो विष्णुः पूर्वमेवावमानितः । चुकोप गणपेंद्राय मृगेंद्रायेव गोवृषः ॥२०॥
ततस्त्वशनिकल्पेन क्रूरास्येन महेषुणा । विव्याध गणराजस्य भुजे भुजगसन्निभे ॥२१॥
सोऽपि तस्य भुजे भूयः सूर्यायुतसमप्रभम् । विससर्ज शरं वेगाद्वीरभद्रो महाबलः ॥२२॥
स च विष्णुः पुनर्भद्रं भद्रो विष्णुं तथा पुनः । स च तं स च तं विप्राश्शरैस्तावनुजघ्नतुः ॥२३॥
तयोः परस्परं वेगाच्छरानाशु विमुञ्चतोः । द्वयोस्समभवद्युद्धं तुमुलं रोमहर्षणम् ॥२४॥
तद्दृष्ट्वा तुमुलं युद्धं तयोरेव परस्परम् । हाहाकारो महानासीदाकाशे खेचरेरितः ॥२५॥
ततस्त्वनलतुंडेन शरेणादित्यवर्चसा । विव्याध सुदृढं भद्रो विष्णोर्महति वक्षसि ॥२६॥
स तु तीव्रप्रपातेन शरेण दृढमाहतः । महतीं रुजमासाद्य निपपात विमोहितः ॥२७॥
पुनः क्षणादिवोत्थाय लब्धसंज्ञस्तदा हरिः । सर्वाण्यपि च दिव्यास्त्राण्यथैनं प्रत्यवासृजत् ॥२८॥
स च विष्णुर्धनुर्मुक्तान्सर्वाञ्छर्वचमूपतिः । सहसा वारयामास घोरैः प्रतिशरैः शरान् ॥२९॥
ततो विष्णुस्स्वनामाङ्कं बाणमव्याहतं क्वचित् । ससर्ज क्रोधरक्ता क्षस्तमुद्दिश्य गणेश्वरम् ॥३०॥
तं बाणं बाणवर्येण भद्रो भद्राह्वयेण तु । अप्राप्तमेव भगवाञ्चिच्छेद शतधा पथि ॥३१॥
अथैकेनेषुणा शार्ङ्गं द्वाभ्यां पक्षौ गरुत्मतः । निमेषादेव चिच्छेद तदद्भुतमिवाभवत् ॥३२॥
ततो योगबलाद्विष्णुर्देहाद्देवान्सुदारुणान् । शंखचक्रगदाहस्तान् विससर्ज सहस्रशः ॥३३॥
सर्वांस्तान्क्षणमात्रेण त्रैपुरानिव शंकरः । निर्ददाह महाबाहुर्नेत्रसृष्टेन वह्निना ॥३४॥
ततः क्रुद्धतरो विष्णुश्चक्रमुद्यम्य सत्वरः । तस्मिन्वीरो समुत्स्रष्टुं तदानीमुद्यतोऽभवत् ॥३५॥
तं दृष्ट्वा चक्रमुद्यम्य पुरतः समु पस्थितम् । स्मयन्निव गणेशानो व्यष्टंभयदयत्नतः ॥३६॥

स्तंभिताङ्गस्तु तच्चक्रं घोरमप्रतिमं क्वचित् । इच्छन्नपि समुत्स्रष्टुं न विष्णुरभवत्क्षमः ॥३७॥
श्वसन्निवैकमुद्धृत्य बाहुं चक्रसमन्वितम् । अतिष्ठदलसो भूत्वा पाषाण इव निश्चलः ॥३८॥
विशरीरो यथाजीवो विशृङ्गो वा यथा वृषः । विदंष्ट्रश्च यथा सिंहस्तथा विष्णुरवस्थितः ॥३९॥
तं दृष्ट्वा दुर्दशापन्नं विष्णुमिंद्रादयः सुराः । समुन्नद्धा गणेन्द्रेण मृगेंद्रेणेव गोवृषाः ॥४०॥
प्रगृहीतायुधा यौद्धुंक्रुद्धाः समुपतस्थिरे । तान्दृष्ट्वा समरे भद्रःक्षुद्रानिव हरिर्मृगान् ॥४१॥
साक्षाद्रुद्रतनुर्वीरो वरवीरगणावृतः । अट्टहासेन घोरेण व्यष्टं भयदनिन्दितः ॥४२॥
तथा शतमखस्यापि सवज्रो दक्षिणः करः । सिसृक्षोरेव उद्वज्रश्चित्रीकृत इवाभवत् ॥४३॥
अन्येषामपि सर्वेषां सरक्ता अपि बाहवः । अलसानामिवारंभास्तादृशाः प्रतियान्त्युत ॥४४॥
एवं भगवता तेन व्याहताशेषवैभवात् । अमराः समरे तस्य पुरतः स्थातुमक्षमाः ॥४५॥
स्तब्धैरवयवैरेव दुद्रुवुर्भयविह्वलाः । स्थितिं च चक्रिरे युद्धे वीरतेजोभयाकुलाः ॥४६॥
विद्रुतांस्त्रिदशान्वीरान्वीरभद्रो महाभुजः । विव्याध निशितैर्बाणैर्मघो वर्षैरिवाचलान् ॥४७॥
बहवस्तस्य वीरस्य बाहवः परिघोपमाः । शस्त्रैश्चकाशिरे दीप्तैः साग्निज्वाला इवोरगाः ॥४८॥
अस्त्रशस्त्राण्यनेकानिसवीरो विसृजन्बभौ । विसृजन्सर्वभूतानि यथादौ विश्वसंभवः ॥४९॥
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् । तथा वीरः क्षणादेव शरैः प्राच्छादयद्दिशः ॥५०॥
खमण्डले गणेन्द्रस्य शराः कनकभूषिताः । उत्पतन्तस्तडिद्रूपैरुपमानपदं ययुः ॥५१॥
महान्तस्ते सुरगणान्मण्डूकानिवडुंडुभाः । प्राणैर्वियोजयामासुः पपुश्च रुधिरासवम् ॥५२॥
निकृत्तबाशवः केचित्केचिल्लूनवराननाः । पार्श्वे विदारिताः केचिन्निपेतुरमरा भुवि ॥५३॥
विशिखोन्मथितैर्गात्रैर्बहुभिश्छिन्नसन्धिभिः । विवृत्तनयनाः केचिन्निपेतुर्भूतले मृताः ॥५४॥
गां प्रवेष्टुमिवेच्छंतः खं गंतुमिव लिप्सवः । अलब्धात्मनिरोधानां व्यलीयन्तः परस्परम् ॥५५॥
भूमौ केचित्प्रविविशुः पर्वतानां गुहाः परे । अपरे जग्मुराकाशं परे च विविशुर्जलम् ॥५६॥
तथा संछिन्नसर्वाङ्गैस्स वीरस्त्रिदशैर्बभौ । परिग्रस्तप्रजावर्गो भगवानिव भैरवः ॥५७॥
दग्धत्रिपुरसंव्यूहस्त्रिपुरारिर्यथाभवत् । एवं देवबलं सर्वं दीनं बीभत्सदर्शनम् ॥५८॥
गणेश्वरसमुत्पन्नं कृपणं वपुराददे । तदा त्रिदशवीराणामसृक्सलिलवाहिनी ॥५९॥
प्रावर्तत नदी घोरा प्राणिनां भयशंसिनी । रुधिरेण परिक्लिन्ना यज्ञभूमिस्तदा बभौ ॥६०॥
रक्तार्द्रवसना श्यामा हतशुंभेव कैशिकी । तस्मिन्महति संवृत्ते समरे भृशदारुणे ॥६१॥
भयेनेव परित्रस्ता प्रचचाल वसुन्धरा । महोर्मिकलिलावर्तश्चुक्षुभे च महोदधिः ॥६२॥
पेतुश्चोल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः । अप्रसन्ना दिशः सर्वाः पवनश्चा शिवो ववौ ॥६३॥
अहो विधिविपर्यासस्त्वश्वमेधोयमध्वरः । यजमानस्स्वयं दक्षौ ब्रह्मपुत्रप्रजापतिः ॥६४॥
धर्मादयस्सदस्याश्च रक्षिता गरुडध्वजः । भागांश्च प्रतिगृह्णंति साक्षादिंद्रादयः सुराः ॥६५॥
तथापि यजमानस्य यज्ञस्य च सहर्त्विजः । सद्य एव शिरश्छेदस्साधु संपद्यते फलम् ॥६६॥
तस्मान्नावेदनिर्दिष्टं न चेश्वरबहिष्कृतम् । नासत्परिगृहीतं च कर्म कुर्यात्कदाचन ॥६७॥
कृत्वापि सुमहत्पुण्यमिष्ट्वा यज्ञशतैरपि । न तत्फलमवाप्नोति भक्तिहीनो महेश्वरे ॥६८॥
कृत्वापि सुमहत्पापं भक्त्या यजति यश्शिवम् । मुच्यते पातकैः सर्वैर्नात्र कार्या विचारणा ॥६९॥
बहुनात्र किमुक्तेन वृथा दानं वृथा तफ । वृथा यज्ञो वृथा होमः शिवनिन्दारतस्य तु ॥७०॥
ततः सनारायणकास्ससरुद्राः सलोकपालास्समरे सुरौघाः । गणेंद्रचापच्युतबाणविद्धाः प्रदुद्रुवुर्गाढरुजाभिभूताः ॥७१॥
चेलुः क्वचित्केचन शीर्णकेशाः सेदुः क्वचित्केचन दीर्घगात्राः । पेतुः क्वचित्केचन भिन्नवक्त्रा नेशुः क्वचित्केचन देववीराः ॥७२॥
केचिच्च तत्र त्रिदशा विपन्ना विस्रस्तवस्त्राभरणास्त्रशस्त्राः । निपेतुरुद्भासितदीनमुद्रा मदं च दर्पं च बलं च हित्वा ॥७३॥

सस्मुत्पथप्रस्थितमप्रधृष्यो विक्षिप्य दक्षाध्वरमक्षतास्त्रैः । बभौ गणेशस्स गणेश्वराणां मध्ये स्थितः सिंह इवर्षभाणाम् ॥७४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे दक्षयज्ञविध्वंसवर्णनं नाम द्वाविंशोऽध्यायः ॥२२॥
आदितः श्लोकानां समष्टयङ्काः-२१,११४+७४=२१,१८८



## ॥ अथ त्रयोविंशोऽध्यायः ॥

वायुरुवाच ॥
इति सञ्छिन्नभिन्नाङ्गा देवा विष्णुपुरोगमाः । क्षणात्कष्टां दशामेत्य त्रेसुः स्तोकावशेषिता ॥१॥
त्रस्तांस्तान्समरे वीरान् देवानन्यांश्च वै गणाः । प्रमथाः परमक्रुद्धा वीरभद्रप्रणोदिताः ॥२॥
प्रगृह्य च तथा दोषं निगडैरायसैर्दृढैः । बबन्धुः पाणिपादेषु कंधरेषूदरेषु च ॥३॥
तस्मिन्नवसरे ब्रह्मा भद्रमद्रीन्द्रजानुतम् । सारथ्याल्लब्धवात्सल्यः प्रार्थयन् प्रणतोऽब्रवीत् ॥४॥
अलं क्रोधेन भगवन्नष्टाश्चैते दिवौकसः । प्रसीद क्षम्यतां सर्वं रोमजैस्सह सुव्रत ॥५॥
एवं विज्ञापितस्तेन ब्रह्मणा परमेष्ठिना । शमं जगाम संप्रीतो गणपस्तस्य गौरवात् ॥६॥
देवाश्च लब्धावसरा देवदेवस्य मंत्रिणः । धारयन्तोऽञ्जलीन्मूर्ध्नि तुष्टुवुर्विविधैः स्तवैः ॥७॥
देवा ऊचुः ॥
नमः शिवाय शान्ताय यज्ञहन्त्रे त्रिशूलिने । रुद्रभद्राय रुद्राणां पतये रुद्रभूतये ॥८॥
कालाग्निरुद्ररूपाय कालकामाङ्गहारिणे । देवतानां शिरोहन्त्रे दक्षस्य च दुरात्मनः ॥९॥
संसर्गादस्य पापस्य दक्षस्याक्लिष्टकर्मणः । शासिताः समरे वीर त्वया वयमनिन्दिता ॥१०॥
दग्धाश्चामी वयं सर्वे त्वत्तो भीताश्च भो प्रभो । त्वमेव गतिरस्माकं त्राहि नश्शरणागतान् ॥११॥
वायुरुवाच ॥
तुष्टस्त्वेवं स्तुतो देवान् विसृज्य निगडात्प्रभुः । आनयद्देवदेवस्य समीपममरानिह ॥१२॥
देवोपि तत्र भगवानन्तरिक्षे स्थितः प्रभुः । सगणः सर्वगः शर्वस्सर्वलोकमहेश्वरः ॥१३॥
तं दृष्ट्वा परमेशानं देवा विष्णुपुरोगमाः । प्रीता अपि च भीताश्च नमश्चक्रुर्महेश्वरम् ॥१४॥
दृष्ट्वा तानमरान्भीतान्प्रणतार्तिहरो हरः । इदमाह महादेवः प्रहसन् प्रेक्ष्य पार्वतीम् ॥१५॥
महादेव उवाच ॥
माभैष्ट त्रिदशास्सर्वे यूयं वै मामिकाः प्रजाः । अनुग्रहार्थमेवेह धृतो दण्डः कृपालुना ॥१६॥
भवतां निर्जराणां हि क्षान्तोऽस्माभिर्व्यतिक्रमः । क्रुद्धेष्वस्मासु युष्माकं न स्थितिर्न च जीवितम् ॥१७॥
वायुरुवाच ॥
इत्युक्तास्त्रिदशास्सर्वे शर्वेणामिततेजसा । सद्यो विगतसन्देहा ननृतुर्विबुधा मुदा ॥१८॥
प्रसन्नमनसो भूत्वान्नदविह्वलमानसाः । स्तुतिमारेभिरे कर्तुं शंकरस्य दिवौकसः ॥ १९॥
देवा ऊचुः ॥
त्वमेव देवाखिललोककर्ता पाता च हर्ता परमेश्वरोऽसि ।
कविष्णुरुद्राख्यस्वरूपभेदै रजस्तमस्सत्त्वधृतात्ममूर्ते ॥२०॥
सर्वमूर्ते नमस्तेऽस्तु विश्वभावन पावन । अमूर्ते भक्तहेतोर्हि गृहीताकृतिसौख्यद ॥२१॥
चंद्रोऽगदो हि देवेश कृपातस्तव शंकर । निमज्जनान्मृतः प्राप सुखं मिहिरजाजलिः ॥२२॥
सीमन्तिनी हतधवा तव पूजनतः प्रभो । सौभाग्यमतुलं प्राप सोमवारव्रतात्सुतान् ॥२३॥
श्रीकराय ददौ देवः स्वीयं पदमनुत्तमम् । सुदर्शनमरक्षस्त्वं नृपमण्डलभीतितः ॥२४॥
मेदुरं तारयामास सदारं च घृणानिधिः । शारदां विधवां चक्रे सधवां क्रियया भवान् ॥२५॥
भद्रायुषो विपत्तिं च विच्छिद्य त्वमदाः सुखम् । सौमिनी भवबन्धाद्वै मुक्ताऽभूत्तव सेवनात् ॥२६॥
विष्णुरुवाच ॥

त्वं शम्भो कहरीशाश्च रजस्सत्त्वतमोगुणैः । कर्ता पाता तथा हर्ता जनानुग्रहकांक्षया ॥२७॥
सर्वगर्वापहारी च सर्वतेजोविलासकः । सर्वविद्यादिगूढश्च सर्वानुग्रहकारकः ॥२८॥
त्वत्तः सर्वं च त्वं सर्वं त्वयि सर्वं गिरीश्वर । त्राहि त्राहि पुनस्त्राहि कृपां कुरु ममोपरि ॥२९॥
अथास्मिन्नन्तरे ब्रह्मा प्रणिपत्य कृताञ्जलिः । एवं त्ववसरं प्राप्य व्यज्ञापयत शूलिने ॥३०॥
ब्रह्मोवाच ॥
जय देव महादेव प्रणतार्तिविभंजन । ईदृशेष्वपराधेषु कोऽन्यस्त्वत्तः प्रसीदति ॥३१॥
लब्धमानो भविष्यन्ति ये पुरा निहिता मृधे । प्रत्यापत्तिर्न कस्य स्यात्प्रसन्ने परमेश्वरे ॥३२॥
यदिदं देवदेवानां कृतमन्तुषु दूषणम् । तदिदं भूषणं मन्येत अङ्गीकारगौरवात् ॥३३॥
इति विज्ञाप्यमानस्तु ब्रह्मणा परमेष्ठिना । विलोक्य वदनं देव्या देवदेवस्स्मयन्निव ॥३४॥
पुत्रभूतस्य वात्सल्याद्ब्रह्मणः पद्मजन्मनः । देवादीनां यथापूर्वमङ्गानि प्रददौ प्रभुः ॥३५॥
प्रथमाद्यैश्च या देव्यो दंडिता देवमातरः । तासामपि यथापूर्वाण्यंगानि गिरिशो ददौ ॥३६॥
दक्षस्य भगवानेव स्वयं ब्रह्मा पितामहः । तत्पापानुगुणं चक्रे जरच्छागमुखं मुखम् ॥३७॥
सोऽपि संज्ञां ततो लब्ध्वा स दृष्ट्वा जीवितः सुधी । भीतः कृताञ्जलिः शंभुं तुष्टाव प्रलपन्बहु ॥३८॥
दक्ष उवाच ॥
जय देव जगन्नाथ लोकानुग्रहकारक । कृपां कुरु महेशानापराधं मे क्षमस्व ह ॥३९॥
कर्ता भर्ता च हर्ता च त्वमेव जगतां प्रभो । मया ज्ञातं विशेषेण विष्ण्वादिसकलेश्वरः ॥४०॥
त्वयैव विततं सर्वं व्याप्तं सृष्टं न नाशितम् । न हि त्वदधिकाः केचिदीशास्तेऽच्युतकादयः ॥४१॥
वायुरुवाच ॥
तं तथा व्याकुलं भीतं प्रलपंतं कृतागसम् । स्मयन्निवावदत्प्रेक्ष्य मा भैरिति घृणानिधिः ॥४२॥
तथोक्त्वा ब्रह्मणस्तस्य पितुः प्रियचिकीर्षया । गाणपत्यं ददौ तस्मै दक्षायाक्षयमीश्वरः ॥४३॥
ततो ब्रह्मादयो देवा अभिवंद्य कृतांजलिः । तुष्टुवुः प्रश्रया वाचा शंकरं गिरिजाधिपम् ॥४४॥
ब्रह्मादय ऊचुः ॥
जय शंकर देवेश दीनानाथ महाप्रभो । कृपां कुरु महेशानापराधं नो क्षमस्व वै ॥४५॥
मखपाल मखाधीश मखविध्वंसकारक । कृपां कुरु महेशानापराधं नः क्षमस्व वै ॥४६॥
देवदेव परेशान भक्तप्राणप्रपोषक । दुष्टदण्डप्रद स्वामिन्कृपां कुरु नमोऽस्तु ते ॥४७॥
त्वं प्रभो गर्वहर्ता वै दुष्टानां त्वामजानताम् । रक्षको हि विशेषेण सतां त्वत्सक्तचेतसाम् ॥४८॥
अद्भुतं चरितं ते हि निश्चितं कृपया तव । सर्वापराधः क्षन्तव्यो विभवो दीनवत्सलाः ॥४९॥
वायुरुवाच ॥
इति स्तुतो महादेवो ब्रह्माद्यैरमरैः प्रभुः । स भक्तवत्सलस्स्वामी तुतोष करुणोदधिः ॥५०॥
चकारानुग्रहं तेषां ब्रह्मादीनां दिवौकसाम् । ददौ नरांश्च सुप्रीत्या शंकरो दीनवत्सलः ॥५१॥
स च ततस्त्रिदशाञ्छरणागतान् परमकारुणिकः परमेश्वरः । अनुगतस्मितलक्षणया गिरा शमितसर्वभयः समभाषत ॥५२॥
शिव उवाच ॥
यदिदमाग इहाचरितं सुरैर्विधिनियोगवशादिव यन्त्रितैः । शरणमेव गतानवलोक्य वस्तदखिलं किल विस्मृतमेव नः ॥५३॥
तदिह यूयमपि प्रकृतं मनस्यविगणय्य विमर्दमपत्रपाः । हरिविरिंचिसुरेन्द्रमुखास्सुखं व्रजत देवपुरं प्रति संप्रति ॥५४॥
इति सुरानभिधाय सुरेश्वरो निकृतदक्षकृतक्रतुरक्रतुः । सगिरिजानुचरस्सपरिच्छदः स्थित इवाम्बरतोन्तरधाद्धरः ॥५५॥
अथ सुरा अपि ते विगतव्यथाः कथितभद्रसुभद्रपराक्रमाः । सपदि खेन सुखेन यथासुखं ययुरनेकमुखाः मघवन्मुखाः ॥५६॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे गिरिशानुनयो नाम त्रयोविंशोऽध्यायः ॥२३॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,१८८+५६=२१,२४४



## ॥ अथ चतुर्विंशोऽध्यायः ॥

ऋषय ऊचुः ॥
अन्तर्धानगतो देव्या सह सानुचरो हरः । क्व यातः कुत्र वासः किं कृत्वा विरराम ह ॥१॥
वायुरुवाच ॥
महीधरवरः श्रीमान्मंदरश्चित्रकंदरः । दयितो देवदेवस्य निवासस्तपसोऽभवत् ॥२॥
तपो महत्कृतं तेन वोढुं स्वशिरसा शिवौ । चिरेण लब्धं तत्पादपंकजस्पर्शजं सुखम् ॥३॥
तस्य शैलस्य सौन्दर्यं सहस्रवदनैरपि । न शक्यं विस्तराद्वक्तुं वर्षकोटिशतैरपि ॥४॥
शक्यमप्यस्य सौन्दर्यं न वर्णयितुमुत्सहे । पर्वतान्तरसौन्दर्यं साधारणविधारणात् ॥५॥
इदन्तु शक्यते वक्तुमस्मिन्पर्वतसुन्दरे । ऋद्ध्या कयापि सौन्दर्यमीश्वरावासयोग्यता ॥६॥
अत एव हि देवेन देव्याः प्रियचिकीर्षया । अतीव रमणीयोयं गिरिरन्तःपुरीकृतः ॥७॥
मेखलाभूमयस्तस्य विमलोपलपादपाः । शिवयोर्नित्यसान्निध्यान्न्यक्कुर्वन्त्यखिलंजगत् ॥८॥
पितृभ्यां जगतो नित्यं स्नानपानोपयोगतः । अवाप्तपुण्यसंस्कारः प्रसरद्भिरितस्ततः ॥९॥
लघुशीतलसंस्पर्शैरच्छाच्छैर्निर्झराम्बुभिः । अधिराज्येन चाद्रीणामद्रीरेषोऽभिषिच्यते ॥१०॥
निशासु शिखरप्रान्तवर्तिना स शिलोच्चयः । चंद्रेणाचल साम्राज्यच्छत्रेणेव विराजते ॥११॥
स शैलश्चंचलीभूतैर्बालैश्चामरयोषिताम् । सर्वपर्वतसाम्राज्यचामरैरिव वीज्यते ॥१२॥
प्रातरभ्युदिते भानौ भूधरो रत्नभूषितः । दर्पणे देहसौभाग्यं द्रष्टुकाम इव स्थितः ॥१३॥
कूजद्विहंगवाचालैर्वातोद्धूतलताभुजैः । विमुक्तपुष्पैः सततं व्यालम्बिमृदुपल्लवैः ॥१४॥
लताप्रतानजटिलैस्तरुभिस्तपसैरिव । जयाशिषा सहाभ्यर्च्य निषेव्यत इवाद्रिराट् ॥१५॥
अधोमुखैरूर्ध्वमुखैश्शृंगैस्तिर्यङ्मुखैस्तथा । प्रपतन्निव पाताले भूपृष्ठादुत्पतन्निव ॥१६॥
परीतः सर्वतो दिक्षु भ्रमन्निव विहायसि । पश्यन्निव जगत्सर्वं नृत्यन्निव निरन्तरम् ॥१७॥
गुहामुखैः प्रतिदिनं व्यात्तास्यो विपुलोदरैः । अजीर्णलावण्यतया जृंभमाण इवाचलः ॥१८॥
ग्रसन्निव जगत्सर्वं पिबन्निव पयोनिधिम् । वमन्निव तमोन्तस्थं माद्यन्निव खमम्बुदैः ॥१९॥
निवास भूमयस्तास्ता दर्पणप्रतिमोदराः । तिरस्कृतातपास्निग्धाश्रमच्छायामहीरुहाः ॥२०॥
सरित्सरस्तडागादिसंपर्कशिशिरानिलाः । तत्र तत्र निषण्णाभ्यां शिवाभ्यां सफलीकृताः ॥२१॥
तमिमं सर्वतः श्रेष्ठं स्मृत्वा साम्बस्त्रियम्बकः । रैभ्याश्रमसमीपस्थश्चान्तर्धानं गतो ययौ ॥२२॥
तत्रोद्यानमनुप्राप्य देव्या सह महेश्वरः । रराम रमणीयासु देव्यान्तःपुरभूमिषु ॥२३॥
तथा गतेषु कालेषु प्रवृद्धासु प्रजासु च । दैत्यौ शुंभनिशुंभाख्यौ भ्रातरौ संबभूवतुः ॥२४॥
ताभ्यां तपो बलाद्दत्तं ब्रह्मणा परमेष्ठिना । अवध्यत्वं जगत्यस्मिन्पुरुषैरखिलैरपि ॥२५॥
अयोनिजा तु या कन्या ह्यंबिकांशसमुद्भवा । अजातपुंस्पर्शरतिरविलंज्ज्यपराक्रमा ॥२६॥
तया तु नौ वधः संख्ये तस्यां कामाभिभूतयोः । इति चाभ्यर्थितो ब्रह्मा ताभ्याम्प्राह तथास्त्विति ॥२७॥
ततः प्रभृति शक्रादीन्विजित्य समरे सुरान् । निःस्वाध्यायवषट्कारं जगच्चक्रतुरक्तमात् ॥२८॥
तयोर्वधाय देवेशं ब्रह्माभ्यर्थितवान्पुनः । विनिंद्यापि रहस्यं वां क्रोधयित्वा यथा तथा ॥२९॥
तद्वर्णकोशजां शक्तिमकामां कन्यकात्मिकाम् । निशुम्भशुंभयोर्हन्त्रीं सुरेभ्यो दातुमर्हसि ॥३०॥
एवमभ्यर्थितो धात्रा भगवान्नीललोहितः । कालीत्याह रहस्यं वां निन्दयन्निव सस्मितः ॥३१॥
ततः क्रुद्धा तदा देवी सुवर्णा वर्णकारणात् । स्मयन्ती चाह भर्तारमसमाधेयया गिरा ॥३२॥
देव्युवाच ॥
ईदृशो मम वर्णेस्मिन्न रतिर्भवतोऽस्ति चेत् । एवावन्तं चिरं कालं कथमेषा नियम्यते ॥३३॥

अरत्या वर्तमानोऽपि कथं च रमसे मया । न ह्यशक्यं जगत्यस्मिन्नीश्वरस्य जगत्प्रभोः ॥३४॥
स्वात्मारामस्य भवतो रतिर्न सुखसाधनम् । इति हेतोः स्मरो यस्मात्प्रसभं भस्मसात्कृतः ॥३५॥
या च नाभिमता भर्तुरपि सर्वाङ्गसुन्दरी । सा वृथैव हि जायेत सर्वैरपि गुणान्तरैः ॥३६॥
भर्तुर्भोगैकशेषो हि सर्ग एवैष योषिताम् । तथासत्यन्यथाभूता नारी कुत्रोपयुज्यते ॥३७॥
तस्माद्वर्णमिमं त्यक्त्वा त्वया रहसि निन्दितम् । वर्णान्तरं भजिष्ये वा न भजिष्यामि वा स्वयम् ॥३८॥
इत्युक्त्वोत्थाय शयनाद्देवी साचष्ट गद्गदम् । ययाचेऽनुमतिं भर्तुस्तपसे कृतनिश्चया ॥३९॥
तथा प्रणयभंगेन भीतो भूतपतिः स्वयम् । पादयोः प्रणमन्नेव भवानीं प्रत्यभाषत ॥४०॥
ईश्वर उवाच ॥
अजानती च क्रीडोक्तिं प्रिये किं कुपितासि मे । रतिः कुतो वा जायेत त्वत्तश्चेदरतिर्मम ॥४१॥
माता त्वमस्य जगतः पितामहधिपस्तथा । कथं तदुत्पपद्येत त्वत्तो नाभिरतिर्मम ॥४२॥
आवयोरभिकामोऽपि किमसौ कामकारितः । यतः कामसमुत्पत्तिः प्रागेव जगदुद्भवः ॥४३॥
पृथग्जनानां रतये कामात्मा कल्पितो मया । ततः कथमुपालब्धः कामदाहादहं त्वया ॥४४॥
मां वै त्रिदशसामान्यं मन्यमानो मनोभवः । मनाक्परिभवं कुर्वन्मया वै भस्मसात्कृतः ॥४५॥
विहारोप्यावयोरस्य जगतस्त्राणकारणात् । ततस्तदर्थं त्वय्यद्य क्रीडोक्तिं कृतवाहनम् ॥४६॥
स चायमचिरादर्थस्तवैवाविष्करिष्यते । क्रोधस्य जनकं वाक्यं हृदि कृत्वेदमब्रवीत् ॥४७॥
देव्युवाच ॥
श्रुतपूर्वं हि भगवंस्तव चाटु वचो मया । येनैवमतिधीराहमपि प्रागभिवंचिता ॥४८॥
प्राणानप्यप्रिया भर्तुर्नारी या न परित्यजेत् । कुलाङ्गना शुभा सद्भिः कुत्सितैव हि गम्यते ॥४९॥
भूयसी च तवाप्रीतिरगौरमिति मे वपुः । क्रीडोक्तिरपि कालीति घटते कथमन्यथा ॥५०॥
सद्भिर्विगर्हितं तस्मात्तव कार्ष्ण्यमसंमतम् । अनुत्सृज्य तपोयोगात्स्थातुमेवेह नोत्सहे ॥५१॥
शिव उवाच ॥
स यद्येवंविधतापस्ते तपसा किं प्रयोजनम् । ममेच्छया स्वेच्छया वा वर्णान्तरवती भव ॥५२॥
देव्युवाच ॥
नेच्छामि भवतो वर्णं स्वयं वा कर्तुमन्यथा । ब्रह्माणं तपसाराध्य क्षिप्रं गौरी भवाम्यहम् ॥५३॥
ईश्वर उवाच ॥
मत्प्रसादात्पुरा ब्रह्मा ब्रह्मत्वं प्राप्तवान्पुरा । तमाहूय महादेवि तपसा किं करिष्यसि ॥५४॥
देव्युवाच ॥
त्वत्तो लब्धपदा एव सर्वे ब्रह्मादयः सुराः । तथाप्याराध्य तपसा ब्रह्माणं त्वन्नियोगतः ॥५५॥
पुरा किल सती नाम्ना दक्षस्य दुहिताऽभवम् । जगतां पतिमेवं त्वां पतिं प्राप्तवती तथा ॥५६॥
एवमद्यापि तपसा तोषयित्वा द्विजं विधिम् । गौरी भवितुमिच्छामि को दोषः कथ्यतामिह ॥५७॥
एवमुक्तो महादेव्या वामदेवः स्मयन्निव । न तां निर्बंधयामास देवकार्यचिकीर्षया ॥५८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवमन्दरगिरिनिवासक्रीडोक्तिवर्णनं नाम चतुर्विंशोऽध्यायः ॥२४॥
आदितः श्लोकानां समष्टयङ्काः-२१,२४४+५८=२१,३०२

## ॥ अथ पञ्चविंशोऽध्यायः ॥

वायुरुवाच ॥
ततः प्रदक्षिणीकृत्य पतिमम्बा पतिव्रता । नियम्य च वियोगार्तिं जगाम हिमवद्गिरिम् ॥१॥
तपःकृतवती पूर्वं देशे यस्मिन्सखीजनैः । तमेव देशमवृणोत्तपसे प्रणयात्पुनः ॥२॥
ततः स्वपितरं दृष्ट्वा मातरं च तयोर्गृहे । प्रणम्य वृत्तं विज्ञाप्य ताभ्यां चानुमता सती ॥३॥

पुनस्तपोवनं गत्वा भूषणानि विसृज्य च । स्नात्वा तपस्विनो वेषं कृत्वा परमपावनम् ॥४॥
संकल्प्य च महातीव्रं तपः परमदुश्चरम् । सदा मनसि सन्धाय भर्तुश्चरणपंकजम् ॥५॥
तमेव क्षणिके लिङ्गे ध्यात्वा बाह्यविधानतः । त्रिसन्ध्यमभ्यर्चयन्ती वन्यैः पुष्पैः फलादिभिः ॥६॥
स एव ब्रह्मणो मूर्तिमास्थाय तपसः फलम् । प्रदास्यति ममेत्येवं नित्यं कृत्वाऽकरोत्तपः ॥७॥
तथा तपश्चरन्तीं तां काले बहुतिथे गते । दृष्टः कश्चिन्महाव्याघ्रो दुष्टभावादुपागमत् ॥८॥
तथैवोपगतस्यापि तस्यातीवदुरात्मनः । गात्रं चित्रार्पितमिव स्तब्धं तस्यास्सकाशतः ॥९॥
तं दृष्ट्वापि तथा व्याघ्रं दुष्टभावादुपागतम् । न पृथग्जनवद्देवी स्वभावेन विविच्यते ॥१०॥
स तु विष्टब्धसर्वाङ्गो बुभुक्षापरिपीडितः । ममामिषं ततो नान्यदिति मत्वा निरन्तरम् ॥११॥
निरीक्ष्यमाणः सततं देवीमेव तदाऽनिशम् । अतिष्ठदग्रतस्तस्या उपासनमिवाचरत् ॥१२॥
देव्याश्च हृदये नित्यं ममैवायमुपासकः । त्राता च दुष्टसत्त्वेभ्य इति प्रववृते कृपा ॥१३॥
तस्या एव कृपा योगात्सद्योनष्टमलत्रयः । बभूव सहसा व्याघ्रो देवीं च बुबुधे तदा ॥१४॥
न्यवर्तत बुभुक्षा च तस्याङ्गस्तम्भनं तथा । दौरात्म्यं जन्मसिद्धं च तृप्तिश्च समजायत ॥१५॥
तदा परमभावेन ज्ञात्वा कार्तार्थ्यमात्मनः । सद्योपासक एवैष सिषेवे परमेश्वरीम् ॥१६॥
दुष्टानामपि सत्त्वानां तथान्येषान्दुरात्मनाम् । स एव द्रावको भूत्वा विचचार तपोवने ॥१७॥
तपश्च ववृधे देव्यास्तीव्रं तीव्रतरात्मकम् । देवाश्च दैत्यनिर्बन्धाद्ब्रह्माणं शरणं गताः ॥१८॥
चक्रुर्निवेदनं देवाः स्वदुःखस्यारिपीडनात् । यथा च ददतुः शुम्भनिशुम्भौ वरसम्मदात् ॥१९॥
सोऽपि श्रुत्वा विधिर्दुःखं सुराणां कृपयान्वितः । आसीद्दैत्यवधायैव स्मृत्वा हेत्वाश्रयां कथाम् ॥२०॥
सामरः प्रार्थितो ब्रह्मा ययौ देव्यास्तपोवनम् । संस्मरन्मनसा देवदुःखमोक्षं स्वयत्नतः ॥२१॥
ददर्श च सुरश्रेष्ठः श्रेष्ठे तपसि निष्ठिताम् । प्रतिष्ठामिव विश्वस्य भवानीं परमेश्वरीम् ॥२२॥
ननाम चास्य जगतो मातरं स्वस्य वै हरेः । रुद्रस्य च पितुर्भार्यामार्यामद्रीश्वरात्मजाम् ॥२३॥
ब्रह्माणमागतं दृष्ट्वा देवी देवगणैः सह । अर्घ्यं तदर्हं दत्त्वाऽस्मै स्वागताद्यैरुपाचरत् ॥२४॥
तां च प्रत्युपचारोक्तिं पुरस्कृत्याभिनंद्य च । पप्रच्छ तपसो हेतुमजानन्निव पद्मजः ॥२५॥

ब्रह्मोवाच ॥

तीव्रेण तपसानेन देव्या किमिह साध्यते । तपःफलानां सर्वेषां त्वदधीना हि सिद्धयः ॥२६॥
यश्चैव जगतां भर्ता तमेव परमेश्वरम् । भर्तारमात्मना प्राप्य प्राप्तञ्च तपसः फलम् ॥२७॥
अथवा सर्वमेवैतत्क्रीडाविलसितं तव । इदन्तु चित्रं देवस्य विरहं सहसे कथम् ॥२८॥

देव्युवाच ॥

सर्गादौ भवतो देवादुत्पत्तिः श्रूयते यदा । तदा प्रजानां प्रथमस्त्वं मे प्रथमजः सुतः ॥२९॥
यदा पुनः प्रजावृद्ध्यै ललटाद्भवतो भवः । उत्पन्नोऽभूत्तदा त्वं मे गुरुः श्वशुरभावतः ॥३०॥
यदा भवद्गिरीन्द्रस्ते पुत्रो मम पिता स्वयम् । तदा पितामहस्त्वं मे जातो लोकपितामह ॥३१॥
तदीदृशस्य भवतो लोकयात्राविधायिनः । वृत्तवन्तःपुरे भर्ता कथयिष्ये कथं पुनः ॥३२॥
किमत्र बहुना देहे यश्चायं मम कालिमा । त्यक्त्वा सत्त्वविधानेन गौरी भवितुमुत्सहे ॥३३॥

ब्रह्मोवाच ॥

एतावता किमर्थेन तीव्रं देवि तपः कृतम् । स्वेच्छैव किमपर्याप्ता क्रीडेयं हि तवेदृशी ॥३४॥
क्रीडाऽपि च जगन्मातस्तव लोकहिताय वै । अतो ममेष्टमनया फलं किमपि साध्यताम् ॥३५॥
निशुंभशुंभनामानौ दैत्यौ दत्तवरौ मया । दृप्तौ देवान्प्रबाधेते त्वत्तो लब्धस्तयोर्वधः ॥३६॥
अलं विलंबनेनात्र त्वं क्षणेन स्थिरा भव । शक्तिर्विसृज्यमानाऽद्य तयोर्मृत्युर्भविष्यति ॥३७॥
ब्राह्मणाभ्यर्थिता चैव देवी गिरिवरात्मजा । त्वक्कोशं सहसोत्सृज्य गौरी सा समजायत ॥३८॥
सा त्वक्कोशात्मनोत्सृष्टा कौशिकी नाम नामतः । काली कालाम्बुदप्रख्या कन्यका समपद्यत ॥३९॥
सा तु मायात्मिका शक्तिर्योगनिद्रा च वैष्णवी । शंखचक्रत्रिशूलादिसायुधाष्टमहाभुजा ॥४०॥
सौम्या घोरा च मिश्रा च त्रिनेत्रा चन्द्रशेखरा । अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी ॥४१॥

दत्ता च ब्रह्मणे देव्या शक्तिरेषा सनातनी । निशुंभस्य च शुंभस्य निहंत्री दैत्यसिंहयोः ॥४२॥
ब्रह्मणापि प्रहृष्टेन तस्यै परमशक्तये । प्रबलः केसरी दत्तो वाहनत्वे समागतः ॥४३॥
विन्ध्ये च वसतिं तस्याः पूजामासवपूर्वकैः । मांसैर्मत्स्यैरपूपैश्च निर्वर्त्यासौ समादिशत् ॥४४॥
सा चैव संमता शक्तिर्ब्रह्मणो विश्वकर्मणः । प्रणम्य मातरं गौरीं ब्रह्माणं चानुपूर्वशः ॥४५॥
शक्तिभिश्चापि तुल्याभिः स्वात्मजाभिरनेकशः । परीता प्रययौ विन्ध्यं दैत्येन्द्रौ हन्तुमुद्यता ॥४६॥
निहतौ च तया तत्र समरे दैत्यपुंगवौ । तद्बाणैः कामबाणैश्च च्छिन्नभिन्नाङ्गमानसौ ॥४७॥
तद्युद्धविस्तरश्चात्र न कृतोऽन्यत्र वर्णनात् । ऊहनीयं परस्माच्च प्रस्तुतं वर्णयामि वः ॥४८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे देवीगौरत्वभवनं नाम पञ्चविंशोऽध्यायः ॥२५॥
आदितः श्लोकानां समष्टयङ्काः-२१,३०२+४८=२१,३५०



## ॥ अथ षड्विंशोऽध्यायः ॥

वायुरुवाच ॥
उत्पाद्य कौशिकीं गौरी ब्रह्मणे प्रतिपाद्यताम् । तस्य प्रत्युपकाराय पितामहमथाब्रवीत् ॥१॥
देव्युवाच ॥
दृष्टः किमेष भवता शार्दूलो मदुपाश्रयः । अनेन दुष्टसत्त्वेभ्यो रक्षितं मत्तपोवनम् ॥२॥
मय्यर्पितमना एष भजते मामनन्यधीः । अस्य संरक्षणादन्यत्प्रियं मम न विद्यते ॥३॥
भवितव्यमनेनातो ममान्तःपुरचारिणा । गणेश्वरपदं चास्मै प्रीत्या दास्यति शंकरः ॥४॥
एनमग्रेसरं कृत्वा सखीभिर्गन्तुमुत्सहे । प्रदीयतामनुज्ञा मे प्रजानां पतिना त्वया ॥५॥
इत्युक्तः प्रहसन्ब्रह्मा देवीम्मुग्धामिव स्मयन् । तस्य तीव्रैः पुरावृत्तैर्दौरात्म्यं समवर्णयत् ॥६॥
ब्रह्मोवाच ॥
पशौ देवि मृगाः क्रूराः क्व च तेऽनुग्रहः शुभः । आशीविषमुखे साक्षादमृतं किं निषिच्यते ॥७॥
व्याघ्रमात्रेण सन्नेष दुष्टः कोऽपि निशाचरः । अनेन भक्षिता गावो ब्राह्मणाश्च तपोधनाः ॥८॥
तर्पयंस्तान्यथाकामं कामरूपी चरत्यसौ । अवश्यं खलु भोक्तव्यं फलं पापस्य कर्मणः ॥९॥
अतः किं कृपया कृत्यमीदृशेषु दुरात्मसु । अनेन देव्याः किं कृत्यं प्रकृत्या कलुषात्मना ॥१०॥
देव्युवाच ॥
यदुक्तं भवता सर्वं तथ्यमस्त्वयमीदृशः । तथापि मां प्रपन्नोऽभून्नत्याज्यो मामुपाश्रितः ॥११॥
ब्रह्मोवाच ॥
अस्य भक्तिमविज्ञाय प्राग्वृत्तं ते निवेदितम् । भक्तिश्चेदस्य किं पापैर्न ते भक्तः प्रणश्यति ॥१२॥
पुण्यकर्मापि किं कुर्यात्त्वदीयाज्ञानपेक्षया । अजा प्रज्ञा पुराणी च त्वमेव परमेश्वरी ॥१३॥
त्वदधीना हि सर्वेषां बन्धमोक्षव्यवस्थितिः । त्वदृते परमा शक्तिः संसिद्धिः कस्य कर्मणा ॥१४॥
त्वमेव विविधा शक्तिः भवानामथ वा स्वयम् । अशक्तः कर्मकरणे कर्ता वा किं करिष्यति ॥१५॥
विष्णोश्च मम चान्येषां देवदानवरक्षसाम् । तत्तदैश्वर्यसम्प्राप्त्यै तवैवाज्ञा हि कारणम् ॥१६॥
अतीताः खल्वसंख्याता ब्रह्माणो हरयो भवाः । अनागतास्त्वसंख्यातास्त्वदाज्ञानुविधायिनः ॥१७॥
त्वामनाराध्य देवेशि पुरुषार्थचतुष्टयम् । लब्धुं न शक्यमस्माभिरपि सर्वैः सुरोत्तमैः ॥१८॥
व्यत्यासोऽपि भवेत्सद्यो ब्रह्मत्वस्थावरत्वयोः । सुकृतं दुष्कृतं चापि त्वयेव स्थापितं यतः ॥१९॥
त्वं हि सर्वजगद्भर्तुश्शिवस्य परमात्मनः । अनादिमध्यनिधना शक्तिराद्या सनातनी ॥२०॥
समस्तलोकयात्रार्थं मूर्तिमाविश्य कामपि । क्रीडसे विविधैर्भावैः कस्त्वां जानाति तत्त्वतः ॥२१॥
अतो दुष्कृतकर्मापि व्याघ्रोऽयं त्वदनुग्रहात् । प्राप्नोतु परमां सिद्धिमत्र कः प्रतिबन्धकः ॥२२॥
इत्यात्मनः परं भावं स्मारयित्वानुरूपतः । ब्रह्मणाभ्यर्थिता गौरी तपसोऽपि न्यवर्तत ॥२३॥
ततो देवीमनुज्ञाप्य ब्रह्मण्यन्तर्हिते सति । देवीं च मातरं दृष्ट्वा मेनां हिमवता सह ॥२४॥

प्रणम्याश्वास्य बहुधा पितरौ विरहासहौ । तफ प्रणयिनो देवी तपोवनमहीरुहान् ॥२५॥
विप्रयोगशुचेवाग्रे पुष्पबाष्पं विमुञ्चतः । तत्तुच्छाखासमारूढविहगो दीरितै रुतैः ॥२६॥
व्याकुलं बहुधा दीनं विलापमिव कुर्वतः । सखीभ्यः कथयन्त्येवं सत्त्वरा भर्तृदर्शने ॥२७॥
पुरस्कृत्य च तं व्याघ्रं स्नेहात्पुत्रमिवौरसम् । देहस्य प्रभया चैव दीपयन्ती दिशो दश ॥२८॥
प्रययौ मंदरं गौरी यत्र भर्ता महेश्वरः । सर्वेषां जगतां धाता कर्ता पाता विनाशकृत् ॥२९॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे व्याघ्रगतिवर्णनं नाम षड्विंशोऽध्यायः ॥२६॥
आदितः श्लोकानां समष्टयङ्काः-२१,३५०+२९=२१,३७९



## ॥ अथ सप्तविंशोऽध्यायः ॥

ऋषय ऊचुः ॥
कृत्वा गौरं वपुर्दिव्यं देवी गिरिवरात्मजा । कथं ददर्श भर्तारं प्रविष्टा मन्दितं सती ॥१॥
प्रवेशसमये तस्या भवनद्वारगोचरैः । गणेशैः किं कृतं देवस्तान्दृष्ट्वा किंतदाऽकरोत् ॥२॥
वायुरुवाच ॥
प्रवक्तुमंजसाऽशक्यः तादृशः परमो रसः । येन प्रणयगर्भेण भावो भाववतां हृतः ॥३॥
द्वास्थैस्ससंभ्रमैरेव देवो देव्यागमोत्सुकः । शंकमाना प्रविष्टान्तस्तत्र सा समपश्यत ॥४॥
तैस्तैः प्रणयभावैश्च भवनान्तरवर्तिभिः । गणेन्द्रैर्वन्दिता वाचा प्रणनाम त्रियम्बकम् ॥५॥
प्रणम्य नोत्थिता यावत्तावत्तां परमेश्वरः । प्रगृह्य दोर्भ्यामाश्लिष्य परितः परया मुदा ॥६॥
स्वाङ्के धर्तुं प्रवृत्तोऽपि सा पर्यङ्के न्यषीदत । पर्यङ्कतो बलाद्देवीं सोङ्कमारोप्य सुस्मिताम् ॥७॥
सस्मितो विवृतैर्नेत्रैस्तद्वक्त्रं प्रपिबन्निव । तया संभाषणायेशः पूर्वभाषितमब्रवीत् ॥८॥
देवदेव उवाच ॥
सा दशा च व्यतीता किं तव सर्वाङ्गसुन्दरि । यस्यामनुनयोपायः कोऽपि कोपान्नलभ्यते ॥९॥
स्वेच्छयापि न कालीति नान्यवर्णवतीति च । त्वत्स्वभावाहृतं चित्तं सुभ्रु चिन्तावहं मम ॥१०॥
विस्मृतः परमो भावः कथं स्वेच्छाङ्गयोगतः । न सम्भवन्ति ये तत्र चित्तकालुष्यहेतवः ॥११॥
पृथग्जनवदन्योन्यं विप्रियस्यापि कारणम् । आवयोरपि यद्यस्ति नास्त्येवैतच्चराचरम् ॥१२॥
अहमग्निशिरोनिष्ठस्त्वं सोमशिरसि स्थिता । अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम् ॥१३॥
जगद्धिताय चरतोः स्वेच्छाधृतशरीरयोः । आवयोर्विप्रयोगे हि स्यान्निरालम्बनं जगत् ॥१४॥
अस्ति हेत्वन्तरं चात्र शास्त्रयुक्तिविनिश्चितम् । वागर्थमिव मे वैतज्जगत्स्थावरजंगमम् ॥१५॥
त्वं हि वागमृतं साक्षादहमर्थामृतं परम् । द्वयमप्यमृतं कस्माद्वियुक्तमुपपद्यते ॥१६॥
विद्याप्रत्यायिका त्वं मे वेद्योऽहं प्रत्ययात्तव । विद्यावेद्यात्मनोरेव विश्लेषः कथमावयोः ॥१७॥
न कर्मणा सृजामीदं जगत्प्रतिसृजामि च । सर्वस्याज्ञैकलभ्यत्वादाज्ञात्वं हि गरीयसी ॥१८॥
आज्ञैकसारमैश्वर्यं यस्मात्स्वातन्त्र्यलक्षणम् । आज्ञया विप्रयुक्तस्य चैश्वर्यं मम कीदृशम् ॥१९॥
न कदाचिदवस्थानमावयोर्विप्रयुक्तयोः । देवानां कार्यमुद्दिश्य लीलोक्तिं कृतवानहम् ॥२०॥
त्वयाप्यविदितं नास्ति कथं कुपितवत्यसि । ततस्त्रिलोकरक्षार्थे कोपो मय्यपि ते कृतः ॥२१॥
यदनर्थाय भूतानां न तदस्ति खलु त्वयि । इति प्रियंवदे साक्षादीश्वरे परमेश्वरे ॥२२॥
शृंगारभावसाराणां जन्मभूमिरकृत्रिमा । स्वभर्त्रा ललितन्तथ्यमुक्तं मत्वा स्मितोत्तरम् ॥२३॥
लज्जया न किमप्यूचे कौशिकी वर्णनात्परम् । तदेव वर्णयाम्यद्य शृणु देव्याश्च वर्णनम् ॥२४॥
देव्युवाच ॥
किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया । तादृशी कन्यका लोके न भूता न भविष्यति ॥२५॥
तस्या वीर्यं बलं विन्ध्यनिलयं विजयं तथा । शुंभस्य च निशुंभस्य मारणे च रणे तयोः ॥२६॥
प्रत्यक्षफलदानं च लोकाय भजते सदा । लोकानां रक्षणं शश्वद्ब्रह्मा विज्ञापयिष्यति ॥२७॥

इति संभाषमाणाया देव्या एवाज्ञया तदा । व्याघ्रः सख्या समानीय पुरोऽवस्थापितस्तदा ॥२८॥
तं प्रेक्ष्याह पुनर्देवी देवानीतमुपायतम् । व्याघ्रं पश्य न चानेन सदृशो मदुपासकः ॥२९॥
अनेन दुष्टसंघेभ्यो रक्षितं मत्तपोवनम् । अतीव मम भक्तश्च विश्रब्धश्च स्वरक्षणात् ॥३०॥
स्वदेशं च परित्यज्य प्रसादार्थं समागतः । यदि प्रीतिरभून्मत्तः परां प्रीतिं करोषि मे ॥३१॥
नित्यमन्तःपुरद्वारि नियोगान्नन्दिनः स्वयम् । रक्षिभिस्सह तच्चिह्नैर्वर्ततामयमीश्वर ॥३२॥
वायुरुवाच ॥
मधुरं प्रणयोदर्कं श्रुत्वा देव्याः शुभं वचः । प्रीतोऽस्मीत्याह तं देवस्स चादृश्यत तत्क्षणात् ॥३३॥
बिभ्रद्वेत्रलतां हैमीं रत्नचित्रं च कंचुकम् । छुरिकामुरगप्रख्यां गणेशो रक्षवेषधृक् ॥३४॥
यस्मात्सोमो महादेवो नन्दी चानेन नन्दितः । सोमनन्दीति विख्यातस्तस्मादेष समाख्यया ॥३५॥
इत्थं देव्याः प्रियं कृत्वा देवश्चार्धेन्दुभूषणः । भूषयामास तन्दिव्यैर्भूषणै रत्नभूषितैः ॥३६॥
ततस्स गौरीं गिरिशो गिरीन्द्रजां सगौरवां सर्वमनोहरां हरः । पर्यंकमारोप्य वराङ्गभूषणैर्विभूषयामास शशाङ्कभूषणः ॥३७॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे सप्तविंशोऽध्यायः ॥२७॥
आदितः श्लोकानां समष्टयङ्काः-२१,३७९+३७=२१,४१६



## ॥ अथाष्टाविंशोऽध्यायः ॥

ऋषय ऊचुः ॥
देवीं समादधानेन देवेनेदं किमीरितम् । अग्निषोमात्मकं विश्वं वागर्थात्मकमित्यपि ॥१॥
आज्ञैकसारमैश्वर्यमाज्ञात्वमिति चोदितम् । तदिदं श्रोतुमिच्छामो यथावदनुपूर्वशः ॥२॥
वायुरुवाच ॥
अग्निरित्युच्यते रौद्री घोरा या तैजसी तनुः । सोमः शाक्तोऽमृतमयः शक्तेः शान्तिकरी तनुः ॥३॥
अमृतं यत्प्रतिष्ठा सा तेजो विद्या कला स्वयम् । भूतसूक्ष्मेषु सर्वेषु त एव रसतेजसी ॥४॥
द्विविधा तेजसो वृत्तिसूर्यात्मा चानलात्मिका । तथैव रसवृत्तिश्च सोमात्मा च जलात्मिका ॥५॥
विद्युदादिमयन्तेजो मधुरादिमयो रसः । तेजोरसविभेदैस्तु धृतमेतच्चराचरम् ॥६॥
अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते । अत एव हि विक्रान्तमग्नीषोमं जगद्धितम् ॥७॥
हविषे सस्यसम्पत्तिर्वृष्टिः सस्याभिवृद्धये । वृष्टेरेव हविस्तस्मादग्नीषोमधृतं जगत् ॥८॥
अग्निरूर्ध्वं ज्वलत्येष यावत्सौम्यं परामृतम् । यावदग्न्यास्पदं सौम्यममृतं च स्रवत्यधः ॥९॥
अत एव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वतः । यावदादहनं चोर्ध्वमधश्चाप्लावनं भवेत् ॥१०॥
आधारशक्त्यैव धृतः कालाग्निरयमूर्ध्वगः । तथैव निम्नगः सोमश्शिवशक्तिपदास्पदः ॥११॥
शिवश्चोर्ध्वमधश्शक्तिरूर्ध्वं शक्तिरधः शिवः । तदित्थं शिवशक्तिभ्यान्नाव्याप्तमिह किञ्चन ॥१२॥
असकृच्चाग्निना दग्धं जगद्यद्भस्मसात्कृतम् । अग्नेर्वीर्यमिदं चाहुस्तद्वीर्यं भस्म यत्ततः ॥१३॥
यश्चेत्थं भस्मसद्भावं ज्ञात्वा स्नाति च भस्मना । अग्निरित्यादिभिर्मन्त्रैर्बद्धः पाशात्प्रमुच्यते ॥१४॥
अग्नेर्वीर्यं तु यद्भस्म सोमेनाप्लावितम्पुनः । अयोगयुक्त्या प्रकृतेरधिकाराय कल्पते ॥१५॥
योगयुक्त्या तु तद्भस्म प्लाव्यमानं समन्ततः । शाक्तेनामृतवर्षेण चाधिकारान्निवर्तयेत् ॥१६॥
अतो मृत्युञ्जयायेत्थममृतप्लावनं सदा । शिवशक्त्यमृतस्पर्शे लब्धं येन कुतो मृतिः ॥१७॥
यो वेद दहनं गुह्यं प्लावनं च यथोदितम् । अग्नीषोमपदं हित्वा न स भूयोऽभिजायते ॥१८॥
शिवाग्निना तनुं दग्ध्वा शक्तिसौम्या मृतेन यः । प्लावयेद्योगमार्गेण सोऽमृतत्वाय कल्पते ॥१९॥
हृदि कृत्वेममर्थं वै देवेन समुदाहृतम् । अग्नीषोमात्मकं विश्वं जगदित्यनुरूपतः ॥२०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे भस्मतत्त्ववर्णनं नामाष्टाविंशोऽध्यायः ॥२८॥
आदितः श्लोकानां समष्टयङ्काः-२१,४१६+२०=२१,४३६



# ॥ अथैकोनत्रिंशोऽध्यायः ॥

वायुरुवाच ॥

निवेदयामि जगतो वागर्थात्म्यं कृतं यथा । षडध्ववेदनं सम्यक्समासान्न तु विस्तरात् ॥१॥
नास्ति कश्चिदशब्दार्थो नापि शब्दो निरर्थकः । ततो हि समये शब्दस्सर्वस्सर्वार्थबोधकः ॥२॥
प्रकृतेः परिणामोऽयं द्विधा शब्दार्थभावना । तामाहुः प्राकृतीं मूर्तिं शिवयोः परमात्मनोः ॥३॥
शब्दात्मिका विभूतिर्या सा त्रिधा कथ्यते बुधैः । स्थूला सूक्ष्मा परा चेति स्थूला या श्रुतिगोचरा ॥४॥
सूक्ष्मा चिन्तामयी प्रोक्ता चिन्तया रहिता परा । या शक्तिः सा परा शक्तिश्शिवतत्त्वसमाश्रया ॥५॥
ज्ञानशक्तिसमायोगादिच्छोपोद्बलिका तथा । सर्वशक्तिसमष्ट्यात्मा शक्तितत्त्वसमाख्यया ॥६॥
समस्तकार्यजातस्य मूलप्रकृतितां गता । सैव कुण्डलिनी माया शुद्धाध्वपरमा सती ॥७॥
सा विभागस्वरूपैव षडध्वात्मा विजृंभते । तत्र शब्दास्त्रयोऽध्वानस्त्रयश्चार्थाः समीरिताः ॥८॥
सर्वेषामपि वै पुंसां नैजशुद्ध्यनुरूपतः । लयभोगाधिकारास्स्युस्सर्वतत्त्वविभागतः ॥९॥
कलाभिस्तानि तत्त्वानि व्याप्तान्येव यथातथम् । परस्याः प्रकृतेरादौ पञ्चधा परिणामतः ॥१०॥
कलाश्च ता निवृत्त्याद्याः पर्याप्ता इति निश्चयः । मन्त्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दतः ॥११॥
भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः क्रमात् । अत्रान्योन्यं च सर्वेषां व्याप्यव्यापकतोच्यते ॥१२॥
मन्त्राः सर्वैः पदैर्व्याप्ता वाक्यभावात्पदानि च । वर्णैर्वर्णसमूहं हि पदमाहुर्विपश्चितः ॥१३॥
वर्णास्तु भुवनैर्व्याप्तास्तेषां तेषूपलंभनात् । भुवनान्यपि तत्त्वौघैरुत्पत्त्यान्तर्बहिष्क्रमात् ॥१४॥
व्याप्तानि कारणैस्तत्त्वैरारब्धत्वादनेकशः । अंतरादुत्थितानीह भुवनानि तु कानिचित् ॥१५॥
पौराणिकानि चान्यानि विज्ञेयान शिवागमे । सांख्ययोगप्रसिद्धानि तत्त्वान्यपि च कानिचित् ॥१६॥
शिवशास्त्रप्रसिद्धानि ततोन्यान्यपि कृत्स्नशः । कलाभिस्तानि तत्त्वानि व्याप्तान्येव यथातथम् ॥१७॥
परस्याः प्रकृतेरादौ पञ्चधा परिणामतः । कलाश्च ता निवृत्त्याद्या व्याप्ताः पञ्च यथोत्तरम् ॥१८॥
व्यापिकातः परा शक्तिरविभक्ता षडध्वनाम् । परप्रकृतिभावस्य तत्सत्त्वाच्छिवतत्त्वतः ॥१९॥
शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । व्याप्तमेकेन तेनैव मृदा कुम्भादिकं यथा ॥२०॥
शैवं तत्परमं धाम यत्प्राप्यं षड्भिरध्वभिः । व्यापिकाऽव्यापिका शक्तिः पञ्चतत्त्वविशोधनात् ॥२१॥
निवृत्त्या रुद्रपर्यन्तं स्थितिरण्डस्य शोध्यते । प्रतिष्ठया तदूर्ध्वं तु यावदव्यक्तगोचरम् ॥२२॥
तदूर्ध्वं विद्यया मध्ये यावद्विश्वेश्वरावधि । शान्त्या तदूर्ध्वं मध्वान्ते विशुद्धिः शान्त्यतीतया ॥२३॥
यामाहुः परमं व्योम परप्रकृतियोगतः । एतानि पञ्चतत्त्वानि यैर्व्याप्तमखिलं जगत् ॥२४॥
तत्रैव सर्वमेवेदं द्रष्टव्यं खलु साधकैः । अध्वव्याप्तिमविज्ञाय शुद्धिं यः कर्तुमिच्छति ॥२५॥
स विप्रलम्भकः शुद्धेर्नालम्प्रापयितुं फलम् । वृथा परिश्रमस्तस्य निरयायैव केवलम् ॥२६॥
शक्तिपातसमायोगादृते तत्त्वानि तत्त्वतः । तद्व्यापितस्तद्विवृद्धिश्च ज्ञातुमेवं न शक्यते ॥२७॥
शक्तिराज्ञा परा शैवी चिद्रूपा परमेश्वरी । शिवोऽधितिष्ठत्यखिलं यया कारणभूतया ॥२८॥
नात्मनो नैव मायैषा न विकारो विचारतः । न बन्धो नापि मुक्तिश्च बन्धमुक्तिविधायिनी ॥२९॥
सर्वैश्वर्यपराकाष्ठा शिवस्य व्यभिचारिणी । समानधर्मिणी तस्य तैस्तैर्भावैर्विशेषतः ॥३०॥
स तयैव गृही सापि तेनैव गृहिणी सदा । तयोरपत्यं यत्कार्यं परप्रकृतिजं जगत् ॥३१॥
स कर्ता कारणं सेति तयोर्भेदो व्यवस्थितः । एक एव शिवः साक्षाद्द्विधाऽसौ समवस्थितः ॥३२॥
स्त्रीपुंसभावेन तयोर्भेद इत्यपि केचन । अपरे तु परा शक्तिः शिवस्य समवायिनी ॥३३॥
प्रभेव भानोश्चिद्रूपा भिन्नैवेति व्यवस्थितः । तस्माच्छिवः परो हेतुस्तस्याज्ञा परमेश्वरी ॥३४॥
तयैव प्रेरिता शैवी मूलप्रकृतिरव्यया । महामाया च माया च प्रकृतिस्त्रिगुणेति च ॥३५॥
त्रिविधा कार्यवेधेन सा प्रसूते षडध्वनः । स वागर्थमयश्चाध्वा षड्विधो निखिलं जगत् ॥३६॥
अस्यैव विस्तरं प्राहुः शास्त्रजातमशेषतः ॥३७॥

**इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे वागर्थकतत्त्ववर्णनं नामैकोनत्रिंशोऽध्यायः ॥२९॥**
**आदितः श्लोकानां समष्ट्यङ्काः-२१,४३६+३७=२१,४७३**



## ॥ अथ त्रिंशोऽध्यायः ॥

ऋषय ऊचुः ॥
चरितानि विचित्राणि गुह्याणि गहनानि च । दुर्विज्ञेयानि देवैश्च मोहयन्ति मनांसि नः ॥१॥
शिवयोस्तत्त्वसम्बन्धे न दोष उपलभ्यते । चरितैः प्राकृतो भावस्तयोरपि विभाव्यते ॥२॥
ब्रह्मादयोऽपि लोकानां सृष्टिस्थित्यन्तहेतवः । निग्रहानुग्रहौ प्राप्य शिवस्य वशवर्तिनः ॥३॥
शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम् । अतोऽनायत्तमैश्वर्यं तस्यैवेति विनिश्चितम् ॥४॥
यद्येवमीदृशैश्वर्यं तत्तु स्वातन्त्र्यलक्षणम् । स्वभावसिद्धं चैतस्य मूर्तिमत्तास्पदं भवेत् ॥५॥
न मूर्तिश्च स्वतंत्रस्य घटते मूलहेतुना । मूर्तेरपि च कार्यत्वात्तत्सिद्धिः स्यादहैतुकी ॥६॥
सर्वत्र परमो भावोऽपरमश्चान्य उच्यते । परमापरमौ भावौ कथमेकत्र संगतौ ॥७॥
निष्फलो हि स्वभावोऽस्य परमः परमात्मनः । स एव सकलः कस्मात्स्वभावो ह्यविपर्ययः ॥८॥
स्वभावो विपरीतश्चेत्स्वतंत्रः स्वेच्छया यदि । न करोति किमीशानो नित्यानित्यविपर्ययम् ॥९॥
मूर्तात्मा सकलः कश्चित्स चान्यो निष्फलः शिवः । शिवेनाधिष्ठितश्चेति सर्वत्र लघु कथ्यते ॥१०॥
मूर्त्यात्मैव तदा मूर्तिः शिवस्यास्य भवेदिति । तस्य मूर्तौ मूर्तिमतोः पारतन्त्र्यं हि निश्चितम् ॥११॥
अन्यथा निरपेक्षेण मूर्तिः स्वीक्रियते कथम् । मूर्तिस्वीकरणं तस्मान्मूर्तौ साध्यफलेप्सया ॥१२॥
न हि स्वेच्छाशरीरत्वं स्वातन्त्र्यायोपपद्यते । स्वेच्छैव तादृशी पुंसां यस्मात्कर्मानुसारिणी ॥१३॥
स्वीकर्तुं स्वेच्छया देहं हातुं च प्रभवन्त्युत । ब्रह्मादयः पिशाचान्ताः किं ते कर्मातिवर्तिनः ॥१४॥
इच्छया देहनिर्माणमिन्द्रजालोपमं विदुः । अणिमादिगुणैश्वर्यवशीकारानतिक्रमात् ॥१५॥
विश्वरूपं दधद्विष्णुर्दधीचेन महर्षिणा । युध्यता समुपालब्धस्तद्रूपं दधता स्वयम् ॥१६॥
सर्वस्मादधिकस्यापि शिवस्य परमात्मनः । शरीरवत्तयान्यात्मसाधर्म्यं प्रतिभाति नः ॥१७॥
सर्वानुग्राहकं प्राहुश्शिवं परमकारणम् । स निर्गृह्णाति देवानां सर्वानुग्राहकः कथम् ॥१८॥
चिच्छेद बहुशो देवो ब्रह्मणः पञ्चमं शिरः । शिवनिन्दां प्रकुर्वन्तं पुत्रेति कुमतेर्हठात् ॥१९॥
विष्णोरपि नृसिंहस्य रभसा शरभाकृतिः । बिभेद पद्भ्यामाक्रम्य हृदयं नखरैः खरैः ॥२०॥
देवस्त्रीषु च देवेषु दक्षस्याध्वरकारणात् । वीरेण वीरभद्रेण न हि कश्चिददण्डितः ॥२१॥
पुरत्रयं च सस्त्रीकं सदैत्यं सह बालकैः । क्षणेनैकेन देवेन नेत्राग्नेरिंधनीकृतम् ॥२२॥
प्रजानां रतिहेतुश्च कामो रतिपतिस्स्वयम् । क्रोशतामेव देवानां हुतो नेत्रहुताशने ॥२३॥
गावश्च कश्चिद्दुग्धौघं स्रवन्त्यो मूर्ध्नि खेचराः । सरुषा प्रेक्ष्य देवेन तत्क्षणे भस्मसात्कृतः ॥२४॥
जलंधरासुरो दीर्णश्चक्रीकृत्य जलं पदा । बद्धवानन्तेन यो विष्णुं चिक्षेप शतयोजनम् ॥२५॥
तमेव जलसंधायी शूलेनैव जघान सः । तच्चक्रं तपसा लब्ध्वा लब्धवीर्यो हरिस्सदा ॥२६॥
जिघांसतां सुरारीणां कुलं निर्घृणचेतसाम् । त्रिशूलेनान्धकस्योरः शिखिनैवोपतापितम् ॥२७॥
कण्ठात्कालाङ्गनां सृष्ट्वा दारकोऽपि निपातितः । कौशिकीं जनयित्वा तु गौर्यास्त्वक्कोशगोचराम् ॥२८॥
शुंभस्सह निशुंभेन प्रापितो मरणं रणे । श्रुतं च महदाख्यानं स्कान्दे स्कन्दसमाश्रयम् ॥२९॥
वधार्थे तारकाख्यस्य दैत्येन्द्रस्येन्द्रविद्विषः। ब्रह्मणाभ्यर्थितो देवो मन्दरान्तःपुरं गतः ॥३०॥
विहृत्य सुचिरं देव्या विहाराऽतिप्रसङ्गतः । रसां रसातलं नीतामिव कृत्वाभिधां ततः ॥३१॥
देवीं च वंचयंस्तस्यां स्ववीर्यमतिदुर्वहम् । अविसृज्य विसृज्याग्नौ हविः पूतमिवामृतम् ॥३२॥
गङ्गादिष्वपि निक्षिप्य वह्निद्वारा तदंशतः । तत्समाहृत्य शनकैस्तोकंस्तोकमितस्ततः ॥३३॥
स्वाह्या कृत्तिकारूपात्स्वभर्त्रा रममाणया । सुवर्णीभूतया न्यस्तं मेरौ शरवणे क्वचित् ॥३४॥
संदीपयित्वा कालेन तस्य भासा दिशो दश । रञ्जयित्वा गिरीन्सर्वान्कांचनीकृत्य मेरुणा ॥३५॥

ततश्चिरेण कालेन संजाते तत्र तेजसि । कुमारे सुकुमाराङ्गे कुमाराणां निदर्शने ॥३६॥
तच्छैश्वं स्वरूपं च तस्य दृष्ट्वा मनोहरम् । सह देवसुरैर्लोकैर्विस्मिते च विमोहिते ॥३७॥
देवोऽपि स्वयमायातः पुत्रदर्शनलालसः । सह देव्याङ्कमारोप्य ततोऽस्य स्मेरमाननम् ॥३८॥
पीतामृतमिव स्नेहविवशेनान्तरात्मना । देवेष्वपि च पश्यत्सु वीतरागैस्तपस्विभिः ॥३९॥
स्वस्य वक्षःस्थले स्वैरं नर्तयित्वा कुमारकम् । अनुभूय च तत्क्रीडां संभाव्य च परस्परम् ॥४०॥
स्तन्यमाज्ञापयन्देव्याः पाययित्वामृतोपमम् । तवावतारो जगतां हितायेत्यनुशास्य च ॥४१॥
स्वयन्देवश्च देवी च न तृप्तिमुपजग्मतुः । ततः शक्रेण संधाय बिभ्यता तारकासुरात् ॥४२॥
कारयित्वाभिषेकं च सेनापत्ये दिवौकसाम् । पुत्रमन्तरतः कृत्वा देवेन त्रिपुरद्विषा ॥४३॥
स्वयमंतर्हितेनैव स्कन्दमिन्द्रादिरक्षितम् । तच्छक्त्या क्रौञ्चभेदिन्या युधि कालाग्निकल्पया ॥४४॥
छेदितं तारकस्यापि शिरश्शक्रभिया सह । स्तुतिं चक्रुर्विशेषेण हरिधातृमुखाः सुराः ॥४५॥
तथा रक्षोधिफ साक्षाद्रावणो बलगर्वितः । उद्धरन्स्वभुजैर्दीर्घैः कैलासं गिरिमात्मनः ॥४६॥
तदागोऽसहमानस्य देवदेवस्य शूलिनः । पदाङ्गुष्ठपरिस्पन्दान्ममज्ज मृदितो भुवि ॥४७॥
बटोः केनचिदर्थेन स्वाश्रितस्य गतायुषः । त्वरयागत्य देवेन पादान्तं गमितोन्तकः ॥४८॥
स्ववाहनमविज्ञाय वृषेन्द्रं वडवानलः । सगलग्रहमानीतस्ततोऽस्त्येकोदकं जगत् ॥४९॥
अलोकविदितैस्तैस्तैर्वृत्तैरानन्दसुन्दरैः । अङ्गहारस्वसेनेदमसकृच्चालितं जगत् ॥५०॥
शान्त एव सदा सर्वमनुगृह्णाति चेच्छिवः । सर्वाणि पूरयेदेव कथं शक्तेन मोचयेत् ॥५१॥
अनादिकर्म वैचित्र्यमपि नात्र नियामकम् । कारणं खलु कर्मापि भवेदीश्वरकारितम् ॥५२॥
किमत्र बहुनोक्तेन नास्तिक्यं हेतुकारकम् । यथा ह्याशु निवर्तेत तथा कथय मारुत ॥५३॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे शिवतत्त्वप्रश्नो नाम त्रिंशोऽध्यायः ॥३०॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,४७३+५३=२१,५२६



## ॥ अथैकत्रिंशोऽध्यायः ॥

वायुरुवाच ॥
स्थाने संशयितं विप्रा भवद्भिर्हेतुचोदितैः । जिज्ञासा हि न नास्तिक्यं साधयेत्साधुबुद्धिषु ॥१॥
प्रमणमत्र वक्ष्यामि सताम्मोहनिवर्तकम् । असतां त्वन्यथाभावः प्रसादेन विना प्रभोः ॥२॥
शिवस्य परिपूर्णस्य परानुग्रहमन्तरा । न किञ्चिदपि कर्तव्यमिति साधु विनिश्चितम् ॥३॥
स्वभाव एव पर्याप्तः परानुग्रहकर्मणि । अन्यथा निस्स्वभवेन न किमप्यनुगृह्यते ॥४॥
परं सर्वमनुग्राह्यं पशुपाशात्मकं जगत् । परस्यानुग्रहार्थं तु पत्युराज्ञासमन्वयः ॥५॥
पतिराज्ञापकः सर्वमनुगृह्णाति सर्वदा । तदर्थमर्थस्वीकारे परतंत्रः कथं शिवः ॥६॥
अनुग्राह्यनपेक्षोऽस्ति न हि कश्चिदनुग्रहः । अतः स्वातन्त्र्यशब्दार्थाननपेक्षत्वलक्षणः ॥७॥
एतत्पुनरनुग्राह्यं परतंत्रं तदिष्यते । अनुग्रहादृते तस्य भुक्तिमुक्त्योरनन्वयात् ॥८॥
मूर्तात्मनोऽप्यनुग्राह्या शिवाज्ञाननिवर्तनात् । अज्ञानाधिष्ठितं शम्भोर्न किञ्चिदिह विद्यते ॥९॥
येनोपलभ्यते ऽस्माभिस्सकलेनापि निष्कलः । स मूर्त्यात्मा शिवः शैवमूर्तिरित्युपचर्यते ॥१०॥
न ह्यसौ निष्कलः साक्षाच्छिवः परमकारणम् । साकारेणानुभावेन केनाप्यनुपलक्षितः ॥११॥
प्रमाणगम्यतामात्रं तत्स्वभावोपपादकम् । न तावतात्रोपेक्षाधीरुपलक्षणमंतरा ॥१२॥
आत्मोपमोल्वणं साक्षान्मूर्तिरिव हि काचन । शिवस्य मूर्तिर्मूर्त्यात्मा परस्तस्योपलक्षणम् ॥१३॥
यथा काष्ठेष्वनारूढो न वह्निरुपलभ्यते । एवं शिवोऽपि मूर्त्यात्मन्यनारूढ इति स्थितिः ॥१४॥
यथाग्निमानयेत्युक्ते ज्वलत्काष्ठादृते स्वयम् । नाग्निरानीयते तद्वत्पूज्यो मूर्त्यात्मना शिवः ॥१५॥
अत एव हि पूजादौ मूर्त्यात्मपरिकल्पनम् । मूर्त्यात्मनि कृतं साक्षाच्छिव एव कृतं यतः ॥१६॥
लिङ्गादावपि तत्कृत्यमर्चायां च विशेषतः । तत्तन्मूर्त्यात्मभावेन शिवोऽस्माभिरुपास्यते ॥१७॥

यथानुगृह्यते सोऽपि मूर्त्यात्मा पारमेष्ठिना । तथा मूर्त्यात्मनिष्ठेन शिवेन पशवो वयम् ॥१८॥
लोकानुग्रहणायैव शिवेन परमेष्ठिना । सदा शिवादयस्सर्वे मूर्त्यात्मनोऽप्यधिष्ठिताः ॥१९॥
आत्मनामेव भोगाय मोक्षाय च विशे षतः । तत्त्वातत्त्वस्वरूपेषु मूर्त्यात्मसु शिवान्वयः ॥२०॥
भोगः कर्मविपाकात्मा सुखदुःखात्मको मतः । न च कर्म शिवोऽस्तीति तस्य भोगः किमात्मकः ॥२१॥
सर्वं शिवोऽनुगृह्णाति न निगृह्णाति किंचन । निगृह्णतां तु ये दोषाश्शिवे तेषामसंभवात् ॥२२॥
ये पुनर्निग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः । तेऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना ॥२३॥
ब्रह्माण्डस्याधिपत्यं हि श्रीकण्ठस्य न संशयः । श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडतीमधितिष्ठति ॥२४॥
सदोषा एव देवाद्या निगृहीता यथोदितम् । ततस्तेपि विपाप्मानः प्रजाश्चापि गतज्वराः ॥२५॥
निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः । अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते ॥२६॥
यत्सिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः । न स चेदीशतां कुर्याज्जगतः कथमीश्वरः ॥२७॥
ईशेच्छा च विधातृत्वं विधेराज्ञापनं परम् । आज्ञावश्यमिदं कुर्यान्न कुर्यादिति शासनम् ॥२८॥
तच्छासनानुवर्तित्वं साधुभावस्य लक्षणम् । विपरीतसमाधोः स्यान्न सर्वं तत्तु दृश्यते ॥२९॥
साधु संरक्षणीयं चेद्विनिवर्त्यमसाधु यत् । निवर्तते च सामादेरन्ते दण्डो हि साधनम् ॥३०॥
हितार्थलक्षणं चेदं दण्डान्तमनुशासनम् । अतो यद्विपरीतं तदहितं संप्रचक्षते ॥३१॥
हिते सदा निषण्णानामीश्वरस्य निदर्शनम् । स कथं दुष्यते सद्भिरसतामेव निग्रहात् ॥३२॥
अयुक्तकारिणो लोके गर्हणीयाविवेकिता । यदुद्वेजयते लोकन्तदयुक्तं प्रचक्षते ॥३३॥
सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वकः । न हि द्वेष्टि पिता पुत्रं यो निगृह्याति शिक्षयेत् ॥३४॥
माध्यस्थेनापि निग्राह्यान्यो निगृह्णाति मार्गतः । तस्याप्यवश्यं यत्किंचिन्नैर्घृण्यमनुवर्तते ॥३५॥
अन्यथा न हिनस्त्येव सदोषानप्यसौ परान् । हिनस्ति चायमप्यज्ञान्परं माध्यस्थ्यमाचरन् ॥३६॥
तस्माद्दुःखात्मिकां हिंसां कुर्वाणो यः सनिर्घृणः । इति निर्बंधयन्त्येके नियमो नेति चापरे ॥३७॥
निदानज्ञस्य भिषजो रुग्णो हिंसां प्रयुंजतः । न किञ्चिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका ॥३८॥
घृणापि न गुणायैव हिंस्रेषु प्रतियोगिषु । तादृशेषु घृणी भ्रान्त्या घृणान्तरितनिर्घृणः ॥३९॥
उपेक्षापीह दोषाह रक्ष्येषु प्रतियोगिषु । शक्तौ सत्यामुपेक्षातो रक्ष्यस्सद्यो विपद्यते ॥४०॥
सर्पस्याष्टस्यगतम्पश्यन्यस्तु रक्ष्यमुपेक्षते । दोषाभासान्समुत्प्रेक्ष्य फलतः सोऽपि निर्घृणः ॥४१॥
तस्माद् घृणा गुणायैव सर्वथेति न संमतम् । संमतं प्राप्तकामित्वं सर्वं त्वन्यदसम्मतम् ॥४२॥
मूर्त्यात्मस्वपि रागाद्या दोषाः सन्त्येव वस्तुतः । तथापि तेषामेवैते न शिवस्य तु सर्वथा ॥४३॥
अग्नावपि समाविष्टं ताम्रं खलु सकालिकम् । इति नाग्निरसौ दुष्येत्ताम्रसंसर्गकारणात् ॥४४॥
नाग्नेरशुचिसंसर्गादशुचित्वमपेक्षते । अशुचेस्त्वग्निसंयोगाच्छुचित्वमपि जायते ॥४५॥
एवं शोध्यात्मसंसर्गान्न ह्यशुद्धः शिवो भवेत् । शिवसंसर्गतस्त्वेष शोध्यात्मैव हि शुध्यति ॥४६॥
अयस्यग्नौ समाविष्टे दाहोऽग्नेरेव नायसः । मूर्तात्मन्येवमैश्वर्यमीश्वरस्यैव नात्मनाम् ॥४७॥
न हि काष्ठं ज्वलत्यूर्ध्वमग्निरेव ज्वलत्यसौ । काष्ठस्याङ्गारता नाग्नेरे वमत्रापि योज्यताम् ॥४८॥
अत एव जगत्यस्मिन्काष्ठपाषाणमृत्स्वपि । शिवावेशवशादेव शिवत्वमुपचर्यते ॥४९॥
मैत्र्यादयो गुणा गौणास्तस्मात्ते भिन्नवृत्तयः । तैर्गुणैरुपरक्तानां दोषाय च गुणाय च ॥५०॥
यत्तु गौणमगौणं च तत्सर्वमनुगृह्णतः । न गुणाय न दोषाय शिवस्य गुणवृत्तयः ॥५१॥
न चानुग्रहशब्दार्थं गौणमाहुर्विपश्चितः । संसारमोचनं किं तु शैवमाज्ञामयं हितम् ॥५२॥
हितं तदाज्ञाकरणं यद्धितं तदनुग्रहः । सर्वं हिते नियुञ्जावः सर्वानुग्रहकारकः ॥५३॥
यस्तूपकारशब्दार्थस्तमप्याहुरनुग्रहम् । तस्यापि हितरूपत्वाच्छिवः सर्वोपकारकः ॥५४॥
हिते सदा नियुक्तं तु सर्वं चिदचिदात्मकम् । स्वभावप्रतिबन्धं तत्समं न लभते हितम् ॥५५॥
यथा विकासयत्येव रविः पद्मानि भानुभिः । समं न विकसन्त्येव स्वस्वभावानुरोधतः ॥५६॥
स्वभावोऽपि हि भावानां भाविनोऽर्थस्य कारणम् । न हि स्वभावो नश्यन्तमर्थं कर्तृषु साधयेत् ॥५७॥
सुवर्णमेव नाङ्गारं द्रावयत्यग्निसंगमः । एवं पक्वमलानेव मोचयेन्न शिवपरान् ॥५८॥

यद्यथा भवितुं योग्यं तत्तथा न भवेत्स्वयम् । विना भावनया कर्ता स्वतन्त्रस्सन्ततो भवेत् ॥५९॥
स्वभावविमलो यद्वत्सर्वानुग्राहकश्शिवः । स्वभावमलिनास्तद्वदात्मनो जीवसंज्ञिताः ॥६०॥
अन्यथा संसरन्त्येते नियमान्न शिवः कथम् । कर्ममायानुबन्धोस्य संसारः कथ्यते बुधैः ॥६१॥
अनुबन्धोऽयमस्यैव न शिवस्येति हेतुमान् । स हेतुरात्मनामेव निजो नागन्तुको मलः ॥६२॥
आगन्तुकत्वे कस्यापि भाव्यं केनापि हेतुना । योऽयं हेतुरसावेकस्त्वविचित्रस्वभावतः ॥६३॥
आत्मतायाः समत्वेऽपि बद्धा मुक्ताः परे यतः । बद्धेष्वेव पुनः केचिल्लयभोगाधिकारतः ॥६४॥
ज्ञानैश्वर्यादिवैषम्यं भजन्ते सो त्तराधराः । केचिन्मूर्त्यात्मतां यान्ति केचिदासन्नगोचराः ॥६५॥
मूर्त्यात्मसु शिवाः केचिदध्वनां मूर्धसु स्थिताः । मध्ये महेश्वरा रुद्रास्त्वर्वाचीनपदे स्थिताः ॥६६॥
आसन्नेऽपि च मायायाः परस्मात्कारणात्त्रयम् । तत्राप्यात्मा स्थितोऽधस्तादन्तरात्मा च मध्यतः ॥६७॥
परस्तात्परमात्मेति ब्रह्मविष्णुमहेश्वराः । वर्तन्ते वसवः केचित्परमात्मपदाश्रयाः ॥६८॥
अन्तरात्मपदे केचित्केचिदात्मपदे तथा । शान्त्यतीतपदे शैवाः शान्ते माहेश्वरे ततः ॥६९॥
विद्यायान्तु यथा रौद्राः प्रतिष्ठायां तु वैष्णवाः । निवृत्तौ च तथात्मानो ब्रह्मा ब्रह्माङ्गयोनयः ॥७०॥
देवयोन्यष्टकं मुख्यं मानुष्यमथ मध्यमम् । पक्ष्यादयोऽधमाः पञ्चयोनयस्ताश्चतुर्दश ॥७१॥
उत्तराधरभावोऽपि ज्ञेयस्संसारिणो मलः । यथामभावो मुक्तस्य पूर्वं पश्चात्तु पक्वता ॥७२॥
मलोऽप्यामश्च पक्वश्च भवेत्संसारकारणम् । आमे त्वधरता पुंसां पक्वे तूत्तरता क्रमात् ॥७३॥
पश्चात्मानस्त्रिधाभिन्ना एकद्वित्रिमलाः क्रमात् । अत्रोत्तरा एकमला द्विमला मध्यमा मताः ॥७४॥
त्रिमलास्त्वधमा ज्ञेया यथोत्तरमधिष्ठिताः । त्रिमलानधितिष्ठंति द्विमलैकमलाः क्रमात् ॥७५॥
इत्थमौपाधिको भेदो विश्वस्य परिकल्पितः । एकद्वित्रिमलान्सर्वाञ्छिव एकोऽधितिष्ठति ॥७६॥
अशिवात्मकमप्येतच्छिवेनाधिष्ठितं यथा । अरुद्रात्मकमित्येवं रुद्रैर्जगदधिष्ठितम् ॥७७॥
अण्डान्ता हि महाभूमिश्शतरुद्राद्यधिष्ठिता । मायान्तमन्तरिक्षं तु ह्यमरेशादिभिः क्रमात् ॥७८॥
अङ्गुष्ठमात्रपर्यन्तैस्समंतात्सन्ततं ततम् । महामायावसाना द्यौर्वा य्वाद्यैर्भुवनाधिपैः ॥७९॥
अनाश्रितान्तैरध्वान्तर्वर्तिभिस्समधिष्ठिताः । ते हि साक्षाद्विविषदस्त्वन्तरिक्षासदस्तथा ॥८०॥
पृथिवीपद इत्येवं देवा देवव्रतैः स्तुता । एवन्त्रिभिर्मलैरामैः पक्वैरेव पृथक्पृथक् ॥८१॥
निदानभूतैस्संसाररोगः पुंसां प्रवर्तते । अस्य रोगस्य भैषज्यं ज्ञानमेव न चापरम् ॥८२॥
भिषगाज्ञापकः शंभुश्शिवः परमकारणम् । अदुःखेनाऽपि शक्तोऽसौ पशून्मोचयितुं शिवः ॥८३॥
कथं दुःखं करोतीति नात्र कार्या विचारणा । दुःखमेव हि सर्वोऽपि संसार इति निश्चितम् ॥८४॥
कथं दुःखमदुःखं स्यात्स्वभावो ह्यविपर्ययः । न हि रोगी ह्यरोगी स्याद्भिषग्भैषज्यकारणात् ॥८५॥
रोगार्तं तु भिषग्रोगाद्भैषजैस्सुखमुद्धरेत् । एवं स्वभावमलिनान्स्वभावाद्दुःखिनः पशून् ॥८६॥
स्वाज्ञौषधविधानेन दुःखान्मोचयते शिवः । न भिषक्कारणं रोगे शिवः संसारकारणम् ॥८७॥
इत्येतदपि वैषम्यं न दोषायास्य कल्पते । दुःखे स्वभावसंसिद्धे कथन्तत्कारणं शिवः ॥८८॥
स्वाभाविको मलः पुंसां स हि संसारयत्यमून् । संसारकारणं यत्तु मलं मायाद्यचेतनम् ॥८९॥
तत्स्वयं न प्रवर्तेत शिवसान्निध्यमन्तरा । यथा मणिरयस्कान्तस्सान्निध्यादुपकारकः ॥९०॥
अयसश्चलतस्तद्वच्छिवोऽप्यस्येति सूरयः । न निवर्तयितुं शक्यं सान्निध्यं सदकारणम् ॥९१॥
अधिष्ठाता ततो नित्यमज्ञातो जगतश्शिवः । न शिवेन विना किञ्चित्प्रवृत्तमिह विद्यते ॥९२॥
तत्प्रेरितमिदं सर्वं तथापि न स मुह्यति । शक्तिराज्ञात्मिका तस्य नियन्त्री विश्वतोमुखी ॥९३॥
तया ततमिदं शश्वत्तथापि स न दुष्यति । अनिदं प्रथमं सर्वमीशितव्यं स ईश्वरः ॥९४॥
ईशनाच्च तदीयाज्ञा तथापि स न दुष्यति । योऽन्यथा मन्यते मोहात्स विनष्यति दुर्मतिः ॥९५॥
तच्छक्तिवैभवादेव तथापि स न दुष्यति । एतस्मिन्नन्तरे व्योम्नः श्रुताः वागरीरिणी ॥९६॥
सत्यमोममृतं सौम्यमित्याविरभवत्स्फुटम् । ततो हृष्टतराः सर्वे विनष्टाशेषसंशयाः ॥९७॥
मुनयो विस्मयाविष्टाः प्रेणेमुः पवनं प्रभुम् । तथा विगतसन्देहान्कृत्वापि पवनो मुनीन् ॥
नैते प्रतिष्ठितज्ञाना इति मत्वैवमब्रवीत् ॥९८॥

वायुरुवाच ॥
परोक्षमपरोक्षं च द्विविधं ज्ञानमिष्यते । परोक्षमस्थिरं प्राहुरपरोक्षं तु सुस्थिरम् ॥९९॥
हेतूपदेशगम्यं यत्तत्परोक्षं प्रचक्षते । अपरोक्षं पुनः श्रेष्ठादनुष्ठानाद्भविष्यति ॥१००॥
नापरोक्षादृते मोक्ष इति कृत्वा विनिश्चयम् । श्रेष्ठानुष्ठानसिद्ध्यर्थं प्रयतध्वमतन्द्रिताः ॥१०१॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे ज्ञानोपदेशो नामैकत्रिंशोऽध्यायः ॥३१॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,५२६+१०१=२१,६२७



## ॥ अथ द्वात्रिंशोऽध्यायः ॥

ऋषय ऊचुः ॥
किं तच्छ्रेष्ठमनुष्ठानं मोक्षो येनपरोक्षितः । तत्तस्य साधनं चाद्य वक्तुमर्हसि मारुत ॥१॥
वायुरुवाच ॥
शैवो हि परमो धर्मः श्रेष्ठानुष्ठानशब्दितः । यत्रापरोक्षो लक्ष्येत साक्षान्मोक्षप्रदः शिवः ॥२॥
स तु पञ्चविधो ज्ञेयः पञ्चभिः पर्वभिः क्रमात् । क्रियातपोजपध्यानज्ञानात्मभिरनुत्तरैः ॥३॥
तैरेव सोत्तरैस्सिद्धो धर्मस्तु परमो मतः । परोक्षमपरोक्षं च ज्ञानं यत्र च मोक्षदम् ॥४॥
परमोऽपरमश्चोभौ धर्मौ हि श्रुतिचोदितौ । धर्मशब्दाभिधेयेर्थे प्रमाणं श्रुतिरेव नः ॥५॥
परमो योगपर्यन्तो धर्मः श्रुतिशिरोगतः । धर्मस्त्वपरमस्तद्वदधः श्रुतिमुखोत्थितः ॥६॥
अपश्वात्माधिकारत्वाद्यो धरमः परमो मतः । साधारणस्ततोऽन्यस्तु सर्वेषामधिकारतः ॥७॥
स चायं परमो धर्मः परधर्मस्य साधनम् । धर्मशास्त्रादिभिस्सम्यक्साङ्ग एवोपबृंहितः ॥८॥
शैवो यः परमो धर्मः श्रेष्ठानुष्ठानशब्दितः । इतिहासपुराणाभ्यां कथंचिदुपबृंहितः ॥९॥
शैवागमैस्तु संपन्नः सहाङ्गोपांविस्तरः । तत्संस्काराधिकारैश्च सम्यगेवोपबृंहितः ॥१०॥
शैवागमो हि द्विविधः श्रौतोऽश्रौतश्च संस्कृतः । श्रुतिसारमयः श्रौतस्स्वतंत्र इतरो मतः ॥११॥
स्वतंत्रो दशधा पूर्वं तथाष्टादशधा पुनः । कामिकादिसमाख्याभिस्सिद्धः सिद्धान्तसंज्ञितः ॥१२॥
श्रुतिसारमयो यस्तु शतकोटिप्रविस्तरः । परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥१३॥
युगावर्तेषु शिष्येत योगाचार्यस्वरूपिणा । तत्रतत्रावतीर्णेन शिवेनैव प्रवर्त्यते ॥१४॥
संक्षिप्यास्य प्रवक्तारश्चत्वारः परमर्षय । रुरुर्दधीचोऽगस्त्यश्च उपमन्युर्महायशाः ॥१५॥
ते च पाशुपता ज्ञेयास्संहितानां प्रवर्तकाः । तत्सन्ततीया गुरवः शतशोऽथ सहस्रशः ॥१६॥
तत्रोक्तः परमो धर्मश्चर्याद्यात्मा चतुर्विधः । तेषु पाशुपतो योगः शिवं प्रत्यक्षयेद्दृढम् ॥१७॥
तस्माच्छ्रेष्ठमनुष्ठानं योगः पाशुपतो मतः । तत्राप्युपायको युक्तो ब्रह्मणा स तु कथ्यते ॥१८॥
नामाष्टकमयो योगश्शिवेन परिकल्पितः । तेन योगेन सहसा शैवी प्रज्ञा प्रजायते ॥१९॥
प्रज्ञया परमं ज्ञानमचिराल्लभते स्थिरम् । प्रसीदति शिवस्तस्य यस्य ज्ञानं प्रतिष्ठितम् ॥२०॥
प्रसादात्परमो योगो यः शिवं चापरोक्षयेत् । शिवापरोक्षात्संसारकारणेन वियुज्यते ॥२१॥
ततः स्यान्मुक्तसंसारो मुक्तः शिवसमो भवेत् । ब्रह्मप्रोक्त इत्युपायः स एव पृथगुच्यते ॥२२॥
शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः ॥२३॥
नामाष्टकमिदं मुख्यं शिवस्य प्रतिपादकम् । आद्यन्तु पञ्चकं ज्ञेयं शान्त्यतीताद्यनुक्रमात् ॥२४॥
संज्ञा सदा शिवादीनां पञ्चोपाधिपरिग्रहात् । उपाधिविनिवृत्तौ तु यथास्वं विनिवर्तते ॥२५॥
पदमेव हि तन्नित्यमनित्याः पदिनः स्मृताः । पदानां प्रतिकृत्तौ तु मुच्यन्ते पदिनो यतः ॥२६॥
परिवृत्त्यन्तरे भूयस्तत्पदप्राप्तिरुच्यते । आत्मान्तराभिधानं स्याद्यदाद्यं नाम पञ्चकम् ॥२७॥
अन्यत्तु त्रितयं नाम्नामुपादानादियोगतः । त्रिविधोपाधिवचनाच्छिव एवानुवर्तते ॥२८॥
अनादिमलसंश्लेषः प्रागभावात्स्वभावतः । अत्यन्तं परिशुद्धात्मेत्यतोऽयं शिव उच्यते ॥२९॥
अथवाशेषकल्याणगुणैकधन ईश्वरः । शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थवादिभिः ॥३०॥

त्रयोविंशतितत्त्वेभ्यः प्रकृतिर्हि परा मता । प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम् ॥३१॥
यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः । वेदैकवेद्ययाथात्म्याद्वेदान्ते च प्रतिष्ठितः ॥३२॥
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः । तदधीनप्रवृत्तित्वात्प्रकृतेः पुरुषस्य च ॥३३॥
अथवा त्रिगुणं तत्त्वमुपेयमिदमव्ययम् । मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥३४॥
मायाविक्षोभकोऽनन्तो महेश्वरसमन्वयात् । कालात्मा परमात्मादिः स्थूलः सूक्ष्मः प्रकीर्तितः ॥३५॥
रुद्दुःखं दुःखहेतुर्वा तद्रावयति नः प्रभुः । रुद्र इत्युच्यते सद्भिः शिवः परमकारणम् ॥३६॥
तत्त्वादिभूतपर्यन्तं शरीरादिष्वतन्द्रितः । व्याप्याधितिष्ठति शिवस्ततो रुद्र इतस्ततः ॥३७॥
जगतः पितृभूतानां शिवो मूर्त्यात्मनामपि । पितृभावेन सर्वेषां पितामह उदीरितः ॥३८॥
निदानज्ञो यथा वैद्यो रोगस्य विनिवर्तकः । उपायैर्भेषजैस्तद्वल्लयभोगाधिकारतः ॥३९॥
संसारस्येश्वरो नित्यं समूलस्य निवर्तकः । संसारवैद्य इत्युक्तः सर्वतत्त्वार्थवेदिभिः ॥४०॥
दशार्थज्ञानसिद्ध्यर्थमिन्द्रियेष्वेषु सत्स्वपि । त्रिकालभाविनो भावान्स्थूलान्सूक्ष्मानशेषतः ॥४१॥
अणवो नैव जानन्ति माययैव मलावृताः । असत्स्वपि च सर्वेषु सर्वार्थज्ञानहेतुषु ॥४२॥
यद्यथावस्थितं वस्तु तत्तथैव सदा शिवः । अयत्नेनैव जानाति तस्मात्सर्वज्ञ उच्यते ॥४३॥
सर्वात्मा परमैरेभिर्गुणैर्नित्यसमन्वयात् । स्वस्मात्परात्मविरहात्परमात्मा शिवः स्वयम् ॥४४॥
नामाष्टकमिदं चैव लब्ध्वाचार्यप्रसादतः । निवृत्त्यादिकलाग्रन्थिं शिवाद्यैः पञ्चनामभिः ॥४५॥
यथास्वं क्रमशश्छित्वा शोधयित्वा यथागुणम् । गुणितैरेव सोद्घातैरनिरुद्धैरथापि वा ॥४६॥
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रसमन्विताम् । छित्त्वा पर्यष्टकाकारं स्वात्मानं च सुषुम्णया ॥४७॥
द्वादशान्तःस्थितस्येन्दोर्नीत्वोपरि शिवौजसि । सं हृत्यं वदनं पश्चाद्यथासंस्करणं लयात् ॥४८॥
शाक्तेनामृतवर्षेण संसिक्तायां तनौ पुनः । अवतार्य स्वमात्मानममृतात्माकृतिं हृदि ॥४९॥
द्वादशान्तःस्थितस्येन्दोः परस्ताच्छ्वेतपंकजे । समासीनं महादेवं शंकरम्भक्तवत्सलम् ॥५०॥
अर्धनारीश्वरं देवं निर्मलं मधुराकृतिम् । शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् ॥५१॥
ध्यात्वा हि मानसे देवं स्वस्थचित्तोऽथ मानवः । शिवनामाष्टकेनैव भावपुष्पैस्समर्चयेत् ॥५२॥
अभ्यर्चनान्ते तु पुनः प्राणानायम्य मानवः । सम्यक्चित्तं समाधाय शार्वं नामाष्टकं जपेत् ॥५३॥
नाभौ चाष्टाहुतीर्हुत्वा पूर्णाहुत्या नमस्ततः । अष्टपुष्पप्रदानेन कृत्वाभ्यर्चनमंतिमम् ॥५४॥
निवेदयेत्स्वमात्मानं चुलुकोदकवत्मर्मना । एवं कृत्वा चिरादेव ज्ञानं पाशुपतं शुभम् ॥५५॥
लभते तत्प्रतिष्ठां च वृत्तं चानुत्तमं तथा । योगं च परमं लब्ध्वा मुच्यते नात्र संशयः ॥५६॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे श्रेष्ठानुष्ठानवर्णनं नाम द्वात्रिंशोऽध्यायः ॥३२॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,६२७+५६=२१,६८३



## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

ऋषय ऊचुः ॥
भगवञ्छ्रोतुमिच्छामो व्रतं पाशुपतं परम् । ब्रह्मादयोऽपि यत्कृत्वा सर्वे पाशुपताः स्मृताः ॥१॥
वायुरुवाच ॥
रहस्यं वः प्रवक्ष्यामि सर्वपापनिकृन्तनम् । व्रतं पाशुपतं श्रौतमथर्वशिरसि श्रुतम् ॥२॥
कालश्चैत्री पौर्णमासी देशः शिवपरिग्रहः । क्षेत्रारामाद्यरण्यं वा प्रशस्तश्शुभलक्षणः ॥३॥
तत्र पूर्वं त्रयोदश्यां सुस्नातः सुकृताह्निकः । अनुज्ञाप्य स्वमाचार्यं संपूज्य प्रणिपत्य च ॥४॥
पूजां वैशेषिकीं कृत्वा शुक्लांबरधरः स्वयम् । शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥५॥
दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च । प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥६॥
ध्यात्वा देवं च देवीं च तद्विज्ञापनवर्त्मना । व्रतमेतत्करोमीति भवेत्संकल्प्य दीक्षितः ॥७॥
यावच्छरीरपातं वा द्वादशाब्दमथापि वा । तदर्धं वा तदर्धं वा मासद्वादशकं तु वा ॥८॥

तदर्धं वा तदर्धं वा मासमेकमथापि वा । दिनद्वादशकं वाऽथ दिनषट्कमथापि वा ॥९॥
तदर्धं दिनमेकं वा व्रतसंकल्पनावधि । अग्निमाधाय विधिवद्विरजाहोमकारणात् ॥१०॥
हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् । पूर्णामापूर्य तां भूयस्तत्त्वानां शुद्धिमुद्दिशन् ॥११॥
जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः । तत्त्वान्येतानि मद्देहे शुद्ध्यंतामित्यनुस्मरन् ॥१२॥
पञ्चभूतानि तन्मात्राः पञ्चकर्मेन्द्रियाणि च । ज्ञानकर्मविभेदेन पञ्चकर्मविभागशः ॥१३॥
त्वगादिधातवस्सप्त पञ्च प्राणादिवायवः । मनोबुद्धिरहं ख्यातिर्गुणाः प्रकृतिपूरुषौ ॥१४॥
रागो विद्याकले चैव नियतिः काल एव च । माया च शुद्धिविद्या च महेश्वरसदा शिवौ ॥१५॥
शक्तिश्च शिवतत्त्वं च तत्त्वानि क्रमशो विदुः । मन्त्रैस्तु विरजैर्हुत्वा होतासौ विरजा भवेत् ॥१६॥
शिवानुग्रहमासाद्य ज्ञानवान्स हि जायते । अथ गोमयमादाय पिण्डीकृत्याभिमन्त्र्य च ॥१७॥
विन्यस्याग्नौ च सम्प्रोक्ष्य दिने तस्मिन्हविष्यभुक् । प्रभाते तु चतुर्दश्यां कृत्वा सर्वं पुरोदितम् ॥१८॥
दिने तस्मिन्निराहारः कालं शेषं समापयेत् । प्रातः पर्वणि चाप्येवं कृत्वा होमा वसानतः ॥१९॥
उपसं हृत्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः । ततश्च जटिलो मुण्डी शिखैकजट एव वा ॥२०॥
भूत्वा स्नात्वा ततो वीतलज्जश्चेत्स्याद्दिगम्बरः । अपि काषायवसनश्चर्मचीराम्बरोऽथ वा ॥२१॥
एकाम्बरो वल्कली वा भवेद्दण्डी च मेखली । प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम् ॥२२॥
संकुलीकृत्य तद्भस्म विरजानलसंभवम् । अग्निरित्यादिभिर्मंत्रैः षड्भिराथर्वणैः क्रमात् ॥२३॥
विभृज्याङ्गानि मूर्धादिचरणान्तानि तैस्स्पृशेत् । ततस्तेन क्रमेणैव समुद्धृत्य च भस्मना ॥२४॥
सर्वाङ्गोद्धूलनं कुर्यात्प्रणवेन शिवेन वा । ततस्त्रिपुण्ड्रं रचयेत्त्रियायुषसमाह्वयम् ॥२५॥
शिवभावं समागम्य शिवयोगमथाचरेत् । कुर्यात्त्रिसन्ध्यमप्येवमेतत्पाशुपतं व्रतम् ॥२६॥
भुक्तिमुक्तिप्रदं चैतत्पशुत्वं विनिवर्तयेत् । तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम् ॥२७॥
पूजनीयो महादेवो लिङ्गमूर्तिस्सनातनः । पद्ममष्टदलं हैमं नवरत्नैरलंकृतम् ॥२८॥
कर्णिकाकेशरोपेतमासनं परिकल्पयेत् । विभवे तदभावे तु रक्तं सितमथापि वा ॥२९॥
पद्मं तस्याप्यभावे तु केवलं भावनामयम् । तत्पद्मकर्णिकामध्ये कृत्वा लिङ्गं कनीयसम् ॥३०॥
स्फाटिकं पीठिकोपेतं पूजयेद्विधिवत्क्रमात् । प्रतिष्ठाप्य विधानेन तल्लिंगं कृतशोधनम् ॥३१॥
परिकल्प्यासनं मूर्तिं पञ्चवक्त्रप्रकारतः । पञ्चगव्यादिभिः पूर्णैर्यथाविभवसंभृतैः ॥३२॥
स्नापयेत्कलशैः पूर्णैरष्टापदसमुद्भवैः । गन्धद्रव्यैस्सकर्पूरैश्चन्दनाद्यैस्सकुंकुमैः ॥३३॥
सवेदिकं समालिप्य लिङ्गं भूषणभूषितम् । बिल्वपत्रैश्च पद्मैश्च रक्तैः श्वेतैस्तथोत्पलैः ॥३४॥
नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैस्सुगन्धिभिः । पुण्यैः प्रशस्तैः पत्रैश्च चित्रैर्दूर्वाक्षतादिभिः ॥३५॥
समभ्यर्च्य यथालाभं महापूजाविधानतः । धूपं दीपं तथा चापि नैवेद्यं च समादिशेत् ॥३६॥
निवेदयित्वा विभवे कल्याणं च समाचरेत् । इष्टानि च विशिष्टानि न्यायेनोपार्जितानि च ॥३७॥
सर्वद्रव्याणि देयानि व्रते तस्मिन्विशेषतः । श्रीपत्रोत्पलपद्मानां संख्या साहस्रिकी मता ॥३८॥
प्रत्येकमपरा संख्या शतमष्टोत्तरं द्विजाः । तत्रापि च विशेषेण न त्यजेद्बिल्वपत्रकम् ॥३९॥
हैममेकं परं प्राहुः पद्मं पद्मसहस्रकात् । नीलोत्पलादिष्वप्येतत्समानं बिल्बपत्रकैः ॥४०॥
पुष्पान्तरे न नियमो यथालाभं निवेदयेत् । अष्टाङ्गमर्घ्यमुत्कृष्टं धूपालेपौ विशेषतः ॥४१॥
चन्दनं वामदेवाख्ये हरितालं च पौरुषे । ईशाने भसितं केचिदालेपनमितीदृशाम् ॥४२॥
न धूपमिति मन्यन्ते धूपान्तरविधानतः । सितागुरुमघोराख्ये मुखे कृष्णागुरुं पुनः ॥४३॥
पौरुषे गुग्गुलं सव्ये सौम्ये सौगन्धिकं मुखे । ईशानेऽपि ह्युशीरादि देयाद्धूपं विशेषतः ॥४४॥
शर्करामधुकर्पूरकपिलाघृतसंयुतम् । चंदनागुरुकाष्ठाद्यं सामान्यं संप्रचक्षते ॥४५॥
कर्पूरवर्तिराज्याढ्या देया दीपावलिस्ततः । अर्घ्यमाचमनं देयं प्रतिवक्त्रमतः परम् ॥४६॥
प्रथमावरणे पूज्यो क्रमाद्धेरम्बषण्मुखौ । ब्रह्माङ्गानि ततश्चैव प्रथमावरणेर्चिते ॥४७॥
द्वितीयावरणे पूज्या विघ्नेशाश्चक्रवर्तिनः । तृतीयावरणे पूज्या भवाद्या अष्टमूर्तयः ॥४८॥
महादेवादयस्तत्र तथैकादशमूर्तयः । चतुर्थावरणे पूज्याः सर्व एव गणेश्वराः ॥४९॥

बहिरेव तु पद्मस्य पञ्चमावरणे क्रमात् । दशदिक्पतयः पूज्याः सास्त्राः सानुचरास्तथा ॥५०॥
ब्रह्मणो मानसाः पुत्राः सर्वेऽपि ज्योतिषां गणाः । सर्वा देव्यश्च देवाश्च सर्वे सर्वे च खेचराः ॥५१॥
पातालवासिनश्चान्ये सर्वे मुनिगणा अपि । योगिनो हि सखास्सर्वे पतंगा मातरस्तथा ॥५२॥
क्षेत्रपालाश्च सगणाः सर्वं चैतच्चराचरम् । पूजनीयं शिवप्रीत्या मत्त्वा शंभुविभूतिमत् ॥५३॥
अथावरणपूजान्ते संपूज्य परमेश्वरम् । साज्यं सव्यं जनं हृद्यं हविर्भक्त्या निवेदयेत् ॥५४॥
मुखवासादिकं दत्त्वा ताम्बूलं सोपदंशकम् । अलंकृत्य च भूयोऽपि नानापुष्पविभूषणैः ॥५५॥
नीराजनान्ते विस्तीर्य पूजाशेषं समापयेत् । चषकं सोपकारं च शयनं च समर्पयेत् ॥५६॥
चन्द्रसंकाशहारं च शयनीयं समर्पयेत् । आद्यं नृपोचितं हृद्यं तत्सर्वमनुरूपतः ॥५७॥
कृत्वा च कारयित्वा च हित्वा च प्रतिपूजनम् । स्तोत्रं व्यपोहनं जप्त्वा विद्यां पञ्चाक्षरीं जपेत् ॥५८॥
प्रदक्षिणां प्रणामं च कृत्वात्मानं समर्पयेत् । ततः पुरस्ताद्देवस्य गुरुविप्रौ च पूजयेत् ॥५९॥
दत्त्वार्घ्यमष्टौ पुष्पाणि देवमुद्वास्य लिङ्गतः । अग्नेश्चाग्निं सुसंयम्य ह्युद्वास्य च तमप्युत ॥६०॥
प्रत्यहं च जनस्त्वेवं कुर्यात्सेवां पुरोदिताम् । ततस्तत्साम्बुजं लिङ्गं सर्वोपकरणान्वितम् ॥६१॥
समर्पयेत्स्वगुरवे स्थापयेद्वा शिवालये । संपूज्य च गुरून्विप्रान्व्रतिनश्च विशेषतः ॥६२॥
भक्तान्द्विजांश्च शक्तश्चेद्दीनानाथांश्च तोषयेत् । स्वयं चानशने शक्तः फलमूलाशनेऽथ वा ॥६३॥
पयोव्रतो वा भिक्षाशी भवेदेकाशनस्तथा । नक्तं युक्ताशनो नित्यं भूशय्यानिरतः शुचिः ॥६४॥
भस्मशायी तृणेशायी चीराजिनधृतोऽथवा । ब्रह्मचर्यव्रतो नित्यं व्रतमेतत्समाचरेत् ॥६५॥
अर्कवारे तथार्द्रायां पञ्चदश्यां च पक्षयोः । अष्टम्यां च चतुर्दश्यां शक्तस्तूपवसेदपि ॥६६॥
पाखण्डिपतितोदक्यास्सूतकान्त्यजपूर्वकान् । वर्जयेत्सर्वयत्नेन मनसा कर्मणा गिरा ॥६७॥
क्षमदानदयासत्याहिंसाशीलः सदा भवेत् । सन्तुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा ॥६८॥
कुर्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा । पूजां वैशेषिकीं चैव मनसा वचसा गिरा ॥६९॥
बहुनात्र किमुक्तेन नाचरेद शिवं व्रती । प्रमादात्तु तथाचारे निरूप्य गुरुलाघवे ॥७०॥
उचितां निष्कृतिं कुर्यात्पूजाहोमजपादिभिः । आसमाप्तेर्व्रतस्यैवमाचरेन्न प्रमादतः ॥७१॥
गोदानं च वृषोत्सर्गं कुर्यात्पूजां च संपदा । भक्तश्च शिवप्रीत्यर्थं सर्वकामविवर्जितः ॥७२॥
सामान्यमेतत्कथितं व्रतस्यास्य समासतः । प्रतिमासं विशेषं च प्रवदामि यथाश्रुतम् ॥७३॥
वैशाखे वज्रलिङ्गं तु ज्येष्ठे मारकतं शुभम् । आषाढे मौक्तिकं विद्याच्छ्रावणे नीलनिर्मितम् ॥७४॥
मासे भाद्रपदे चैव पद्मरागमयं परम् । आश्विने मासि विद्याद्वै लिङ्गं गोमेदकं वरम् ॥७५॥
कार्तिक्यां वैद्रुमं लिङ्गं वैदूर्यं मार्गशीर्षके । पुष्परागमयं पौषे माघे द्युमणिजन्तथा ॥७६॥
फाल्गुणे चन्द्रकान्तोत्थं चैत्रे तद्व्यत्ययोऽथवा । सर्वमासेषु रत्नानामलाभे हैममेव वा ॥७७॥
हैमाभावे राजतं वा ताम्रजं शैलजन्तथा । मृन्मयं वा यथालाभं जातुषं चान्यदेव वा ॥७८॥
सर्वगन्धमयं वाथ लिङ्गं कुर्याद्यथारुचि । व्रतावसानसमये समाचरितनित्यकः ॥७९॥
कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथा पुरा । संपूज्य च तथाचार्यं व्रतिनश्च विशेषतः ॥८०॥
देशिकेनाप्यनुज्ञातः प्राङ्मुखो वाप्युदङ्मुखः । दर्भासनो दर्भपाणिः प्राणापानौ नियम्य च ॥८१॥
जपित्वा शक्तितो मूलं ध्यात्वा साम्बं त्रियम्बकम् । अनुज्ञाप्य यथापूर्वं नमस्कृत्य कृताञ्जलिः ॥८२॥
समुत्सृजामि भगवन्व्रतमेतत्त्वदाज्ञया । इत्युक्त्वा लिङ्गमूलस्थान्दर्भानुत्तरतस्त्यजेत् ॥८३॥
ततो दण्डजटाचीरमेखला अपि चोत्सृजेत् । पुनराचम्य विधिवत्पञ्चाक्षारमुदीरयेत् ॥८४॥
यः कृत्वात्यन्तिकीं दीक्षामादेहान्तमनाकुलः । व्रतमेतत्प्रकुर्वीत स तु वै नैष्ठिकः स्मृतः ॥८५॥
सोऽत्याश्रमी च विज्ञेयो महापाशुपतस्तथा । स एव तप्तां श्रेष्ठ स एव च महाव्रती ॥८६॥
न तेन सदृशः कश्चित्कृतकृत्यो मुमुक्षुषु । यो यतिर्नैष्ठिको जातस्तमाहुर्नैष्ठिकोत्तमम् ॥८७॥
योऽन्वहं द्वादशाहं वा व्रतमेतत्समाचरेत् । सोऽपि नैष्ठिकतुल्यः स्यात्तीव्रव्रतसमन्वयात् ॥८८॥
घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणः । द्वित्रैकदिवसं वापि स च कश्चन नैष्ठिकः ॥८९॥
कृत्यमित्येव निष्कामो यश्चरेद्व्रतमुत्तमम् । शिवार्पितात्मा सततं न तेन सदृशः क्वचित् ॥९०॥

भस्मच्छन्नो द्विजो विद्वान्महापातकसंभवैः । पापैस्सुदारुणैस्सद्यो मुच्यते नात्र संशयः ॥९१॥
रुद्राग्निर्यत्परं वीर्यन्तद्भस्म परिकीर्तितम् । तस्मात्सर्वेषु कालेषु वीर्यवान्भस्मसंयुतः ॥९२॥
भस्मनिष्ठस्य नश्यन्ति देषा भस्माग्निसंगमात् । भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥९३॥
भस्मना दिग्धसर्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः । भस्मस्नायी च पुरुषो भस्मनिष्ठ इति स्मृतः ॥९४॥
भूतप्रेतपिशासाश्च रोगाश्चातीव दुस्सहाः । भस्मनिष्ठस्य सान्निध्याद्विद्रवन्ति न संशयः ॥९५॥
भासनाद्भासितं प्रोक्तं भस्म कल्मषभक्षणात् । भूतिभूतिकरी चैव रक्षा रक्षाकरी परम् ॥९६॥
किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् । व्रती च भस्मना स्नातस्स्वयं देवो महेश्वरः ॥९७॥
परमास्त्रं च शैवानां भस्मैतत्पारमेश्वरम् । धौम्याग्रजस्य तपसि व्यापदो यन्निवारिताः ॥९८॥
तस्मात्सर्वप्रयत्नेन कृत्वा पाशुपतव्रतम् । धनवद्भस्म संगृह्य भस्मस्नानरतो भवेत् ॥९९॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे पशुपतिव्रतविधानवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,६८३+९९=२१,७८२



## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

ऋषय ऊचुः ॥
धौम्याग्रजेन शिशुना क्षीरार्थं हि तपः कृतम् । तस्मात्क्षीरार्णवो दत्तस्तस्मै देवेन शूलिना ॥१॥
स कथं शिशुको लेभे शिवशास्त्रप्रवक्तृताम् । कथं वा शिवसद्भावं ज्ञात्वा तपसि निष्ठितः ॥२॥
कथं च लब्धविज्ञानस्तपश्चरणपर्वणि । रुद्राग्नेर्यत्परं वीर्यं लभे भस्म स्वरक्षकम् ॥३॥
वायुरुवाच ॥
न ह्येष शिशुकः कश्चित्प्राकृतः कृतवांस्तपः । मुनिवर्यस्य तनयो व्याघ्रपादस्य धीमतः ॥४॥
जन्मान्तरेण संसिद्धः केनापि खलु हेतु ना । स्वपदप्रच्युतो दिष्ट्या प्राप्तो मुनिकुमारताम् ॥५॥
महादेवप्रसादस्य भाग्यापन्नस्य भाविनः । दुग्धाभिलाषप्रभवद्वारतामगमत्तपः ॥६॥
अतः सर्वगणेशत्वं कुमारत्वं च शाश्वतम् । सह दुग्धाब्धिना तस्मै प्रददौ शंकरः स्वयम् ॥७॥
तस्य ज्ञानागमोप्यस्य प्रसादादेव शाङ्करात् । कौमारं हि परं साक्षाज्ज्ञानं शक्तिमयं विदुः ॥८॥
शिवशास्त्रप्रवक्तृत्वमपि तस्य हि तत्कृतम् । कुमारो मुनितो लब्धज्ञानाब्धिरिव नन्दनः ॥९॥
दृष्टं तु कारणं तस्य शिवज्ञानसमन्वये । स्वमातृवचनं साक्षाच्छोकजं क्षीरकारणात् ॥१०॥
कदाचित्क्षीरमत्यल्पं पीतवान्मातुलाश्रमे । ईर्ष्यया मातुलसुतं सन्तृप्तक्षीरमुत्तमम् ॥११॥
पीत्वा स्थितं यथाकामं दृष्ट्वा वै मातुलात्मजम् । उपमन्युर्व्याघ्रपादिः प्रीत्या प्रोवाच मातरम् ॥१२॥
उपमन्युरुवाच ॥
मातर्मातर्महाभागे मम देहि तपस्विनि । गव्यं क्षीरमतिस्वादु नाल्पमुष्णं पिबाम्यहम् ॥१३॥
वायुरुवाच ॥
तच्छ्रुत्वा पुत्रवचनं तन्माता च तपस्विनी । व्याघ्रपादस्य महिषी दुःखमापत्तदा च सा ॥१४॥
उपलाल्याथ सुप्रीत्या पुत्रमालिङ्ग्य सादरम् । दुःखिता विललापाथ स्मृत्वा नैर्धन्यमात्मनः ॥१५॥
स्मृत्वास्मृत्वा पुनः क्षीरमुपमन्युस्स बालकः । देहि देहीति तामाह रुदन्भूयो महाद्युतिः ॥१६॥
तद्धठं सा परिज्ञाय द्विजपत्नी तपस्विनी । शान्तये तद्धठस्याथ शुभोपायमरीरचत् ॥१७॥
उञ्छवृत्त्यार्जितान्बीजान्स्वयं दृष्ट्वा च सा तदा । बीजपिष्टमथालोड्य तोयेन कलभाषिणी ॥१८॥
एह्येहि मम पुत्रेति सामपूर्वं ततस्सुतम् । आलिङ्ग्यादाय दुःखार्ता प्रददौ कृत्रिमं पयः ॥१९॥
पीत्वा च कृत्रिमं क्षीरं मात्रां दत्तं स बालकः । नैतत्क्षीरमिति प्राह मातरं चातिविह्वलः ॥२०॥
दुःखिता सा तदा प्राह संप्रेक्ष्याघ्राय मूर्धनि । समार्ज्य नेत्र पुत्रस्य कराभ्यां कमलायते ॥२१॥
जनन्युवाच ॥

तटिनी रत्नपूर्णास्तास्स्वर्गपातालगोचराः । भाग्यहीना न पश्यन्ति भक्तिहीनाश्च ये शिवे ॥२२॥
राज्यं स्वर्गं च मोक्षं च भोजनं क्षीरसंभवम् । न लभन्ते प्रियाण्येषां न तुष्यति यदा शिवः ॥२३॥
भवप्रसादजं सर्वं नान्यद्देवप्रसादजम् । अन्यदेवेषु निरता दुःखार्ता विभ्रमन्ति च ॥२४॥
क्षीरं तत्र कुतोऽस्माकं वने निवसतां सदा । क्व दुग्धसाधनं वत्स क्व वयं वनवासिनः ॥२५॥
कृत्स्नाभावेन दारिद्र्यान्मया ते भाग्यहीनया । मिथ्यादुग्धमिदं दत्तम्पिष्टमालोड्य वारिणा ॥२६॥
त्वं मातुलगृहे स्वल्पं पीत्वा स्वादु पयः शृतम् । ज्ञात्वा स्वादु त्वया पीतं तज्जातीयमनुस्मरन् ॥२७॥
दत्तं न पय इत्युक्त्वा रुदन् दुःखीकरोषि माम् । प्रसादेन विना शम्भो पयस्तव न विद्यते ॥२८॥
पादपंकजयोस्तस्य साम्बस्य सगणस्य च । भक्त्या समर्पितं यत्तत्कारणं सर्वसम्पदाम् ॥२९॥
अधुना वसुदोस्माभिर्महादेवो न पूजितः । सकामानां यथाकामं यथोक्तफलदायकः ॥३०॥
धनान्युद्दिश्य नास्माभिरितः प्रागर्चितः शिवः । अतो दरिद्रास्संजाता वयं तस्मान्न ते पयः ॥३१॥
पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य वै सुतः । तदेव लभ्यते नान्यद्विष्णुमुद्दिश्य वा प्रभुम् ॥३२॥
वायुरुवाच ॥
इति मातृवचः श्रुत्वा तथ्यं शोकादिसूचकम् । बालोऽप्यनुतपन्नंतः प्रगल्भमिदमब्रवीत् ॥३३॥
उपमन्युरुवाच ॥
शोकेनालमितो मातः सांबो यद्यस्ति शंकरः । त्यज शोकं महाभागे सर्वं भद्रं भविष्यति ॥३४॥
शृणु मातर्वचो मेद्य महादेवोऽस्ति चेत्क्वचित् । चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम् ॥३५॥
वायुरुवाच ॥
इति श्रुत्वा वचस्तस्य बालकस्य महामतेः । प्रत्युवाच तदा माता सुप्रसन्ना मनस्विनी ॥३६॥
मातोवाच ॥
शुभं विचारितं तात त्वया मत्प्रीतिवर्धनम् । विलंबं मा कथास्त्वं हि भज सांबं सदा शिवम् ॥३७॥
सर्वस्मादधिकोऽस्त्येव शिवः परमकारणम् । तत्कृतं हि जगत्सर्वं ब्रह्माद्यास्तस्य किंकराः ॥३८॥
तत्प्रसादकृतैश्वर्या दासास्तस्य वयं प्रभोः । तं विनान्यं न जानीमश्शंकरं लोकशंकरम् ॥३९॥
अन्यान्देवान्परित्यज्य कर्मणा मनसा गिरा । तमेव सांबं सगणं भज भावपुरस्सरम् ॥४०॥
तस्य देवाधिदेवस्य शिवस्य वरदायिनः । साक्षान्नमश्शिवायेति मन्त्रोऽयं वाचकः स्मृतः ॥४१॥
सप्तकोटिमहामन्त्राः सर्वे सप्रणवाः परे । तस्मिन्नेव विलीयन्ते पुनस्तस्माद्विनिर्गताः ॥४२॥
सप्रसादाश्च ते मन्त्राः स्वाधिकाराद्यपेक्षया । सर्वाधिकारस्त्वेकोऽयं मन्त्र एवेश्वराज्ञया ॥४३॥
यथा निकृष्टानुत्कृष्टान्सर्वानप्यात्मनः शिवः । क्षमते रक्षितुं तद्वन्मन्त्रोऽयमपि सर्वदा ॥४४॥
प्रबलश्च तथा ह्येष मन्त्रो मन्त्रान्तरादपि । सर्वरक्षाक्षमोऽप्येष नापरः कश्चिदिष्यते ॥४५॥
तस्मान्मन्त्रान्तरांस्त्यक्त्वा पञ्चाक्षरपरो भव । तस्मिञ्जिह्वान्तरगते न किञ्चिदिह दुर्लभम् ॥४६॥
अघोरास्त्रं च शैवानां रक्षाहेतुरनुत्तमम् । तच्च तत्प्रभवं मत्वा तत्परो भव नान्यथा ॥४७॥
भस्मेदन्तु मया लब्धं पितुरेव तवोत्तमम् । विरजानलसंसिद्धं महाव्यापन्निवारणम् ॥४८॥
मन्त्रं च ते मया दत्तं गृहाण मदनुज्ञया । अनेनैवाशु जप्तेन रक्षा तव भविष्यति ॥४९॥
वायुरुवाच ॥
एवं मात्रा समादिश्य शिवमस्त्वित्युदीर्य च । विसृष्टस्तद्वचो मूर्ध्नि कुर्वन्नेव तदा मुनिः ॥५०॥
तां प्रणम्यैवमुक्त्वा च तपः कर्तुं प्रचक्रमे । तमाह च तदा माता शुभं कुर्वंतु ते सुराः ॥५१॥
अनुज्ञातस्तया तत्र तपस्तेपे स दुश्चरम् । हिमवत्पर्वतं प्राप्य वायुभक्षः समाहितः ॥५२॥
अष्टेष्टकाभिः प्रसादं कृत्वा लिङ्गं च मृन्मयम् । तत्रावाह्य महादेवं सांबं सगणमव्ययम् ॥५३॥
भक्त्या पञ्चाक्षरेणैव पुत्रैः पुष्पैर्वनोद्भवैः । समभ्यर्च्य चिरं कालं चचार परमं तपः ॥५४॥
ततस्तपश्चरन्तं तं बालमेकाकिनं कृशम् । उपमन्युं द्विजवरं शिवसंसक्तमानसम् ॥५५॥
पुरा मरीचिना शप्ताः केचिन्मुनिपिशाचकाः । संपीड्य राक्षसैर्भावैस्तपसोविघ्नमाचरन् ॥५६॥
स च तैः पीड्यमानोऽपि तपः कुर्वन्कथञ्चन । सदा नमः शिवायेति क्रोशति स्मार्तनादवत् ॥५७॥

तन्नादश्रवणादेव तपसो विघ्नकारिणः । ते तं बालं समुत्सृज्य मुनयस्समुपाचरन् ॥५८॥
तपसा तस्य विप्रस्य चोपमन्योर्महात्मनः । चराचरं च मुनयः प्रदीप्तिमभूज्जगत् ॥५९॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे उपमन्युतपोवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥
आदितः श्लोकानां समष्टयङ्काः-२१,७८२+५९=२१,८४१



## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

वायुरुवाच ॥
अथ सर्वे प्रदीप्ताङ्गा वैकुण्ठं प्रययुर्द्रुतम् । प्रणम्याहुश्च तत्सर्वं हरये देवसत्तमाः ॥१॥
श्रुत्वा तेषां तदा वाक्यं भगवान्पुरुषोत्तमः । किमिदन्त्विवति संचिन्त्य ज्ञात्वा तत्कारणं च सः ॥२॥
जगाम मन्दरं तूर्णं महेश्वरदिदृक्षया । दृष्ट्वा देवं प्रणम्यैवं प्रोवाच सुकृताञ्जलिः ॥३॥
विष्णुरुवाच ॥
भगवन्ब्राह्मणः कश्चिदुपमन्युरिति श्रुतः । क्षीरार्थमदहत्सर्वं तपसा तन्निवारय ॥४॥
वायुरुवाच ॥
इति श्रुत्वा वचो विष्णोः प्राह देवो महेश्वरः । शिशुं निवारयिष्यामि तत्त्वं गच्छ स्वमाश्रमम् ॥५॥
तच्छ्रुत्वा शंभुवचनं स विष्णुर्देववल्लभः । जगामाश्वास्य तान्सर्वान्स्वलोकममरादिकान् ॥६॥
एतस्मिन्नंतरे देवः पिनाकी परमेश्वरः । शक्रस्य रूपमास्थाय गन्तुं चक्रे मतिं ततः ॥७॥
अथ जगाम मुनेस्तु तपोवनं गजवरेण सितेन सदा शिवः ।
सह सुरासुरसिद्धमहोरगैरमरराजतनुं स्वयमास्थितः ॥८॥
स वारणश्चारु तदा विभुं तं निवीज्य वालव्यजनेन दिव्यम् ।
दधार शच्या सहितं सुरेंद्रं करेण वामेन शितातपत्रम् ॥९॥
रराज भगवान्सोमः शक्ररूपी सदा शिवः । तेनातपत्रेण यथा चन्द्रबिंबेन मन्दरः ॥१०॥
आस्थायैवं हि शक्रस्य स्वरूपं परमेश्वरः । जगामानुग्रहं कर्तुमुपमन्योस्तदाश्रमम् ॥११॥
तं दृष्ट्वा परमेशानं शक्ररूपधरं शिवम् । प्रणम्य शिरसा प्राह महामुनिवरः स्वयम् ॥१२॥
उपमन्युरुवाच ॥
पावितश्चाश्रमस्सोऽयं मम देवेश्वर स्वयम् । प्राप्तो यत्त्वं जगन्नाथ भगवन्देवसत्तम ॥१३॥
वायुरुवाच ॥
एवमुक्त्वा स्थितं प्रेक्ष्य कृताञ्जलिपुटं द्विजम् । प्राह गंभीरया वाचा शक्ररूपधरो हरः ॥१४॥
शक्र उवाच ॥
तुष्टोऽस्मि ते वरं ब्रूहि तपसानेन सुव्रत । ददामि चेप्सितान्सर्वान्धौम्याग्रज महामुने ॥१५॥
वायुरुवाच ॥
एवमुक्तस्तदा तेन शक्रेण मुनिपुंगवः । वारयामिशिवे भक्तिमित्युवाच कृताञ्जलिः ॥१६॥
तन्निशम्य हरिः प्राह मां न जानासि लेखपम् । त्रैलोक्याधिपतिं शक्रं सर्वदेवनमस्कृतम् ॥१७॥
मद्भक्तो भव विप्रर्षे मामेवार्चय सर्वदा । ददामि सर्वं भद्रं ते त्यज रुद्रं च निर्गुणम् ॥१८॥
रुद्रेण निर्गुणेनापि किं ते कार्यं भविष्यति । देवपङ्क्तिबहिर्भूतो यः पिशाचत्वमागतः ॥१९॥
वायुरुवाच ॥
तच्छ्रुत्वा प्राह स मुनिर्जपन्पञ्चाक्षरं मनुम् । मन्यमानो धर्मविघ्नं प्राह तं कर्तुमागतम् ॥२०॥
उपमन्युरुवाच ॥
त्वयैवं कथितं सर्वं भवनिंदारतेन वै । प्रसंगादेव देवस्य निर्गुणत्वं महात्मनः ॥२१॥
त्वं न जानामि वै रुद्रं सर्वदेवेश्वरेश्वरम् । ब्रह्मविष्णुमहेशानां जनक प्रकृतेः परम् ॥२२॥
सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः । नित्यमेकमनेकं च वरं तस्माद्वृणोम्यहम् ॥२३॥

हेतुवादविनिर्मुक्तं सांख्ययोगार्थदम्परम् । उपासते यं तत्त्वज्ञा वरं तस्माद्वृणोम्यहम् ॥२४॥
नास्ति शम्भोः परं तत्त्वं सर्वकारणकारणात् । ब्रह्मविष्ण्वादिदेवानां स्रष्टुर्गुणपराद्विभोः ॥२५॥
बहुनात्र किमुक्तेन मयाद्यानुमितं महत् । भवान्तरे कृतं पापं श्रुता निन्दा भवस्य चेत् ॥२६॥
श्रुत्वा निंदां भवस्याथ तत्क्षणादेव सन्त्यजेत् । स्वदेहं तन्निहत्याशु शिवलोकं स गच्छति ॥२७॥
आस्तां तावन्ममेच्छेयं क्षीरं प्रति सुराधम । निहत्य त्वां शिवास्त्रेण त्यजाम्येतं कलेवरम् ॥२८॥
वायुरुवाच ॥
एवमुक्त्वोपमन्युस्तं मर्तुं व्यवसितस्स्वयम् । क्षीरे वाञ्छामपि त्यक्त्वा निहन्तुं शक्रमुद्यतः ॥२९॥
भस्मादाय तदा घोरमघोरास्त्राभिमंत्रितम् । विसृज्य शक्रमुद्दिश्य ननाद स मुनिस्तदा ॥३०॥
स्मृत्वा शंभुपदद्वंद्वं स्वदेहं दुग्धुमुद्यतः । आग्नेयीं धारणां बिभ्रदुपमन्युरवस्थितः ॥३१॥
एवं व्यवसिते विप्रे भगवान्भगनेत्रहा । वारयामास सौम्येन धारणां तस्य योगिनः ॥३२॥
तद्विसृष्टमघोरास्त्रं नंदीश्वरनियोगतः । जगृहे मध्यतः क्षिप्तं नन्दी शंकरवल्लभः ॥३३॥
स्वं रूपमेव भगवानास्थाय परमेश्वरः । दर्शयामास शिप्राय बालेन्दुकृतशेखरम् ॥३४॥
क्षीरार्णवसहस्रं च पीयूषार्णवमेव वा । दध्यादेरर्णवांश्चैव घृतोदार्णवमेव च ॥३५॥
फलार्णवं च बालस्य भक्ष्य भोज्यार्णवं तथा । अपूपानां गिरिं चैव दर्शयामास स प्रभुः ॥३६॥
एवं स ददृशे देवो देव्या सार्धं वृषोपरि । गणेश्वरैस्त्रिशूलाद्यैर्दिव्यास्त्रैरपि संवृतः ॥३७॥
दिवि दुंदुभयो नेदुः पुष्पवृष्टिः पपात च । विष्णुब्रह्मेन्द्रप्रमुखैर्देवैश्छन्ना दिशो दश ॥३८॥
अथोपमन्युरानन्दसमुद्रोर्मिभिरावृतः । पपात दण्डवद्भूमौ भक्तिनम्रेण चेतसा ॥३९॥
एतस्मिन्समये तत्र सस्मितो भगवान्भवः । एह्येहीति तमाहूय मूर्ध्न्याघ्राय ददौ वरान् ॥४०॥
शिव उवाच ॥
भक्ष्यभोज्यान्यथाकामं बान्धवैर्भुंक्ष्व सर्वदा । सुखी भव सदा दुःखान्निर्मुक्ता भक्तिमान्मम ॥४१॥
उपमन्यो महाभाग तवाम्बैषा हि पार्वती । मया पुत्रीकृतो ह्यद्य दत्तः क्षीरोदकार्णवः ॥४२॥
मधुनश्चार्णवश्चैव दध्यन्नार्णव एव च । आज्यौदनार्णवश्चैव फलाद्यर्णव एव च ॥४३॥
अपूपगिरयश्चैव भक्ष्यभोज्यार्णवस्तथा । एते दत्ता मया ते हि त्वं गृह्णीष्व महामुने ॥४४॥
पिता तव महादेवो माता वै जगदम्बिका । अमरत्वं मया दत्तं गाणपत्यं च शाश्वतम् ॥४५॥
वरान्वरय सुप्रीत्या मनोऽभिलषितान्परान् । प्रसन्नोऽहं प्रदास्यामि नात्र कार्या विचारणा ॥४६॥
वायुरुवाच ॥
एवमुक्त्वा महादेवः कराभ्यामुपगृह्यतम् । मूर्ध्न्याघ्राय सुतस्तेऽयमिति देव्यै न्यवेदयत् ॥४७॥
देवी च गुहवत्प्रीत्या मूर्ध्नि तस्य कराम्बुजम् । विन्यस्य प्रददौ तस्मै कुमारपदमव्ययम् ॥४८॥
क्षीराब्धिरपि साकारः क्षीरं स्वादु करे दधत् । उपस्थाय ददौ पिण्डीभूतं क्षीरमनश्वरम् ॥४९॥
योगैश्वर्यं सदा तुष्टिं ब्रह्मविद्यामनश्वराम् । समृद्धिं परमान्तस्मै ददौ सन्तुष्टमानसः ॥५०॥
अथ शंभुः प्रसन्नात्मा दृष्ट्वा तस्य तपोमहः । पुनर्ददौ वरं दिव्यं मुनये ह्युपमन्यवे ॥५१॥
व्रतं पाशुपतं ज्ञानं व्रतयोगं च तत्त्वतः । ददौ तस्मै प्रवक्तृत्वपाटवं सुचिरं परम् ॥५२॥
सोऽपि लब्ध्वा वरान्दिव्यान्कुमारत्वं च सर्वदा । तस्माच्छिवाच्च तस्याश्च शिवाया मुदितोऽभवत् ॥५३॥
ततः प्रसन्नचेतस्कः सुप्रणम्य कृताञ्जलिः । ययाचे स वरं विप्रो देवदेवान्महेश्वरात् ॥५४॥
उपमन्युरुवाच ॥
प्रसीद देवदेवेश प्रसीद परमेश्वर । स्वभक्तिन्देहि परमान्दिव्यामव्यभिचारिणीम् ॥५५॥
श्रद्धान्देहि महादेव स्वसम्बन्धिषु मे सदा । स्वदास्यं परमं स्नेहं सान्निध्यं चैव सर्वदा ॥५६॥
एवमुक्त्वा प्रसन्नात्माहर्षगद्गदया गिरा । सतुष्टाव महादेवमुपमन्युर्द्विजोत्तमः ॥५७॥
उपमन्युरुवाच ॥
देवदेव महादेव शरणागतवत्सल । प्रसीद करुणासिंधो साम्ब शंकर सर्वदा ॥५८॥
वायुरुवाच ॥

एवमुक्तो महादेवः सर्वेषां च वरप्रदः । प्रत्युवाच प्रसन्नात्मोपमन्युं मुनिसत्तमम् ॥५९॥
शिव उवाच ॥
वत्सोपमन्यो तुष्टोऽस्मि सर्वं दत्तं मया हि ते । दृढभक्तोऽसि विप्रर्षे मया विज्ञासितो ह्यसि ॥६०॥
अजरश्चामरश्चैव भवत्वन्दुःखवर्जितः । यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥६१॥
अक्षया बान्धवाश्चैव कुलं गोत्रं च ते सदा । भविष्यति द्विजश्रेष्ठ मयि भक्तिश्च शाश्वती ॥६२॥
सान्निध्यं चाश्रमे नित्यं करिष्यामि द्विजोत्तम । उपकण्ठं मम त्वं वै सानन्दं विहरिष्यसि ॥६३॥
एवमुक्त्वा स भगवान्सूर्यकोटिसमप्रभः । ईशानस्स वरान्दत्त्वा तत्रैवान्तर्दधे हरः ॥६४॥
उपमन्युः प्रसन्नात्मा प्राप्य तस्माद्वराद्वरान् । जगाम जननीस्थानं सुखं प्रापाधिकं च सः ॥६५॥
इति श्रीशिवमहापुराणे वैयासिक्यां चतुर्विंशतिसाहस्र्यां संहितायां तदन्तर्गतायां सप्तम्यां वायवीयसंहितायां पूर्वखण्डे उपमन्युचरितवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥३५॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,८४१+६५=२१,९०६

॥ समाप्तोऽयं सप्तम्या वायवीयसंहितायाः पूर्वखण्डः ॥
॥ अध्यायानामादितः समष्ट्यङ्काः-३३०+३५=३६५ ॥
॥ श्रीसांबसदाशिवार्पणमस्तु ॥
॥ ॐ नमः शिवाय ॥

# ॥ अथ श्रीशिवमहापुराणे सप्तमी वायवीयसंहिता प्रारभ्यते ॥
# ॥ उत्तर भागः ॥

॥ श्रीगणेशाय नमः ॥
॥ ॐ नमः शिवाय ॥

## ॥ अथ प्रथमोऽध्यायः ॥

ॐ नमस्समस्तसंसारचक्रभ्रमणहेतवे । गौरीकुचतटद्वन्द्वकुंकुमांकितवक्षसे ॥१॥
सूत उवाच ॥
उक्त्वा भगवतो लब्धप्रसादादुपमन्युना । नियमादुत्थितो वायुर्मध्ये प्राप्ते दिवाकरे ॥२॥
ऋषयश्चापि ते सर्वे नैमिषारण्यवासिनः । अथायमर्थः प्रष्टव्य इति कृत्वा विनिश्चयम् ॥३॥
कृत्वा यथा स्वकं कृत्यं प्रत्यहं ते यथा पुरा । भगवंतमुपायान्तं समीक्ष्य समुपाविशन् ॥४॥
अथासौ नियमस्यान्ते भगवानम्बरोद्भवः । मध्ये मुनिसभायास्तु भेजे क्लृप्तं वरासनम् ॥५॥
सुखासनोपविष्टश्च वायुर्लोकनमस्कृतः । श्रीमद्विभूतिमीशस्य हृदि कृत्वेदमब्रवीत् ॥६॥
तं प्रपद्ये महादेवं सर्वज्ञमपराजितम् । विभूतिस्सकलं यस्य चराचरमिदं जगत् ॥७॥
इत्याकर्ण्य शुभां वाणीमृषयः क्षीणकल्मषाः । विभूतिविस्तरं श्रोतुमूचुस्ते परमं वचः ॥८॥
ऋषय ऊचुः ॥
उक्तं भगवता वृत्तमुपमन्योर्महात्मनः । क्षीरार्थेनापि तपसा यत्प्राप्तं परमेश्वरात् ॥९॥
दृष्टोऽसौ वासुदेवेन कृष्णेनाक्लिष्टकर्मणा । धौम्याग्रजस्ततस्तेन कृत्वा पाशुपतं व्रतम् ॥१०॥
प्राप्तं च परमं ज्ञानमिति प्रागेव शुश्रुम । कथं स लब्धवान् कृष्णो ज्ञानं पाशुपतं परम् ॥११॥
वायुरुवाच ॥
स्वेच्छया ह्यवतीर्णोपि वासुदेवस्सनातनः । निंदयन्निव मानुष्यं देहशुद्धिं चकार सः ॥१२॥
पुत्रार्थं हि तपस्तप्तुं गतस्तस्य महामुनेः । आश्रमं मुनिभिर्दृष्टं दृष्टवांस्तत्र वै मुनिम् ॥१३॥
भस्मावदातसर्वाङ्गं त्रिपुण्ड्रांकितमस्तकम् । रुद्राक्षमालाभरणं जटामण्डलमण्डितम् ॥१४॥

तच्छिष्यभूतैर्मुनिभिश्शास्त्रैर्वेदमिवावृतम् । शिवध्यानरतं शान्तमुपमन्युं महाद्युतिम् ॥१५॥
नमश्चकार तं दृष्ट्वा हृष्टसर्वतनूरुहः । बहुमानेन कृष्णोऽसौ त्रिः कृत्वा तु प्रदक्षिणाम् ॥१६॥
स्तुतिं चकार सुप्रीत्या नतस्कंधः कृताञ्जलिः । तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः ॥१७॥
नष्टमासीन्मलं सर्वं मायाजं कार्ममेव च । तफक्षीणमलं कृष्णमुपमन्युर्यथाविधिः ॥१८॥
भस्मनोद्धूल्य तं मन्त्रैरग्निरित्यादिभिः क्रमात् । अथ पाशुपतं साक्षाद्व्रतं द्वादशमासिकम् ॥१९॥
कारयित्वा मुनिस्तस्मै प्रददौ ज्ञानमुत्तमम् । तदाप्रभृति तं कृष्णं मुनयश्शंसितव्रताः ॥२०॥
दिव्याः पाशुपताः सर्वे परिवृत्योपतस्थिरे । ततो गुरुनियोगाद्वै कृष्णः परमशक्तिमान् ॥२१॥
तपश्चकार पुत्रार्थं सांबमुद्दिश्य शंकरम् । तपसो तेन वर्षांते दृष्टोऽसौ परमेश्वरः ॥२२॥
श्रिया परमया युक्तस्सांबश्च सगणश्शिवः । वरार्थमाविर्भूतस्य हरस्य सुभगाकृतेः ॥२३॥
स्तुतिं चकार नत्वासौ कृष्णः सम्यक्कृताञ्जलिः । सांबं समगणव्यग्रो लब्धवान्पुत्रमात्मनः ॥२४॥
तपसा तुष्टचित्तेन दत्तं विष्णोश्शिवेन वै । यस्मात्सांबो महादेवः प्रददौ पुत्रमात्मनः ॥२५॥
तस्माज्जांबवतीसूनुं सांबं चक्रे स नामतः । तदेतत्कथितं सर्वं कृष्णस्यामितकर्मणः ॥२६॥
महर्षेर्ज्ञानलाभश्च पुत्रलाभश्च शंकरात् । य इदं कीर्तयेन्नित्यं शृणुयाच्छ्रावयेत्तथा ॥
स विष्णोर्ज्ञानमासाद्य तेनैव सह मोदते ॥२७॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे कृष्णपुत्रप्राप्तिवर्णनं नम प्रथमोऽध्यायः ॥१॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,९०६+२७=२१,९३३



## ॥ अथ द्वितीयोऽध्यायः ॥

ऋषय ऊचुः ॥
किं तत्पाशुपतं ज्ञानं कथं पशुपतिश्शिवः । कथं धौम्याग्रजः पृष्टः कृष्णेनाक्लिष्टकर्मणा ॥१॥
एतत्सर्वं समाचक्ष्व वायो शंकरविग्रह । तत्समो न हि वक्तास्ति त्रैलोक्येष्वपरः प्रभुः ॥२॥
सूत उवाच ॥
इत्याकर्ण्य वचस्तेषां महर्षीणां प्रभंजनः । संस्मृत्य शिवमीशानं प्रवक्तुमुपचक्रमे ॥३॥
वायुरुवाच ॥
पुरा साक्षान्महेशेन श्रीकण्ठाख्येन मन्दरे । देव्यै देवेन कथितं ज्ञानं पाशुपतं परम् ॥४॥
तदेव पृष्टं कृष्णेन विष्णुना विश्वयोनिना । पशुत्वं च सुरादीनां पतित्वं च शिवस्य च ॥५॥
यथोपदिष्टं कृष्णाय मुनिना ह्युपमन्युना । तथा समासतो वक्ष्ये तच्छृणुध्वमतंद्रिताः ॥६॥
पुरोपमन्युमासीनं विष्णुःकृष्णवपुर्धरः । प्रणिपत्य यथान्यायमिदं वचनमब्रवीत् ॥७॥
श्रीकृष्ण उवाच ॥
भगवञ्छ्रोतुमिच्छामि देव्यै देवेन भाषितम् । दिव्यं पाशुपतं ज्ञानं विभूतिं वास्य कृत्स्नशः ॥८॥
कथं पशुपतिर्देवः पशवः के प्रकीर्तिताः । कैः पाशैस्ते निबध्यन्ते विमुच्यन्ते च ते कथम् ॥९॥
इति सञ्चोदितः श्रीमानुपमन्युर्महात्मना । प्रणम्य देवं देवीं च प्राह पुष्टो यथा तथा ॥१०॥
उपमन्युरुवाच ॥
ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥११॥
तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । मलमायादिभिः पाशैः स बध्नाति पशून्पतिः ॥१२॥
स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । चतुर्विंशतितत्त्वानि मायाकर्मगुणा अमी ॥१३॥
विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः । ब्रह्मादिस्तम्बपर्यन्तान् पशून्बद्ध्वा महेश्वरः ॥१४॥
पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् । तस्याज्ञया महेशस्य प्रकृतिः पुरुषोचिताम् ॥१५॥
बुद्धिं प्रसूते सा बुद्धिरहङ्कारमहङ्कृतिः । इन्द्रियाणि दशैकं च तन्मात्रापञ्चकं तथा ॥१६॥
शासनाद्देवदेवस्य शिवस्य शिवदायिनः । तन्मात्राण्यपि तस्यैव शासनेन महीयसा ॥१७॥

महाभूतान्यशेषाणि भावयन्त्यनुपूर्वशः । ब्रह्मादीनां तृणान्तानां देहिनां देहसंगतिम् ॥१८॥
महाभूतान्यशेषाणि जनयन्ति शिवाज्ञया । अध्यवस्यति वै बुद्धिरहङ्कारोभिमन्यते ॥१९॥
चित्तं चेतयते चापि मनः संकल्पयत्यपि । श्रोत्रादीनि च गृह्णन्ति शब्दादीन्विषयान् पृथक् ॥२०॥
स्वानेव नान्यान्देवस्य दिव्येनाज्ञाबलेन वै । वागादीन्यपि यान्यासंस्तानि कर्मेन्द्रियाणि च ॥२१॥
यथा स्वं कर्म कुर्वन्ति नान्यत्किंचिच्छिवाज्ञया । शब्दादयोपि गृह्यन्ते क्रियन्ते वचनादयः ॥२२॥
अविलंघ्या हि सर्वेषामाज्ञा शम्भोर्गरीयसी । अवकाशमशेषाणां भूतानां संप्रयच्छति ॥२३॥
आकाशः परमेशस्य शासनादेव सर्वगः । प्राणाद्यैश्च तथा नामभेदैरन्तर्बहिर्जगत् ॥२४॥
बिभर्ति सर्वं शर्वस्य शासनेन प्रभञ्जनः । हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥२५॥
पाकाद्यं च करोत्यग्निः परमेश्वरशासनात् । संजीवनाद्यं सर्वस्य कुर्वत्यापस्तदाज्ञया ॥२६॥
विश्वम्भरा जगन्नित्यं धत्ते विश्वेश्वराज्ञया । देवान्पात्यसुरान् हंति त्रिलोकमभिरक्षति ॥२७॥
आज्ञया तस्य देवेन्द्रः सर्वैर्देवैरलंघ्यया । आधिपत्यमपां नित्यं कुरुते वरुणस्सदा ॥२८॥
पाशैर्बध्नाति च यथा दण्डयांस्तस्यैव शासनात् । ददाति नित्यं यक्षेन्द्रो द्रविणं द्रविणेश्वरः ॥२९॥
पुण्यानुरूपं भूतेभ्यः पुरुषस्यानुशासनात् । करोति संपदः शश्वज्ज्ञानं चापि सुमेधसाम् ॥३०॥
निग्रहं चाप्यसाधूनामीशानश्शिवशासनात् । धत्ते तु धरणीं मूर्ध्ना शेषः शिवनियोगतः ॥३१॥
यामाहुस्तामसीं रौद्रीं मूर्तिमंतकरीं हरेः । सृजत्यशेषमीशस्य शासनाच्चतुराननः ॥३२॥
अन्याभिर्मूर्तिभिः स्वाभिः पाति चान्ते निहन्ति च । विष्णुः पालयते विश्वं कालकालस्य शासनात् ॥३३॥
सृजते त्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः । हरत्यन्ते जगत्सर्वं हरस्तस्यैव शासनात् ॥३४॥
सृजत्यपि च विश्वात्मा त्रिधा भिन्नस्तु रक्षति । कालः करोति सकलं कालस्संहरति प्रजाः ॥३५॥
कालः पालयते विश्वं कालकालस्य शासनात् । त्रिभिरंशैर्जगद्बिभ्रत्तेजोभिर्वृष्टिमादिशन् ॥३६॥
दिवि वर्षत्यसौ भानुर्देवदेवस्य शासनात् । पुष्णात्योषधिजातानि भूतान्याह्लादयत्यपि ॥३७॥
देवैश्च पीयते चंद्रश्चन्द्रभूषणशासनात् । आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा ॥३८॥
खेचरा ऋषयस्सिद्धा भोगिनो मनुजा मृगाः । पशवः पक्षिणश्चैव कीटाद्याः स्थावराणि च ॥३९॥
नद्यस्समुद्रा गिरयः काननानि सरांसि च । वेदाः साङ्गाश्च शास्त्राणि मन्त्रस्तोममखादयः ॥४०॥
कालाग्न्यादि शिवान्तानि भुवनानि सहाधिपैः । ब्रह्मांडान्यप्यसंख्यानि तेषामावरणानि च ॥४१॥
वर्तमानान्यतीतानि भविष्यन्त्यपि कृत्स्नशः । दिशश्च विदिशश्चैव कालभेदाः कलादयः ॥४२॥
यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । तत्सर्वं शंकरस्याज्ञा बलेन समधिष्ठितम् ॥४३॥
आज्ञाबलात्तस्य धरा स्थितेह धराधरा वारिधराः समुद्राः ।
ज्योतिर्गणाः शक्रमुखाश्च देवाः स्थिरं चिरं वा चिदचिद्यदस्ति ॥४४॥
उपमन्युरुवाच ॥
अत्याश्चर्यमिदं कृष्ण शम्भोरमितकर्मणः । आज्ञाकृतं शृणुष्वैतच्छ्रुतं श्रुतिमुखे मया ॥४५॥
पुरा किल सुराः सेंद्रा विवदंतः परस्परम् । असुरान्समरे जित्वा जेताहमहमित्युत ॥४६॥
तदा महेश्वरस्तेषां मध्यतो वरवेषधृक् । स्वलक्षणैर्विहीनाङ्गः स्वयं यक्ष इवाभवत् ॥४७॥
स तानाह सुरानेकं तृणमादाय भूतले । य एतद्विकृतं कर्तुं क्षमते स तु दैत्यजित् ॥४८॥
यक्षस्य वचनं श्रुत्वा वज्रपाणिः शचीपतिः । किञ्चित्क्रुद्धो विहस्यैनं तृणमादातुमुद्यतः ॥४९॥
न तत्तृणमुपदातुं मनसापि च शक्यते । यथा तथापि तच्छेत्तुं वज्रं वज्रधरोऽसृजत् ॥५०॥
तद्वज्रं निजवज्रेण संसृष्टमिव सर्वतः । तृणेनाभिहतं तेन तिर्यगग्रं पपात ह ॥५१॥
ततश्चान्ये सुसंरब्धा लोकपाला महाबलाः । ससृजुस्तृणमुद्दिश्य स्वायुधानि सहस्रशः ॥५२॥
प्रजज्वाल महावह्निः प्रचण्डः पवनो ववौ । प्रवृद्धोऽपांपतिर्यद्वत्प्रलये समुपस्थिते ॥५३॥
एवं देवैस्समारब्धं तृणमुद्दिश्य यत्नतः । व्यर्थमासीदहो कृष्ण यक्षस्यात्मबलेन वै ॥५४॥
तदाह यक्षं देवेंद्रः को भवानित्यमर्षितः । ततस्स पश्यतामेव तेषामंतरधादथ ॥५५॥
तदंतरे हैमवती देवी दिव्यविभूषणा । आविरासीन्नभोरङ्गे शोभमाना शुचिस्मिता ॥५६॥

तां दृष्ट्वा विस्मयाविष्टा देवाः शक्रपुरोगमाः । प्रणम्य यक्षं पप्रच्छुः कोऽसौ यक्षो विलक्षणः ॥५७॥
साऽब्रवीत्सस्मितं देवी स युष्माकमगोचरः । तेनेदं भ्रम्यते चक्रं संसाराख्यं चराचरम् ॥५८॥
तेनादौ क्रियते विश्वं तेन संह्रियते पुनः । न तन्नियन्ता कश्चित्स्यात्तेन सर्वं नियम्यते ॥५९॥
इत्युक्त्वा सा महादेवी तत्रैवान्तरधत्त वै । देवाश्च विस्मिताः सर्वे तां प्रणम्य दिवं ययुः ॥६०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे द्वितीयोऽध्यायः ॥२॥
आदितः श्लोकानां समष्ट्यङ्काः-२१,९३३+६०=२१,९९३



## ॥ अथ तृतीयोऽध्यायः ॥

उपमन्युरुवाच ॥

शृणु कृष्ण महेशस्य शिवस्य परमात्मनः । मूर्त्यात्मभिस्ततं कृत्स्नं जगदेतच्चराचरम् ॥१॥
स शिवस्सर्वमेवेदं स्वकीयाभिश्च मूर्तिभिः । अधितिष्ठत्यमेयात्मा ह्येतत्सर्वमनुस्मृतम् ॥२॥
ब्रह्मा विष्णुस्तथा रुद्रो महेशानस्सदा शिवः । मूर्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ॥३॥
अथान्याश्चापि तनवः पञ्च ब्रह्मसमाह्वयाः । तनूभिस्ताभिराव्याप्तमिह किञ्चिन्न विद्यते ॥४॥
ईशानः पुरुषोऽघोरो वामः सद्यस्तथैव च । ब्रह्माण्येतानि देवस्य मूर्तयः पञ्च विश्रुताः ॥५॥
ईशानाख्या तु या तस्य मूर्तिराद्या गरीयसी । भोक्तारं प्रकृतेः साक्षात्क्षेत्रज्ञमधितिष्ठति ॥६॥
स्थाणोस्तत्पुरुषाख्या या मूर्तिर्मूर्तिमतः प्रभोः । गुणाश्रयात्मकं भोग्यमव्यक्तमधितिष्ठति ॥७॥
धर्माद्यष्टाङ्गसंयुक्तं बुद्धितत्त्वं पिनाकिनः । अधितिष्ठत्यघोराख्या मूर्तिरत्यन्तपूजिता ॥८॥
वामदेवाह्वयां मूर्तिं महादेवस्य वेधसः । अहङ्कृतेरधिष्ठात्रीमाहुरागमवेदिनः ॥९॥
सद्यो जाताह्वयां मूर्तिं शम्भोरमितवर्चसः । मानसः समधिष्ठात्रीं मतिमंतः प्रचक्षते ॥१०॥
श्रोत्रस्य वाचः शब्दस्य विभोर्व्योम्नस्तथैव च । ईश्वरीमीश्वरस्येमामीशाख्यां हि विदुर्बुधाः ॥११॥
त्वक्पाणिस्पर्शवायूनामीश्वरीं मूर्तिमैश्वरीम् । पुरुषाख्यं विदुस्सर्वे पुराणार्थविशारदाः ॥१२॥
चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च । अघोराख्यामधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः ॥१३॥
रसनायाश्च पायोश्च रसस्यापां तथैव च । ईश्वरीं वामदेवाख्यां मूर्तिं तन्निरतां विदुः ॥१४॥
घ्राणस्य चैवोपस्थस्य गन्धस्य च भुवस्तथा । सद्यो जाताह्वयां मूर्तिमीश्वरीं संप्रचक्षते ॥१५॥
मूर्तयः पञ्च देवस्य वंदनीयाः प्रयत्नतः । श्रेयोर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः ॥१६॥
तस्य देवादिदेवस्य मूर्त्यष्टकमयं जगत् । तस्मिन्व्याप्य स्थितं विश्वं सूत्रे मणिगणा इव ॥१७॥
शर्वो भवस्तथा रुद्र उग्रो भीमः पशोः पतिः । ईशानश्च महादेवो मूर्तयश्चाष्ट विश्रुताः ॥१८॥
भूम्यंभोग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः । अधिष्ठिता महेशस्य शर्वाद्यैरष्टमूर्तिभिः ॥१९॥
चराचरात्मकं विश्वं धत्ते विश्वंभरात्मिका । शार्वीर्शिवाह्वया मूर्तिरिति शास्त्रस्य निश्चयः ॥२०॥
संजीवनं समस्तस्य जगतस्सलिलात्मिका । भावीति गीयते मूर्तिभवस्य परमात्मनः ॥२१॥
बहिरन्तर्गता विश्वं व्याप्य तेजोमयी शुभा । रौद्री रुद्राव्यया मूर्तिरास्थिता घोररूपिणी ॥२२॥
स्पंदयत्यनिलात्मदं बिभर्ति स्पंदते स्वयम् । औग्रीति कथ्यते सद्भिर्मूर्तिरुग्रस्य वेधसः ॥२३॥
सर्वावकाशदा सर्वव्यापिका गगनात्मिका । मूर्तिर्भीमस्य भीमाख्या भूतवृंदस्य भेदिका ॥२४॥
सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनी । मूर्तिः पशुपतेर्ज्ञेया पशुपाशनिकृंतनी ॥२५॥
दीपयन्ती जगत्सर्वं दिवाकरसमाह्वया । ईशानाख्यमहेशस्य मूर्तिर्दिवि विसर्पति ॥२६॥
आप्याययति यो विश्वममृतांशुर्निशाकरः । महादेवस्य सा मूर्तिर्महादेवसमाह्वया ॥२७॥
आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः । व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥२८॥
वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा । शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जगत् ॥२९॥
सर्वाभयप्रदानं च सर्वानुग्रहणं तथा । सर्वोपकारकरणं शिवस्याराधनं विदुः ॥३०॥
यथेह पुत्रपौत्रादेः प्रीत्या प्रीतो भवेत्पिता । तथा सर्वस्य संप्रीत्या प्रीतो भवति शंकरः ॥३१॥

देहिनो यस्य कस्यापि क्रियते यदि निग्रहः । अनिष्टमष्टमूर्तेस्तत्कृतमेव न संशयः ॥३२॥
अष्टमूर्त्यात्मना विश्वमधिष्ठाय स्थितं शिवम् । भजस्व सर्वभावेन रुद्रः परमकारणम् ॥३३॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे तृतीयोऽध्यायः ॥३॥
आदितः श्लोकानां समष्टयङ्काः-२१,९९३+३३=२२,०२६



## ॥ अथ चतुर्थोऽध्यायः ॥

कृष्ण उवाच ॥
भगवन्परमेशस्य शर्वस्यामिततेजसः । मूर्तिभिर्विश्वमेवेदं यथा व्याप्तं तथा श्रुतम् ॥१॥
अथैतज्ज्ञातुमिच्छामि याथात्म्यं पमेशयोः । स्त्रीपुंभावात्मकं चेदं ताभ्यां कथमधिष्ठितम् ॥२॥
उपमन्युरुवाच ॥
श्रीमद्विभूतिं शिवयोर्याथात्म्यं च समासतः । वक्ष्ये तद्विस्तराद्वक्तुं भवेनापि न शक्यते ॥३॥
शक्तिः साक्षान्महादेवी महादेवश्च शक्तिमान् । तयोर्विभूतिलेशो वै सर्वमेतच्चराचरम् ॥४॥
वस्तु किञ्चिदचिद्रूपं किञ्चिद्वस्तु चिदात्मकम् । द्वयं शुद्धमशुद्धं च परं चापरमेव च ॥५॥
यत्संसरति चिच्चक्रमचिच्चक्रसमन्वितम् । तदेवाशुद्धमपरमितरं तु परं शुभम् ॥६॥
अपरं च परं चैव द्वयं चिदचिदात्मकम् । शिवस्य च शिवायाश्च स्वाम्यं चैतत्स्वभावतः ॥७॥
शिवयोर्वै वशे विश्वं न विश्वस्य वशे शिवौ । ईशितव्यमिदं यस्मात्तस्माद्विश्वेश्वरौ शिवौ ॥८॥
यथा शिवस्तथा देवी यथा देवी तथा शिवः । नानयोरन्तरं विद्याच्चंद्रचन्द्रिकयोरिव ॥९॥
चंद्रो न खलु भात्येष यथा चंद्रिकया विना । न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः ॥१०॥
प्रभया हि विनायद्वद्भानुरेष न विद्यते । प्रभा च भानुना तेन सुतरां तदुपाश्रया ॥११॥
एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थिता । न शिवेन विना शक्तिर्न शक्त्या च विना शिवः ॥१२॥
शक्तौयया  शिवो नित्यं भक्तौ मुक्तौ च देहिनाम् । आद्या सैका परा शक्तिश्चिन्मयी शिवसंश्रया ॥१३॥
यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः । समानधर्मिणीमेव शिवस्य परमात्मनः ॥१४॥
सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी । विभज्य बहुधा विश्वं विदधाति शिवेच्छया ॥१५॥
सा मूलप्रकृतिर्माया त्रिगुणा च त्रिधा स्मृता । शिवया च विपर्यस्तं यया ततमिदं जगत् ॥१६॥
एकधा च द्विधा चैव तथा शतसहस्रधा । शक्तयः खलु भिद्यंते बहुधा व्यवहारतः ॥१७॥
शिवेच्छया पराशक्तिः शिवतत्त्वैकतां गता । ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥१८॥
ततः क्रियाख्यया शक्त्या शक्तौ शक्तिमदुत्थया । तस्यां विक्षोभ्यमाणायामादौ नादः समुद्बभौ ॥१९॥
नादाद्विनिःसृतो बिंदुर्बिंदोदेवस्सदा शिवः । तस्मान्महेश्वरो जातः शुद्धविद्या महेश्वरात् ॥२०॥
सा वाचामीश्वरी शक्तिर्वागीशाख्या हि शूलिनः । या सा वर्णस्वरूपेण मातृकेपि विजृम्भते ॥२१॥
अथानन्तसमावेशान्माया कालमवासृजत् । नियतिञ्च कलां विद्यां कलातोरागपूरुषौ ॥२२॥
मायातः पुनरेवाभूदव्यक्तं त्रिगुणात्मकम् । त्रिगुणाच्च ततो व्यक्ताद्विभक्ताः स्युस्त्रयो गुणाः ॥२३॥
सत्त्वं रजस्तमश्चेति यैर्व्याप्तमखिलं जगत् । गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशाख्यास्त्रिमूर्तयः ॥२४॥
अभवन्महदादीनि तत्त्वानि च यथाक्रमम् । तेभ्यस्स्युरण्डपिण्डानि त्वसंख्यानि शिवाज्ञया ॥२५॥
अधिष्ठितान्यनन्ताद्यैर्विद्येशैश्चक्रवर्तिभिः । शरीरान्तरभेदेन शक्तेर्भेदाः प्रकीर्तिताः ॥२६॥
नानारूपास्तु विज्ञेयाः स्थूलसूक्ष्मविभेदतः । रुद्रस्य रौद्री सा शक्तिर्विष्णौर्वै वैष्णवी मता ॥२७॥
ब्रह्माणी ब्रह्मणः प्रोक्ता चेन्द्रस्यैंद्रीति कथ्यते । किमत्र बहुनोक्तेन यद्विश्वमिति कीर्तितम् ॥२८॥
शक्यात्मनैव तद्व्याप्तं यथा देहेऽन्तरात्मना । तस्माच्छक्तिमयं सर्वं जगत्स्थावरजंगमम् ॥२९॥
कला या परमा शक्तिः कथिता परमात्मनः । एवमेषा परा शक्तिरीश्वरेच्छानुयायिनी ॥३०॥
स्थिरं चरं च यद्विश्वं सृजतीति विनिश्चयः । ज्ञानक्रिया चिकीर्षाभिस्तिसृभिस्स्वात्मशक्तिभिः ॥३१॥
शक्तिमानीश्वरः शश्वद्विश्वं व्याप्याधितिष्ठति । इदमित्थमिदं नेत्थं भवेदित्येवमात्मिका ॥३२॥

इच्छाशक्तिर्महेशस्य नित्या कार्यनियामिका । ज्ञानशक्तिस्तु तत्कार्यं करणं कारणं तथा ॥३३॥
प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्यति । यथेप्सितं क्रियाशक्तिर्यथाध्यवसितं जगत् ॥३४॥
कल्पयत्यखिलं कार्यं क्षणात्संकल्परूपिणी । यथा शक्तित्रयोत्थानं शक्तिप्रसवधर्मिणी ॥३५॥
शक्त्या परमया नुन्ना प्रसूते सकलं जगत् । एवं शक्तिसमायोगाच्छक्तिमानुच्यते शिवः ॥३६॥
शक्तिशक्तिमदुत्थं तु शाक्तं शैवमिदं जगत् । यथा न जायते पुत्रः पितरं मातरं विना ॥३७॥
तथा भवं भवानीं च विना नैतच्चराचरम् । स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मकमेव च ॥३८॥
स्त्रीपुंसयोर्विभूतिश्च स्त्रीपुंसाभ्यामधिष्ठितम् । परमात्मा शिवः प्रोक्तश्शिवा सा च प्रकीर्तिता ॥३९॥
शिवस्सदा शिवः प्रोक्तः शिवा सा च मनोन्मनी । शिवो महेश्वरो ज्ञेयः शिवा मायेति कथ्यते ॥४०॥
पुरुषः परमेशानः प्रकृतिः परमेश्वरी । रुद्रो महेश्वरस्साक्षाद्रुद्राणी रुद्रवल्लभा ॥४१॥
विष्णुर्विश्वेश्वरो देवो लक्ष्मीर्विश्वेश्वरप्रिया । ब्रह्मा शिवो यदा स्रष्टा ब्रह्माणी ब्रह्मणः प्रिया ॥४२॥
भास्करो भगवाञ्छंभुः प्रभा भगवती शिवा । महेंद्रो मन्मथारातिः शची शैलेन्द्रकन्यका ॥४३॥
जातवेदा महादेवः स्वाहा शर्वार्धदेहिनी । यमस्त्रियंबको देवस्तत्प्रिया गिरिकन्यका ॥४४॥
निर्ऋतिर्भगवानीशो नैर्ऋती नगनंदिनी । वरुणो भगवान्रुद्रो वारुणी भूधरात्मजा ॥४५॥
बालेंदुशेखरो वायुः शिवा शिवमनोहरा । यक्षो यज्ञशिरोहर्ता ऋद्धिर्हिमगिरीन्द्रजा ॥४६॥
चंद्रार्धशेखरश्चंद्रो रोहिणी रुद्रवल्लभा । ईशानः परमेशानस्तदार्या परमेश्वरी ॥४७॥
अनन्तवलयोऽनन्तो ह्यनन्तानन्तवल्लभा । कालाग्निरुद्रः कालारिः काली कालान्तकप्रिया ॥४८॥
पुरुषाख्यो मनुश्शंभुः शतरूपा शिवप्रिया । दक्षस्साक्षान्महादेवः प्रसूतिः परमेश्वरी ॥४९॥
रुचिर्भवो भवानी च बुधैराकूतिरुच्यते । भृगुर्भगाक्षहा देवः ख्यातिस्त्रिनयनप्रिया ॥५०॥
मरीचिभगवान्रुद्रः संभूतिश्शर्ववल्लभा । गङ्गाधरोऽङ्गिरा ज्ञेयः स्मृतिः साक्षादुमा स्मृता ॥५१॥
पुलस्त्यः शशभृन्मौलिः प्रीतिः कान्ता पिनाकिनः । पुलहस्त्रिपुरध्वंसी तत्प्रिया तु शिवप्रिया ॥५२॥
क्रतुध्वंसी क्रतुः प्रोक्तः संनतिर्दयिता विभोः । त्रिनेत्रोऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ॥५३॥
कश्यफ कालहा देवो देवमाता महेश्वरी । वसिष्ठो मन्मथारातिर्देवी साक्षादरुंधती ॥५४॥
शंकरः पुरुषास्सर्वे स्त्रियस्सर्वा महेश्वरी । सर्वे स्त्रीपुरुषास्तस्मात्तयोरेव विभूतयः ॥५५॥
विषयी भगवानीशो विषयः परमेश्वरी । श्राव्यं सर्वमुमारूपं श्रोता शूलवरायुधः ॥५६॥
प्रष्टव्यं वस्तुजातं तु धत्ते शंकरवल्लभा । प्रष्टा स एव विश्वात्मा बालचन्द्रावतंसकः ॥५७॥
द्रष्टव्यं वस्तुरूपं तु बिभर्ति वक्तवल्लभा । द्रष्टा विश्वेश्वरो देवः शशिखण्डशिखामणिः ॥५८॥
रसजातं महादेवी देवो रसयिता शिवः । प्रेयजातं च गिरिजा प्रेयांश्चैव गराशनः ॥५९॥
मंतव्यवस्तुतां धत्ते सदा देवी महेश्वरी । मंता स एव विश्वात्मा महादेवो महेश्वरः ॥६०॥
बोद्धव्यवस्तुरूपं तु बिभर्ति भववल्लभा । देवस्स एव भगवान्बोद्धा मुग्धेन्दुशेखरः ॥६१॥
प्राणः पिनाकी सर्वेषां प्राणिनां भगवान्प्रभुः । प्राणस्थितिस्तु सर्वेषामम्बिका चांबुरूपिणी ॥६२॥
बिभर्ति क्षेत्रतां देवी त्रिपुरान्तकवल्लभा । क्षेत्रज्ञत्वं तदा धत्ते भगवानन्तकान्तकः ॥६३॥
अहः शूलायुधो देवः शूलपाणिप्रिया निशा । आकाशः शंकरो देवः पृथिवी शंकरप्रिया ॥६४॥
समुद्रो भगवानीशो वेला शैलेन्द्रकन्यका । वृक्षो वृषध्वजो देवो लता विश्वेश्वरप्रिया ॥६५॥
पुंल्लिंगमखिलं धत्ते भगवान्पुरशासनः । स्त्रिलिङ्गं चाखिलं धत्ते देवी देवमनोरमा ॥६६॥
शब्दजालमशेषं तु धत्ते सर्वस्य वल्लभा । अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥६७॥
यस्य यस्य पदार्थस्य या या शक्तिरुदाहृता । सा सा विश्वेश्वरी देवी स स सर्वो महेश्वरः ॥६८॥
यत्परं यत्पवित्रं च यत्पुण्यं यच्च मङ्गलम् । तत्तदाह महाभागास्तयोस्तेजोविजृंभितम् ॥६९॥
यथा दीपस्य दीप्तस्य शिखा दीपयते गृहम् । तथा तेजस्तयोरेतद्व्याप्य दीपयते जगत् ॥७०॥
तृणादि शिवमूर्त्यन्तं विश्वख्यातिशयक्रमः । सन्निकर्षक्रमवशात्तयोरिति परा श्रुतिः ॥७१॥
सर्वाकारात्मकावेतौ सर्वश्रेयोविधायिनौ । पूजनीयौ नमस्कार्यौ चिन्तनीयौ च सर्वदा ॥७२॥
यथाप्रज्ञमिदं कृष्ण याथात्म्यं परमेशयोः । कथितं हि मया तेऽद्य न तु तावदियत्तया ॥७३॥

तत्कथं शक्यते वक्तुं याथात्म्यं परमेशयोः । महतामपि सर्वेषां मनसोऽपि बहिर्गतम् ॥७४॥
अंतर्गतमनन्यानामीश्वरार्पितचेतसाम् । अन्येषां बुद्ध्यनारूढमारूढं च यथैव तत् ॥७५॥
येयमुक्ता विभूतिर्वै प्राकृती सा परा मता । अप्राकृतां परामन्यां गुह्यां गुह्यविदो विदुः ॥७६॥
यतो वाचो निवर्तंते मनसा चेन्द्रियैस्सह । अप्राकृती परा चैषा विभूतिः पारमेश्वरी ॥७७॥
सैवेह परमं धाम सैवेह परमा गतिः । सैवेह परमा काष्ठा विभूतिः परमेष्ठिनः ॥७८॥
तां प्राप्तुं प्रयतंतेऽत्र जितश्वासा जितेन्द्रियाः । गर्भकारा गृहद्वारं निश्छिद्रं घटितुं यथा ॥७९॥
संसाराशीविषालीढमृतसंजीवनौषधम् । विभूतिं शिवयोर्विद्वान्न बिभेति कुतश्चन ॥८०॥
यः परामपरां चैव विभूतिं वेत्ति तत्त्वतः । सोऽपरो भूतिमुल्लंघ्य परां भूतिं समश्नुते ॥८१॥
एतत्ते कथितं कृष्ण याथात्म्यं परमात्मनोः । रहस्यमपि योग्योऽसि भर्गभक्तो भवानिति ॥८२॥
नाशिष्येभ्योऽप्यशैवेभ्यो नाभक्तेभ्यः कदाचन । व्याहरेदीशयोर्भूतिमिति वेदानुशासनम् ॥८३॥
तस्मात्त्वमतिकल्याणपरेभ्यः कथयेन्न हि । त्वादृशेभ्योऽनुरूपेभ्यः कथयैतन्न चान्यथा ॥८४॥
विभूतिमेतां शिवयोर्योग्येभ्यो यः प्रदापयेत् । संसारसागरान्मुक्तः शिवसायुज्यमाप्नुयात् ॥८५॥
कीर्तनादस्य नश्यन्ति महान्त्यः पापकोटयः । त्रिश्चतुर्धासमभ्यस्तैर्विनश्यन्ति ततोऽधिकाः ॥८६॥
नश्यन्तयनिष्टरिपवो वर्धन्ते सुहृदस्तथा । विद्या च वर्धते शैवी मतिस्सत्ये प्रवर्तते ॥८७॥
भक्तिः पराः शिवे साम्बे सानुगे सपरिच्छिदे । यद्यदिष्टतमं चान्यत्तत्तदाप्नोत्यसंशयम् ॥८८॥
अन्तःशुचिः शिवे भक्तो विस्रब्धः कीर्तयेद्यदि । प्रबलैः कर्मभिः पूर्वैः फलं चेत्प्रतिबध्यते ॥
पुनः पुनः समभ्यस्येत्तस्य नास्तीह दुर्लभम् ॥८९॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे गौरीशंकरविभूतियोगो नाम चतुर्थोऽध्यायः ॥४॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,०२६+८९=२२,११५



## ॥ अथ पञ्चमोऽध्यायः ॥

उपमन्युरुवाच ॥

विग्रहं देवदेवस्य विश्वमेतच्चराचरम् । तदेवं न विजानंति पशवः पाशगौरवात् ॥१॥
तमेकमेव बहुधा वदंति यदुनंदन । अजानन्तः परं भावमविकल्पं महर्षयः ॥२॥
अपरं ब्रह्मरूपं च परं ब्रह्मात्मकं तथा । केचिदाहुर्महादेवमनादिनिधनं परम् ॥३॥
भूतेंद्रियान्तःकरणप्रधानविषयात्मकम् । अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम् ॥४॥
बृहत्त्वाद्बृहणत्वाद्वा ब्रह्म चेत्यभिधीयते । उभे ते ब्रह्मणो रूपे ब्रह्मणोऽधिपतेः प्रभोः ॥५॥
विद्याऽविद्यास्वरूपीति कैश्चिदीशो निगद्यते । विद्यां तु चेतनां प्राहुस्तथाविद्यामचेतनाम् ॥६॥
विद्याऽविद्यात्मकं चैव विश्वं विश्वगुरोर्विभोः । रूपमेव न संदेहो विश्वं तस्य वशे यतः ॥७॥
भ्रांतिर्विद्या परा चेति शार्वं रूपं परं विदुः । अयथाबुद्धिरर्थेषु बहुधा भ्रांतिरुच्यते ॥८॥
यथार्थाकारसंवित्तिर्विद्येति परिकीर्त्यते । विकल्परहितं तत्त्वं परमित्यभिधीयते ॥९॥
वैपरीत्यादसच्छब्दः कथ्यते वेदवादिभिः । तयोः पतित्वात्तु शिवः सदसत्पतिरुच्यते ॥१०॥
क्षराक्षरात्मकं प्राहुः क्षराक्षरपरं परे । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥११॥
उभे ते परमेशस्य रूपे तस्य वशे यतः । तयोः परः शिवः शान्तः क्षराक्षरापरस्स्मृतः ॥१२॥
समष्टिव्यष्ठिरूपं च समष्टिव्यष्टिकारणम् । वदंति मुनयः केचिच्छिवं परमकारणम् ॥१३॥
समष्टिमाहुरव्यक्तं व्यष्टिं व्यक्तं तथैव च । ते रूपे परमेशस्य तदिच्छायाः प्रवर्तनात् ॥१४॥
तयोः कारणभावेन शिवं परमकारणम् । कारणार्थविदः प्राहुः समष्टिव्यष्टिकारणम् ॥१५॥
जातिव्यक्तिस्वरूपीति कथ्यते कैश्चिदीश्वरः । या पिंडेप्यनुवर्तेत सा जातिरिति कथ्यते ॥१६॥
व्यक्तिर्व्यावृत्तिरूपं तं पिण्डजातेः समाश्रयम् । जातयो व्यक्तयश्चैव तदाज्ञापरिपालिताः ॥१७॥
यतस्ततो महादेवो जातिव्यक्तिवपुः स्मृतः । प्रधानपुरुषव्यक्तकालात्मा कथ्यते शिवः ॥१८॥

प्रधानं प्रकृतिं प्राहुःक्षेत्रज्ञं पुरुषं तथा । त्रयोविंशतितत्त्वानि व्यक्तमाहुर्मनीषिणः ॥१९॥
कालः कार्यप्रपञ्चस्य परिणामैककारणम् । एषामीशोऽधिपो धाता प्रवर्तकनिवर्तकः ॥२०॥
आविर्भावतिरोभावहेतुरेकः स्वराडजः । तस्मात्प्रधानपुरुषव्यक्तकालस्वरूपवान् ॥२१॥
हेतुर्नेताधिपस्तेषां धाता चोक्तो महेश्वरः । विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ॥२२॥
हिरण्यगर्भो लोकानां हेतुर्विश्वात्मको विराट् । अंतर्यामी परश्चेति कथ्यते कविभिश्शिवः ॥२३॥
प्राज्ञस्तैजसविश्वात्मेत्यपरे संप्रचक्षते । तुरीयमपरे प्राहुः सौम्यमेव परे विदुः ॥२४॥
माता मानं च मेयं च मतिं चाहुरथापरे । कर्ता क्रिया च कार्यं च करणं कारणं परे ॥२५॥
जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे संप्रचक्षते । तुरीयमपरे प्राहुस्तुर्यातीतमितीतरे ॥२६॥
तमाहुर्विगुणं केचिद्गुणवन्तं परे विदुः । केचित्संसारिणं प्राहुस्तमसंसारिणं परे ॥२७॥
स्वतंत्रमपरे प्राहुरस्वतंत्रं परे विदुः । घोरमित्यपरे प्राहुः सौम्यमेव परे विदुः ॥२८॥
रागवंतं परे प्राहुर्वीतरागं तथा परे । निष्क्रियं च परे प्राहुः सक्रियं चेतरे जनाः ॥२९॥
निरिंद्रियं परे प्राहुः सेंद्रियं च तथापरे । ध्रुवमित्यपरे प्राहुस्तमध्रुवामितीरते ॥३०॥
अरूपं केचिदाहुर्वै रूपवंतं परे विदुः । अदृश्यमपरे प्राहुर्दृश्यमित्यपरे विदुः ॥३१॥
वाच्यमित्यपरे प्राहुरवाच्यमिति चापरे । शब्दात्मकं परे प्राहुश्शब्दातीतमथापरे ॥३२॥
केचिच्चिन्तामयं प्राहुश्चिन्तया रहितं परे । ज्ञानात्मकं परे प्राहुर्विज्ञानमिति चापरे ॥३३॥
केचिज्ज्ञेयमिति प्राहुरज्ञेयमिति केचन । परमेके तमेवाहुरपरं च तथा परे ॥३४॥
एवं विकल्प्यमानं तु याथात्म्यं परमेष्ठिनः । नाध्यवस्यन्ति मुनयो नानाप्रत्ययकारणात् ॥३५॥
ये पुनस्सर्वभावेन प्रपन्नाः परमेश्वरम् । ते हि जानन्त्ययत्नेन शिवं परमकारणम् ॥३६॥
यावत्पशुर्नैव पश्यत्यनीशं पुराणं भुवनस्येशितारम् । तावद्दुःखे वर्तते बद्धपाशः संसारेऽस्मिञ्चक्रनेमिक्रमेण ॥३७॥
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदाविद्वान्पुण्यपापे विधूय निरञ्जनः परममुपैति साम्यम् ॥३८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पशुपतित्वज्ञानयोगो नाम पञ्चमोऽध्यायः ॥५॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,११५+३८=२२,१५३



## ॥ अथ षष्ठोऽध्यायः ॥

उपमन्युरुवाच ॥
न शिवस्याणवो बन्धः कार्यो मायेय एव वा । प्राकृतो वाथ बोद्धा वा ह्यहङ्कारात्मकस्तथा ॥१॥
नैवास्य मानसो बन्धो न चैत्तो नेंद्रियात्मकः । न च तन्मात्रबन्धोऽपि भूतबन्धो न कश्चन ॥२॥
न च कालः कला चैव न विद्या नियतिस्तथा । न रागो न च विद्वेषः शम्भोरमिततेजसः ॥३॥
न चास्त्यभिनिवेशोऽस्य कुशलाऽकुशलान्यपि । कर्माणि तद्विपाकश्च सुखदुःखे च तत्फले ॥४॥
आशयैर्नापि संबन्धः संस्कारैः कर्मणामपि । भोगैश्च भोगसंस्कारैः कालत्रितयगोचरैः ॥५॥
न तस्य कारणं कर्ता नादिरन्तस्तथान्तरम् । न कर्म करणं वापि नाकार्यं कार्यमेव च ॥६॥
नास्य बन्धुरबन्धुर्वा नियन्ता प्रेरकोऽपि वा । न पतिर्न गुरुस्त्राता नाधिको न समस्तथा ॥७॥
न जन्ममरणे तस्य न कांक्षितमकांक्षितम् । न विधिर्न निषेधश्च न मुक्तिर्न च बन्धनम् ॥८॥
नास्ति यद्यदकल्याणं तत्तदस्य कदाचन । कल्याणं सकलं चास्ति परमात्मा शिवो यतः ॥९॥
स शिवस्सर्वमेवेदमधिष्ठाय स्वशक्तिभिः । अप्रच्युतस्स्वतो भावः स्थितः स्थाणुरतः स्मृतः ॥१०॥
शिवेनाधिष्ठितं यस्माज्जगत्स्थावरजंगमम् । सर्वरूफ स्मृतश्शर्वस्तथा ज्ञात्वा न मुह्यति ॥११॥
शर्वो रुद्रो नमस्तस्मै पुरुषः सत्परो महान् । हिरण्यबाहुर्भगवान्हिरण्यपतिरीश्वरः ॥१२॥
अंबिकापतिरीशानः पिनाकी वृषवाहनः । एको रुद्रः परं ब्रह्म पुरुषः कृष्णपिंगलः ॥१३॥
बालाग्रमात्रो हृन्मध्ये विचिन्त्यो दहरान्तरे । हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च ॥१४॥

योऽवसर्पत्य सौ देवो नीलग्रीवो हिरण्मयः । सौम्यो घोरस्तथा मिश्रश्चाक्षारश्चामृतोऽव्ययः ॥१५॥
स पुंविशेषः परमो भगवानन्तकान्तकः । चेतनचेतनोन्मुक्तः प्रपञ्चाच्च परात्परः ॥१६॥
शिवेनातिशयत्वेन ज्ञानैश्वर्ये विलोकिते । लोकेशातिशयत्वेन स्थितं प्राहुर्मनीषिणः ॥१७॥
प्रतिसर्गप्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ॥१८॥
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः ॥१९॥
शुद्धा स्वाभाविकी तस्य शक्तिस्सर्वातिशायिनी । ज्ञानमप्रतिमं नित्यं वपुरत्यन्तनिर्मितम् ॥२०॥
ऐश्वर्यमप्रतिद्वंद्वं सुखमात्यन्तिकं बलम् । तेजःप्रभावो वीर्यं च क्षमा कारुण्यमेव च ॥२१॥
परिपूर्णस्य सर्गाद्यैर्नात्मनोऽस्ति प्रयोजनम् । परानुग्रह एवास्य फलं सर्वस्य कर्मणः ॥२२॥
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः । शिवरुद्रादिशब्दानां प्रणवो हि परस्स्मृतः ॥२३॥
शम्भो प्रणववाच्यस्य भवनात्तज्जपादपि । या सिद्धिस्सा परा प्राप्या भवत्येव न संशयः ॥२४॥
तस्मादेकाक्षरं देवमाहुरागमपारगाः । वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः ॥२५॥
अस्य मात्राः समाख्याताश्चतस्रो वेदमूर्धनि । अकारश्चाप्युकारश्च मकारो नाद इत्यपि ॥२६॥
अकारं बह्वृचं प्राहुरुकारो यजुरुच्यते । मकारः सामनादोस्य श्रुतिराथर्वणी स्मृताः ॥२७॥
अकारश्च महाबीजं रजः स्रष्टा चतुर्मुखः । उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः ॥२८॥
मकारः पुरुषो बीजं तमः संहारको हरः । नादः परः पुमानीशो निर्गुणो निष्क्रियः शिवः ॥२९॥
सर्वं तिसृभिरेवेदं मात्राभिर्निखिलं त्रिधा । अभिधाय शिवात्मानं बोधयत्यर्धमात्रया ॥३०॥
यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥३१॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवतत्त्ववर्णनं नाम षष्ठोऽध्यायः ॥६॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,१५३+३१=२२,१८४



## ॥ अथ सप्तमोऽध्यायः ॥

उपमन्युरुवाच ॥
शक्तिस्स्वाभविकी तस्य विद्या विश्वविलक्षणा । एकानेकस्य रूपेण भाति भानोरिव प्रभा ॥१॥
अनन्ताः शक्तयो यस्या इच्छाज्ञानक्रियादयः । मायाद्याश्चाभवन्वह्नेोर्विस्फुलिङ्गा यथा तथा ॥२॥
सदा शिवेश्वराद्या हि विद्याऽविद्येश्वरादयः । अभवन्पुरुषाश्चास्याः प्रकृतिश्च परात्परा ॥३॥
महदादिविशेषान्तास्त्वजाद्याश्चापि मूर्तयः । यच्चान्यदस्ति तत्सर्वं तस्याः कार्यं न संशयः ॥४॥
सा शक्तिस्सर्वगा सूक्ष्मा प्रबोधानंदरूपिणी । शक्तिमानुच्यते देवश्शिवश्शीतांशुभूषणः ॥५॥
वेद्यश्शिवश्शिवा विद्या प्रज्ञा चैव श्रुतिः स्मृतिः । धृतिरेषा स्थितिर्निष्ठा ज्ञानेच्छाकर्मशक्तयः ॥६॥
आज्ञा चैव परं ब्रह्म द्वे विद्ये च परापरे । शुद्धविद्या शुद्धकला सर्वं शक्तिकृतं यतः ॥७॥
माया च प्रकृतिर्जीवो विकारो विकृतिस्तथा । असच्च सच्च यत्किंचित्तया सर्वमिदं ततम् ॥८॥
सा देवी मायया सर्वं ब्रह्मांडं सचराचरम् । मोहयत्यप्रयत्नेन मोचयत्यपि लीलया ॥९॥
अनया सह सर्वेशः सप्तविंशप्रकारया । विश्वं व्याप्य स्थितस्तस्मान्मुक्तिरत्र प्रवर्तते ॥१०॥
मुमुक्षवः पुरा केचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसो विस्मृशंति यथातथम् ॥११॥
किं कारणं कुतो जाता जीवामः केन वा वयम् । कुत्रास्माकं संप्रतिष्ठा केन वाधिष्ठिता वयम् ॥१२॥
केन वर्तामहे शश्वत्सुखेष्वन्येषु चानिशम् । अविलंघ्या च विश्वस्य व्यवस्था केन वा कृता ॥१३॥
कालस्य भावो नियतिर्यदृच्छा नात्र युज्यते । भूतानि योनिः पुरुषो योगी चैषां परोऽथ वा ॥१४॥
अचेतनत्वात्कालादेश्चेतनत्वेपि चात्मनः । सुखदुःखानि भूतत्वादनीशत्वाद्विचार्यते ॥१५॥
तद्ध्यानयोगानुगतां प्रपश्यञ्छक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ॥१६॥
तया विच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमंतं महादेवमपश्यन्दिव्यचक्षुषा ॥१७॥

यः कारणान्यशेषाणि कालात्मसहितानि च । अप्रमेयोऽनया शक्त्या सकलं योऽधितिष्ठति ॥१८॥
ततः प्रसादयोगेन योगेन परमेण च । दृष्टेन भक्तियोगेन दिव्यः गतिमवाप्नुयुः ॥१९॥
तस्मात्सह तथा शक्त्या हृदि पश्यन्ति ये शिवम् । तेषां शाश्वतिकी शान्तिर्नैतरेषामिति श्रुतिः ॥२०॥
न हि शक्तिमतश्शक्त्या विप्रयोगोऽस्ति जातुचित् । तस्माच्छक्तेः शक्तिमतस्तादात्म्यान्निर्वृतिर्द्वयोः ॥२१॥
क्रमो विवक्षितो नूनं विमुक्तौ ज्ञानकर्मणोः । प्रसादे सति सा मूर्तिर्यस्मात्करतले स्थिता ॥२२॥
देवो वा दानवो वापि पशुर्वा विहगोऽपि वा । कीरो वाथ कृमिर्वापि मुच्यते तत्प्रसादतः ॥२३॥
गर्भस्थो जायमानो वा बालो वा तरुणोऽपि वा । वृद्धो वा म्रियमाणो वा स्वर्गस्थो वाथ नारकी ॥२४॥
पतितो वापि धर्मात्मा पंडितो मूढ एव वा । प्रसादे तत्क्षणादेव मुच्यते नात्र संशयः ॥२५॥
अयोग्यानां च कारुण्याद्भक्तानां परमेश्वरः । प्रसीदति न संदेहो विगृह्य विविधान्मलान् ॥२६॥
प्रसदादेव सा भक्तिः प्रसादो भक्तिसंभवः । अवस्थाभेदमुत्प्रेक्ष्य विद्वांस्तत्र न मुह्यति ॥२७॥
प्रसादपूर्विका येयं भुक्तिमुक्तिविधायिनी । नैव सा शक्यते प्राप्तुं नरैरेकेन जन्मना ॥२८॥
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् । विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥२९॥
प्रसन्ने सति देवेश पशौ तस्मिन्प्रवर्तते । अस्ति नाथो ममेत्यल्पा भक्तिर्बुद्धिपुरस्सरा ॥३०॥
तपसा विविधैश्शैवैर्धर्मैस्संयुज्यते नरः । तत्र योगे तदभ्यासस्ततो भक्तिः परा भवेत् ॥३१॥
परया च तया भक्त्या प्रसादो लभ्यते परः । प्रसादात्सर्वपाशेभ्यो मुक्तिर्मुक्तस्य निर्वृतिः ॥३२॥
अल्पभावोऽपि यो मर्त्यस्सोऽपि जन्मत्रयात्परम् । नयोनियंत्रपीडायै भवेन्नैवात्र संशयः ॥३३॥
साङ्गाऽनंगा च या सेवा सा भक्तिरिति कथ्यते । सा पुनर्भिद्यते त्रेधा मनोवाक्कायसाधनैः ॥३४॥
शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता । जपादिर्वाचिकी सेवा कर्मपूजादि कायिकी ॥३५॥
सेयं त्रिसाधना सेवा शिवधर्मश्च कथ्यते । स तु पञ्चविधः प्रोक्तः शिवेन परमात्मना ॥३६॥
तफ कर्म जपो ध्यानं ज्ञानं चेति समासतः । कर्मलिङ्गार्चनाद्यं च तपश्चान्द्रायणादिकम् ॥३७॥
जपस्त्रिधा शिवाभ्यासश्चिन्ता ध्यानं शिवस्य तु । शिवागमोक्तं यज्ज्ञानं तदत्र ज्ञानमुच्यते ॥३८॥
श्रीकण्ठेन शिवेनोक्तं शिवायै च शिवागमः । शिवाश्रितानां कारुण्याच्छ्रेयसामेकसाधनम् ॥३९॥
तस्माद्विवर्धयेद्भक्तिं शिवे परमकारणे । त्यजेच्च विषयासंगं श्रेयोऽर्थी मतिमान्नरः ॥४०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवतत्त्वकथनं नाम सप्तमोऽध्यायः ॥७॥
आदितः श्लोकानां समष्टयङ्काः-२२,१८४+४०=२२,२२४



## ॥ अथाष्टमोऽध्यायः ॥

कृष्ण उवाच ॥
भगवञ्छ्रोतुमिच्छामि शिवेन परिभाषितम् । वेदसारे शिवज्ञानं स्वाश्रितानां विमुक्तये ॥१॥
अभक्तानामबुद्धीनामयुक्तानामगोचरम् । अर्थैर्दशर्धैः संयुक्तं गूढमप्राज्ञनिन्दितम् ॥२॥
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् । वेदात्षडंगादुद्धृत्य सांख्याद्योगाच्च कृत्स्नशः ॥३॥
शतकोटिप्रमाणेन विस्तीर्णं ग्रंथसंख्यया । कथितं परमेशेन तत्र पूजा कथं प्रभोः ॥४॥
कस्याधिकारः पूजादौ ज्ञानयोगादयः कथम् । तत्सर्वं विस्तरादेव वक्तुमर्हसि सुव्रत ॥५॥
उपमन्युरुवाच ॥
शैवं संक्षिप्य वेदोक्तं शिवेन परिभाषितम् । स्तुतिनिंदादिरहितं सद्यः प्रत्ययकारणम् ॥६॥
गुरुप्रसादजं दिव्यमनायासेन मुक्तिदम् । कथयिष्ये समासेन तस्य शक्यो न विस्तरः ॥७॥
सिसृक्षाया पुराव्यक्ताच्छिवः स्थाणुर्महेश्वरः । सत्कार्यकारणोपेतस्स्वयमाविरभूत्प्रभुः ॥८॥
जनयामास च तदा ऋषिर्विश्वाधिकः प्रभुः । देवानां प्रथमं देवं ब्रह्माणं ब्रह्मणस्पतिम् ॥९॥
ब्रह्मापि पितरं देवं जायमानं न्यवैक्षत । तं जायमानं जनको देवः प्रापश्यदाज्ञया ॥१०॥
दृष्टो रुद्रेण देवोऽसावसृजद्विश्वमीश्वरः । वर्णाश्रमव्यवस्थां च चकार स पृथक्पृथक् ॥११॥

सोमं ससर्ज यज्ञार्थे सोमाद्द्यौस्समजायत । धरा च वह्निः सूर्यश्च यज्ञो विष्णुश्शचीपतिः ॥१२॥
ते चान्ये च सुरा रुद्रं रुद्राध्यायेन तुष्टुवुः । प्रसन्नवदनस्तस्थौ देवानामग्रतः प्रभुः ॥१३॥
अपहृत्य स्वलीलार्थं तेषां ज्ञानं महेश्वरः । तमपृच्छंस्ततो देवाः को भवानिति मोहिताः ॥१४॥
सोऽब्रवीद्भगवान्रुद्रो ह्यहमेकः पुरातनः । आसं प्रथममेवाहं वर्तामि च सुरोत्तमाः ॥१५॥
भविष्यामि च मत्तोन्यो व्यतिरिक्तो न कश्चन । अहमेव जगत्सर्वं तर्पयामि स्वतेजसा ॥१६॥
मत्तोऽधिकः समो नास्ति मां यो वेद स मुच्यते । इत्युक्त्वा भगवान्रुद्रस्तत्रैवान्तरधत्त स ॥१७॥
अपश्यन्तस्तमीशानं स्तुवंतश्चैव सामभिः । व्रतं पाशुपतं कृत्वा त्वथर्वशिरसि स्थितम् ॥१८॥
भस्मसंछन्नसर्वाङ्गा बभूवुरमरास्तदा । अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ॥१९॥
सगणश्चोमया सार्धं सान्निध्यमकरोत्प्रभुः । यं विनिद्रा जितश्वासा योगिनो दग्धकिल्बिषाः ॥२०॥
हृदि पश्यन्ति तं देवं ददृशुर्देवपुंगवाः । यामाहुः परमां शक्तिमीश्वरेच्छानुवर्तिनीम् ॥२१॥
तामपश्यन्महेशस्य वामतो वामलोचनाम् । ये विनिर्धूतसंसाराः प्राप्ताः शैवं परं पदम् ॥२२॥
नित्यसिद्धाश्च ये वान्यं ते च दृष्टा गणेश्वराः । अथ तं तुष्टुवुर्देवा देव्या सह महेश्वरम् ॥२३॥
स्तोत्रैर्माहेश्वरैर्दिव्यैः श्रोतैः पौराणिकैरपि । देवोऽपि देवानालोक्य घृणया वृषभध्वजः ॥२४॥
तुष्टोऽस्मीत्याह सुप्रीतस्स्वभावमधुरां गिरम् । अथ सुप्रीतमनसं प्रणिपत्य वृषध्वजम् ॥
अर्थमहत्तमं देवाः पप्रच्छुरिममादरात् ॥२५॥

देवा ऊचुः ॥

भगवन्केन मार्गेण पूजनीयोऽसि भूतले । कस्याधिकारः पूजायां वक्तुमर्हसि तत्त्वतः ॥२६॥
ततः सस्मितमालोक्य देवीं देववरोहरः । स्वरूपं दर्शयामास घोरं सूर्यात्मकं परम् ॥२७॥
सर्वैश्वर्यगुणोपेतं सर्वतेजोमयं परम् । शक्तिभिर्मूर्तिभिश्चाङ्गैर्ग्रहैर्देवैश्च संवृतम् ॥२८॥
अष्टबाहुं चतुर्वक्त्रमर्धनारीकमद्भुतम् । दृष्ट्वैवमद्भुताकारं देवा विष्णुपुरोगमाः ॥२९॥
बुद्ध्वा दिवाकरं देवं देवीं चैव निशाकरम् । पञ्चभूतानि शेषाणि तन्मयं च चराचरम् ॥
एवमुक्त्वा नमश्चक्रुस्तस्मै चार्घ्यं प्रदाय वै ॥३०॥
सिंदूरवर्णाय सुमण्डलाय सुवर्णवर्णाभरणाय तुभ्यम् । पद्माभनेत्राय सपंकजाय ब्रह्मेन्द्रनारायणकारणाय ॥३१॥
सुरत्नपूर्णं ससुवर्णतोयं सकुंकुमाद्यं सकुशं सपुष्पम् । प्रदत्तमादाय सहेमपात्रं प्रशस्तमर्घ्यं भगवन्प्रसीद ॥३२॥
नमश्शिवाय शान्ताय सगणायादिहेतवे । रुद्राय विष्णवे तुभ्यं ब्रह्मणे सूर्यमूर्तये ॥३३॥
यश्शिवं मण्डले सौरे संपूज्यैव समाहितः । प्रातर्मध्याह्नसायाह्ने प्रदद्यादर्घ्यमुत्तमम् ॥३४॥
प्रणमेद्वा पठेदेताञ्छ्लोकाञ्छ्रुतिमुखानिमान् । न तस्य दुर्लभं किञ्चिद्भक्तश्चेन्मुच्यते दृढम् ॥३५॥
तस्मादभ्यर्चयेनित्यं शिवमादित्यरूपिणम् । धर्मकामार्थमुक्त्यर्थं मनसा कर्मणा गिरा ॥३६॥
अथ देवान्समालोक्य मण्डलस्थो महेश्वरः । सर्वागमोत्तरं दत्त्वा शास्त्रमंतरधाद्धरः ॥३७॥
तत्र पूजाधिकारोऽयं ब्रह्मक्षत्रविशामिति । ज्ञात्वा प्रणम्य देवेशं देवा जग्मुर्यथागतम् ॥३८॥
अथ कालेन महता तस्मिञ्छास्त्रे तिरोहिते । भर्तारं परिपप्रच्छ तदंकस्था महेश्वरी ॥३९॥
तया स चोदितो देवो देव्या चन्द्रविभूषणः । अवदत्करमुद्धृत्य शास्त्रं सर्वागमोत्तरम् ॥४०॥
प्रवर्तितं च तल्लोके नियोगात्परमेष्ठिनः । मयागस्त्येन गुरुणा दधीचेन महर्षिणा ॥४१॥
स्वयमप्यवतीर्योर्व्यां युगावर्तेषु शूलधृक् । स्वाश्रितानां विमुक्त्यर्थं कुरुते ज्ञानसन्ततिम् ॥४२॥
ऋभुस्सत्यो भार्गवश्च ह्यंगिराः सविता द्विजाः । मृत्युः शतक्रतुर्धीमान्वसिष्ठो मुनिपुंगवः ॥४३॥
सारस्वतस्त्रिधामा च त्रिवृतो मुनिपुंगवः । शततेजास्स्वयं धर्मो नारायण इति श्रुतः ॥४४॥
स्वरक्षश्चारुणिर्धीमांस्तथा चैव कृतंजयः । कृतंजयो भरद्वाजो गौतमः कविरुत्तमः ॥४५॥
वाचःस्रवा मुनिस्साक्षात्तथा सूक्ष्मायणिः शुचिः । तृणबिंदुर्मुनिः कृष्णः शक्तिः शाक्तेय उत्तरः ॥४६॥
जातूकर्ण्यो हरिस्साक्षात्कृष्णद्वैपायनो मुनिः । व्यासावताराञ्छृण्वंतु कल्पयोगेश्वरान्क्रमात् ॥४७॥
लैंगे व्यासावतारा हि द्वापरां तेषु सुव्रताः । योगाचार्यावताराश्च तथा शिष्येषु शूलिनः ॥४८॥
तत्र तत्र विभोः शिष्याश्चत्वारः स्युर्महौजसः । शिष्यास्तेषां प्रशिष्याश्च शतशोऽथ सहस्रशः ॥४९॥

तेषां संभावनाल्लोके शैवाज्ञाकरणादिभिः । भाग्यवंतो विमुच्यन्ते भक्त्या चात्यन्तभाविताः ॥५०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवतत्त्वज्ञाने व्यासावतारवर्णनं नामाष्टमोऽध्यायः ॥८॥
आदितः श्लोकानां समष्टयङ्काः-२२,२२४+५०=२२,२७४



## ॥ अथ नवमोऽध्यायः ॥

कृष्ण उवाच ॥
युगावर्तेषु सर्वेषु योगाचार्यच्छलेन तु । अवतारान्हि शर्वस्य शिष्यांश्च भगवन्वद ॥१॥
उपमन्युरुवाच ॥
श्वेतः सुतारो मदनः सुहोक्त कङ्क एव च । लौंगाक्षिश्च महामायो जैगीषव्यस्तथैव च ॥२॥
दधिवाहश्च ऋषभो मुनिरुग्रोऽत्रिरेव च । सुपालको गौतमश्च तथा वेदशिरा मुनिः ॥३॥
गोकर्णश्च गुहावासी शिखण्डी चापरः स्मृतः । जटामाली चाट्टहासो दारुको लाङ्गुली तथा ॥४॥
महाकालश्च शूली च डंडी मुण्डीश एव च । सविष्णुस्सोमशर्मा च लकुलीश्वर एव च ॥५॥
एते वाराह कल्पेऽस्मिन्सप्तमस्यान्तरो मनोः । अष्टाविंशतिसंख्याता योगाचार्या युगक्रमात् ॥६॥
शिष्याः प्रत्येकमेतेषां चत्वारश्शान्तचेतसः । श्वेतादयश्च रुष्यान्तांस्तान्ब्रवीमि यथाक्रमम् ॥७॥
श्वेतश्श्वेतशिखश्चैव श्वेताश्वः श्वेतलोहितः । दुन्दुभिश्शतरूपश्च ऋचीकः केतुमांस्तथा ॥८॥
विकोशश्च विकेशश्च विपाशः पाशनाशनः । सुमुखो दुर्मुखश्चैव दुर्गमो दुरतिक्रमः ॥९॥
सनत्कुमारस्सनकः सनंदश्च सनातनः । सुधामा विरजाश्चैव शंखश्चांडज एव च ॥१०॥
सारस्वतश्च मेघश्च मेघवाहस्सुवाहकः । कपिलश्चासुरिः पञ्चशिखो बाष्कल एव च ॥११॥
पराशराश्च गर्गश्च भार्गवश्चांगिरास्तथा । बलबन्धुर्निरामित्राः केतुशृंगस्तपोधनः ॥१२॥
लंबोदरश्च लंबश्च लम्बात्मा लंबकेशकः । सर्वज्ञस्समबुद्धिश्च साध्यसिद्धिस्तथैव च ॥१३॥
सुधामा कश्यपश्चैव वसिष्ठो विरजास्तथा । अत्रिरुग्रो गुरुश्रेष्ठः श्रवनोथ श्रविष्टकः ॥१४॥
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः । काश्यपो ह्युशनाश्चैव च्यवनश्च बृहस्पतिः ॥१५॥
उतथ्यो वामदेवश्च महाकालो महाऽनिलः । वाचःश्रवाः सुवीरश्च श्यावकश्च यतीश्वरः ॥१६॥
हिरण्यनाभः कौशल्यो लोकाक्षिः कुथुमिस्तथा । सुमन्तुर्जैमिनिश्चैव कुबन्धः कुशकन्धरः ॥१७॥
प्लक्षो दार्भायणिश्चैव केतुमान्गौतमस्तथा । भल्लवी मधुपिंगश्च श्वेतकेतुस्तथैव च ॥१८॥
उशिजो बृहदश्वश्च देवलः कविरेव च । शालिहोत्रः सुवेषश्च युवनाश्वः शरद्वसुः ॥१९॥
अक्षपादः कणादश्च उलूको वत्स एव च । कुलिकश्चैव गर्गश्च मित्रको रुष्य एव च ॥२०॥
एते शिष्या महेशस्य योगाचार्यस्वरूपिणः । संख्या च शतमेतेषां सह द्वादशसंख्यया ॥२१॥
सर्वे पाशुपताः सिद्धा भस्मोद्धूलितविग्रहाः । सर्वशास्त्रार्थतत्त्वज्ञा वेदवेदाङ्गपारगाः ॥२२॥
शिवाश्रमरतास्सर्वे शिवज्ञानपरायणाः । सर्वे संगविनिर्मुक्ताः शिवैकासक्तचेतसः ॥२३॥
सर्वद्वंद्वसहा धीराः सर्वभूतहिते रताः । ऋजवो मृदवः स्वस्था जितक्रोधा जितेन्द्रियाः ॥२४॥
रुद्राक्षमालाभरणास्त्रिपुण्ड्रांकितमस्तकाः । शिखाजटास्सर्वजटा अजटा मुंडशीर्षकाः ॥२५॥
फलमूलाशनप्रायाः प्राणायामपरायणाः । शिवाभिमानसंपन्नाः शिवध्यानैकतत्पराः ॥२६॥
समुन्मथितसंसारविषवृक्षाङ्कुरोद्गमाः । प्रयातुमेव सन्नद्धाः परं शिवपुरं प्रति ॥२७॥
सदेशिकानिमान्मत्वा नित्यं यश्शिवमर्चयेत् । स याति शिवसायुज्यं नात्र कार्या विचारणा ॥२८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवस्य योगावतारवर्णनं नाम नवमोऽध्यायः ॥९॥
आदितः श्लोकानां समष्टयङ्काः-२२,२७४+२८=२२,३०२



## ॥ अथ दशमोऽध्यायः ॥

कृष्ण उवाच॥
भगवन्सर्वयोगीन्द्र गणेश्वर मुनीश्वर । षडाननसमप्रख्य सर्वज्ञाननिधे गुरो ॥१॥
प्रायस्त्वमवतीर्योर्व्यां पाशविच्छित्तये नृणाम् । महर्षिवपुरास्थाय स्थितोऽसि परमेश्वर ॥२॥
अन्यथा हि जगत्यस्मिन् देवो वा दानवोऽपि वा । त्वत्तोन्यः परमं भावं को जानीयाच्छिवात्मकम् ॥३॥
तस्मात्तव मुखोद्गीर्णं साक्षादिव पिनाकिनः । शिवज्ञानामृतं पीत्वा न मे तृप्तमभून्मनः ॥४॥
साक्षात्सर्वजगत्कर्तुर्भर्तुरङ्कं समाश्रिता । भगवन्किन्नु पप्रच्छ भर्तारं परमेश्वरी ॥५॥
उपमन्युरुवाच॥
स्थाने पृष्टं त्वया कृष्ण तद्वक्ष्यामि यथातथम् । भवभक्तस्य युक्तस्य तव कल्याणचेतसः ॥६॥
महीधरवरे दिव्ये मंदरे चारुकंदरे । देव्या सह महादेवो दिव्यो ध्यानगतोऽभवत् ॥७॥
तदा देव्याः प्रियसखी सुस्मितास्या शुभावती । फुल्लान्यतिमनोज्ञानि पुष्पाणि समुदाहरत् ॥८॥
ततः स्वमंकमारोप्य देवीं देववरोरहः । अलंकृत्य च तैः पुष्पैरास्ते हृष्टतरः स्वयम् ॥९॥
अथान्तःपुरचारिण्यो देव्यो दिव्यविभूषणाः । अंतरङ्गा गणेन्द्राश्च सर्वलोकमहेश्वरीम् ॥१०॥
भर्तारं परिपूर्णं च सर्वलोकमहेश्वरम् । चामरासक्तहस्ताश्च देवीं देवं सिषेविरे ॥११॥
ततः प्रियाः कथा वृत्ता विनोदाय महेशयोः । त्राणाय च नृणां लोके ये शिवं शरणं गताः ॥१२॥
तदावसरमालोक्य सर्वलोकमहेश्वरी । भर्तारं परिपप्रच्छ सर्वलोकमहेश्वरम् ॥१३॥
देव्युवाच॥
केन वश्यो महादेवो मर्त्यानां मंदचेतसाम् । आत्मतत्त्वाद्यशक्तानामात्मनामकृतात्मनाम् ॥१४॥
ईश्वर उवाच॥
न कर्मणा न तपसा न जपैर्नासनादिभिः । न ज्ञानेन न चान्येन वश्यो ऽहं श्रद्धया विना ॥१५॥
श्रद्धा मय्यस्ति चेत्पुंसां येन केनापि हेतुना । वश्यः स्पृश्यश्च दृश्यश्च पूज्यस्संभाष्य एव च ॥१६॥
साध्या तस्मान्मयि श्रद्धा मां वशीकर्तुमिच्छता । श्रद्धा हेतुस्स्वधर्मस्य रक्षणं वर्णिनामिह ॥१७॥
स्ववर्णाश्रमधर्मेण वर्तते यस्तु मानवः । तस्यैव भवति श्रद्धा मयि नान्यस्य कस्यचित् ॥१८॥
आम्नायसिद्धमखिलं धर्ममाश्रमिणामिह । ब्रह्मणा कथितं पूर्वं ममैवाज्ञापुरस्सरम् ॥१९॥
स तु पैतामहो धर्मो बहुवित्तक्रियान्वितः । नात्यन्त फलभूयिष्ठः क्लेशाया ससमन्वितः ॥२०॥
तेन धर्मेण महतां श्रद्धां प्राप्य सुदुर्लभाम् । वर्णिनो ये प्रपद्यंते मामनन्यसमाश्रयाः ॥२१॥
तेषां सुखेन मार्गेण धर्मकामार्थमुक्तयः । वर्णाश्रमसमाचारो मया भूयः प्रकल्पितः ॥२२॥
तस्मिन्भक्तिमतामेव मदीयानां तु वर्णिनाम् । अधिकारो न चान्येषामित्याज्ञा नैष्ठिकी मम ॥२३॥
तदाज्ञप्तेन मार्गेण वर्णिनो मदुपाश्रयाः । मलमायादिपाशेभ्यो विमुक्ता मत्प्रसादतः ॥२४॥
परं मदीयमासाद्य पुनरावृत्तिदुर्लभम् । परमं मम साधर्म्यं प्राप्य निर्वृतिमाययुः ॥२५॥
तस्माल्लब्ध्वाप्यलब्ध्वा वा वर्णधर्मं मयेरितम् । आश्रित्य मम भक्तश्चेत्स्वात्मनात्मानमुद्धरेत् ॥२६॥
अलब्धलाभ एवैष कोटिकोटिगुणाधिकः । तस्मान्मे मुखतो लब्धं वर्णधर्मं समाचरेत् ॥२७॥
ममावतारा हि शुभे योगाचार्यच्छलेन तु । सर्वांतरेषु सन्त्यार्ये सन्ततिश्च सहस्रशः ॥२८॥
अयुक्तानामबुद्धीनामभक्तानां सुरेश्वरि । दुर्लभं सन्ततिज्ञानं ततो यत्नात्समाश्रयेत् ॥२९॥
सा हानिस्तन्महच्छिद्रं स मोहस्सांधमूकता । यदन्यत्र श्रमं कुर्यान्मोक्षमार्गबहिष्कृतः ॥३०॥
ज्ञानं क्रिया च चर्या च योगश्चेति सुरेश्वरि । चतुष्पादः समाख्यातो मम धर्मस्सनातनः ॥३१॥
पशुपाशपतिज्ञानं ज्ञानमित्यभिधीयते । षडध्वशुद्धिर्विधिना गुर्वधीना क्रियोच्यते ॥३२॥
वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च । ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते ॥३३॥
मदुक्तेनैव मार्गेण मय्यवस्थितचेतसः । वृत्त्यन्तरनिरोधो यो योग इत्यभिधीयते ॥३४॥
अश्वमेधगणाच्छ्रेष्ठं देवि चित्तप्रसाधनम् । मुक्तिदं च तथा ह्येतद्दुष्प्राप्यं विषयैषिणाम् ॥३५॥
विजितेन्द्रियवर्गस्य यमेन नियमेन च । पूर्वपापहरो योगो विरक्तस्यैव कथ्यते ॥३६॥
वैराग्याज्जायते ज्ञानं ज्ञानाद्योगः प्रवर्तते । योगज्ञः पतितो वापि मुच्यते नात्र संशयः ॥३७॥

दया कार्याथ सततमहिंसा ज्ञानसंग्रहः । सत्यमस्तेयमास्तिक्यं श्रद्धा चेंद्रियनिग्रहः ॥३८॥
अध्यापनं चाध्ययनं यजनं याजनं तथा । ध्यानमीश्वरभावश्च सततं ज्ञानशीलता ॥३९॥
य एवं वर्तते विप्रो ज्ञानयोगस्य सिद्धये । अचिरादेव विज्ञानं लब्ध्वा योगं च विंदति ॥४०॥
दग्ध्वा देहमिमं ज्ञानी क्षणाज्ज्ञानाग्निना प्रिये । प्रसादान्मम योगज्ञः कर्मबन्धं प्रहास्यति ॥४१॥
पुण्यःपुण्यात्मकं कर्ममुक्तेस्तत्प्रतिबन्धकम् । तस्मान्नियोगतो योगी पुण्यापुण्यं विवर्जयेत् ॥४२॥
फलकामनया कर्मकरणात्प्रतिबध्यते । न कर्ममात्रकरणात्तस्मात्कर्मफलं त्यजेत् ॥४३॥
प्रथमं कर्मयज्ञेन बहिः सम्पूज्य मां प्रिये । ज्ञानयोगरतो भूत्वा पश्चाद्योगं समभ्यसेत् ॥४४॥
विदिते मम याथात्म्ये कर्मयज्ञेन देहिनः । न यजंति हि मां युक्ताः समलोष्टाश्मकांचनाः ॥४५॥
नित्ययुक्तो मुनिः श्रेष्ठो मद्भक्तश्च समाहितः । ज्ञानयोगरतो योगी मम सायुज्यमाप्नुयात् ॥४६॥
अथाविरक्तचित्ता ये वर्णिनो मदुपाश्रिताः । ज्ञानचर्याक्रियास्वेव तेऽधिकुर्युस्तदर्हकाः ॥४७॥
द्विधा मत्पूजनं ज्ञेयं बाह्यमाभ्यन्तरं तथा । वाङ्मनःकायभेदाच्च त्रिधा मद्भजनं विदुः ॥४८॥
तफ कर्म जपो ध्यानं ज्ञानं वेत्यनुपूर्वशः । पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ॥४९॥
अन्यात्मविदितं बाह्यमस्मदभ्यर्चनादिकम् । तदेव तु स्वसंवेद्यमाभ्यन्तरमुदाहृतम् ॥५०॥
मनोमत्प्रवणं चित्तं न मनोमात्रमुच्यते । मन्नामनिरता वाणी वाङ्मता खलु नेतरा ॥५१॥
लिङ्गैर्मच्छासनादिष्टैस्त्रिपुण्ड्रादिभिरंकितः । ममोपचारनिरतः कायः कायो न चेतरः ॥५२॥
मदर्चाकर्म विज्ञेयं बाह्ये यागादिनोच्यते । मदर्थे देहसंशोषस्तफ कृच्छादि नो मतम् ॥५३॥
जफ पञ्चाक्षराभ्यासः प्रणवाभ्यास एव च । रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम् ॥५४॥
ध्यानम्मद्रूपचिन्ताद्यं नात्माद्यर्थसमाधयः । ममागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम् ॥५५॥
बाह्ये वाभ्यन्तरे वाथ यत्र स्यान्मनसो रतिः । प्राग्वासनावशाद्देवि तत्त्वनिष्ठां समाचरेत् ॥५६॥
बाह्यादाभ्यन्तरं श्रेष्ठं भवेच्छतगुणाधिकम् । असंकरत्वाद्दोषाणां दृष्टानामप्यसम्भवात् ॥५७॥
शौचमाभ्यन्तरं विद्यान्न बाह्यं शौचमुच्यते । अंतः शौचविमुक्तात्मा शुचिरप्यशुचिर्यतः ॥५८॥
बाह्यमाभ्यन्तरं चैव भजनं भवपूर्वकम् । न भावरहितं देवि विप्रलंभैककारणम् ॥५९॥
कृतकृत्यस्य पूतस्य मम किं क्रियते नरैः । बहिर्वाभ्यन्तरं वाथ मया भावो हि गृह्यते ॥६०॥
भावैकात्मा क्रिया देवि मम धर्मस्सनातनः । मनसा कर्मणा वाचा ह्यनपेक्ष्य फलं क्वचित् ॥६१॥
फलोद्देशेन देवेशि लघुर्मम समाश्रयः । फलार्थी तदभावे मां परित्यक्तुं क्षमो यतः ॥६२॥
फलार्थिनोऽपि यस्यैव मयि चित्तं प्रतिष्ठितम् । भावानुरूपफलदस्तस्याप्यहमनिन्दिते ॥६३॥
फलानपेक्षया येषां मनो मत्प्रवणं भवेत् । प्रार्थयेयुः फलं पश्चाद्भक्तास्तेऽपि मम प्रियाः ॥६४॥
प्राक्संस्कारवशादेव ये विचिन्तय फलाफले । विवशा मां प्रपद्यंते मम प्रियतमा मताः ॥६५॥
मल्लाभान्न परो लाभस्तेषामस्ति यथातथम् । ममापि लाभस्तल्लाभान्नापरः परमेश्वरि ॥६६॥
मदनुग्रहतस्तेषां भावो मयि समर्पितः । फलं परमनिर्वाणं प्रयच्छति बलादिव ॥६७॥
महात्मनामनन्यानां मयि संन्यस्तचेतसाम् । अष्टधा लक्षणं प्राहुर्मम धर्माधिकारिणाम् ॥६८॥
मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् । स्वयमभ्यर्चनं चैव मदर्थे चाङ्गचेष्टितम् ॥६९॥
मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रियाः । ममानुस्मरणं नित्यं यश्च मामुपजीवति ॥७०॥
एवमष्टविधं चिह्नं यस्मिन्म्लेच्छेऽपि वर्तते । स विप्रेन्द्रो मुनिः श्रीमान्स यतिस्स च पंडितः ॥७१॥
न मे प्रियश्चतुर्वेदी मद्भक्तो श्वपचोऽपि यः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥७२॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥७३॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवभक्तिवर्णनं नाम दशमोऽध्यायः ॥१०॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,३०२+७३=२२,३७५



## ॥ अथैकादशोऽध्यायः ॥

ईश्वर उवाच ॥
अथ वक्ष्यामि देवेशि भक्तानामधिकारिणाम् । विदुषां द्विजमुख्यानां वर्णधर्मसमासतः ॥१॥
त्रिः स्नानं चाग्निकार्यं च लिङ्गार्चनमनुक्रमम् । दानमीश्वरभावश्च दया सर्वत्र सर्वदा ॥२॥
सत्यं सन्तोषमास्तिक्यमहिंसा सर्वजन्तुषु । ह्रीश्रद्धाध्ययनं योगस्सदाध्यापनमेव च ॥३॥
व्याख्यानं ब्रह्मचर्यं च श्रवणं च तपः क्षमा । शौचं शिखोपवीतं च उष्णीषं चोत्तरीयकम् ॥४॥
निषिद्धासेवनं चैव भस्मरुद्राक्षधारणम् । पर्वण्यभ्यर्चनं देवि चतुर्दश्यां विशेषतः ॥५॥
पानं च ब्रह्मकूर्चस्य मासि मासि यथाविधि । अभ्यर्चनं विशेषेण तेनैव स्नाप्य मां प्रिये ॥६॥
सर्वक्रियान्नसन्त्यागः श्रद्धान्नस्य च वर्जनम् । तथा पर्युषितान्नस्य यावकस्य विशेषतः ॥७॥
मद्यस्य मद्यगन्धस्य नैवेद्यस्य च वर्जनम् । सामान्यं सर्ववर्णानां ब्राह्मणानां विशेषतः ॥८॥
क्षमा शान्तिश्च सन्तोषस्सत्यमस्तेयमेव च । ब्रह्मचर्यं मम ज्ञानं वैराग्यं भस्मसेवनम् ॥९॥
सर्वसंगनिवृत्तिश्च दशैतानि विशेषतः । लिङ्गानि योगिनां भूयो दिवा भिक्षाशनं तथा ॥१०॥
वानप्रस्थाश्रमस्थानां समानमिदमिष्यते । रात्रौ न भोजनं कार्यं सर्वेषां ब्रह्मचारिणाम् ॥११॥
अध्यापनं याजनं च क्षत्रियस्याप्रतिग्रहः । वैश्यस्य च विशेषेण मया नात्र विधीयते ॥१२॥
रक्षणं सर्ववर्णानां युद्धे शत्रुवधस्तथा । दुष्टपक्षिमृगाणां च दुष्टानां शातनं नृणाम् ॥१३॥
अविश्वासश्च सर्वत्र विश्वासो मम योगिषु । स्त्रीसंसर्गश्च कालेषु चमूरक्षणमेव च ॥१४॥
सदा सञ्चारितैश्चारैर्लोकवृत्तान्तवेदनम् । सदास्त्रधारणं चैव भस्मकंचुकधारणम् ॥१५॥
राज्ञां ममाश्रमस्थानामेष धर्मस्य संग्रहः । गोरक्षणं च वाणिज्यं कृषिर्वैश्यस्य कथ्यते ॥१६॥
शुश्रूषेतरवर्णानां धर्मः शूद्रस्य कथ्यते । उद्यानकरणं चैव मम क्षेत्रसमाश्रयः ॥१७॥
धर्मपत्न्यास्तु गमनं गृहस्थस्य विधीयते । ब्रह्मचर्यं वनस्थानां यतीनां ब्रह्मचारिणाम् ॥१८॥
स्त्रीणां तु भर्तृशुश्रूषा धर्मो नान्यस्सनातनः । ममार्चनं च कल्याणि नियोगो भर्तुरस्ति चेत् ॥१९॥
या नारी भर्तृशुश्रूषां विहाय व्रततत्परा । सा नारी नरकं याति नात्र कार्या विचारणा ॥२०॥
अथ भर्तृविहीनाया वक्ष्ये धर्मं सनातनम् । व्रतं दानं तपः शौचं भूशय्यानक्तभोजनम् ॥२१॥
ब्रह्मचर्यं सदा स्नानं भस्मना सलिलेन वा । शान्तिर्मौनं क्षमा नित्यं संविभागो यथाविधि ॥२२॥
अष्टाभ्यां च चतुर्दश्यां पौर्णमास्यां विशेषतः । एकादश्यां च विधिवदुपवासोममार्चनम् ॥२३॥
इति संक्षेपतः प्रोक्तो मयाश्रमनिषेविणाम् । ब्रह्मक्षत्रविशां देवि यतीनां ब्रह्मचारिणाम् ॥२४॥
तथैव वानप्रस्थानां गृहस्थानां च सुन्दरि । शूद्राणामथ नारीणां धर्म एष सनातनः ॥२५॥
ध्येयस्त्वयाहं देवेशि सदा जाप्यः षडक्षरः । वेदोक्तमखिलं धर्ममिति धर्मार्थसंग्रहः ॥२६॥
अथ ये मानवा लोके स्वेच्छया धृतविग्रहाः । भावातिशयसंपन्नाः पूर्वसंस्कारसंयुताः ॥२७॥
विरक्ता वानुरक्ता वा स्त्र्यादीनां विषयेष्वपि । पापैर्न ते विलिंपंते पद्मपत्रमिवांभसा ॥२८॥
तेषां ममात्मविज्ञानं विशुद्धानां विवेकिनाम् । मत्प्रसादाद्विशुद्धानां दुःखमाश्रमरक्षणात् ॥२९॥
नास्ति कृत्यमकृत्यं च समाधिर्वा परायणम् । न विधिर्न निषेधश्च तेषां मम यथा तथा ॥३०॥
तथेह परिपूर्णस्य साध्यं मम न विद्यते । तथैव कृतकृत्यानां तेषामपि न संशयः ॥३१॥
मद्भक्तानां हितार्थाय मानुषं भावमाश्रिताः । रुद्रलोकात्परिभ्रष्टास्ते रुद्रा नात्र संशयः ॥३२॥
ममानुशासनं यद्वद्ब्रह्मादीनां प्रवर्तकम् । तथा नराणामन्येषां तन्नियोगः प्रवर्तकः ॥३३॥
ममाज्ञाधारभावेन सद्भावातिशयेन च । तदालोकनमात्रेण सर्वपापक्षयो भवेत् ॥३४॥
प्रत्ययाश्च प्रवर्तंते प्रशस्तफलसूचकाः । मयि भाववतां पुंसां प्रागदृष्टार्थगोचराः ॥३५॥
कंपस्वेदोऽश्रुपातश्च कण्ठे च स्वरविक्रिया । आनंदाद्युपलब्धिश्च भवेदाकस्मिकी मुहुः ॥३६॥
स तैर्व्यस्तैस्समस्तैर्वा लिङ्गैरव्यभिचारिभिः । मंदमध्योत्तमैर्भावैर्विज्ञेयास्ते नरोत्तमाः ॥३७॥
यथायोग्निसमावेशान्नायो भवति केवलम् । स तथैव मम सान्निध्यान्न ते केवलमानुषाः ॥३८॥
हस्तपादादिसाधर्म्याद्रुद्रान्मर्त्यवपुर्धरान् । प्राकृतानिव मन्वानो नावजानीत पंडितः ॥३९॥
अवज्ञानं कृतं तेषु नरैर्व्यामूढचेतनैः । आयुः श्रियं कुलं शीलं हित्वा निरयमावहेत् ॥४०॥

ब्रह्मविष्णुसुरेशानामपि तूलायते पदम् । मत्तोन्यदनपेक्षाणामुद्धृतानां महात्मनाम् ॥४१॥
अशुद्धं बौद्धमैश्वर्यं प्राकृतं पौरुषं तथा । गुणेशानामतस्त्याज्यं गुणातीतपदैषिणाम् ॥४२॥
अथ किं बहुनोक्तेन श्रेयः प्राप्त्यैकसाधनम् । मयि चित्तसमासंगो येन केनापि हेतुना ॥४३॥
उपमन्युरुवाच ॥
इत्थं श्रीकण्ठनाथेन शिवेन परमात्मना । हिताय जगतामुक्तो ज्ञानसारार्थसंग्रहः ॥४४॥
विज्ञानसंग्रहस्यास्य वेदशास्त्राणि कृत्स्नशः । सेतिहासपुराणानि विद्या व्याख्यानविस्तरः ॥४५॥
ज्ञानं ज्ञेयमनुष्ठेयमधिकारोऽथ साधनम् । साध्यं चेति षडर्थानां संग्रहत्वेष संग्रहः ॥४६॥
गुरोरधिकृतं ज्ञानं ज्ञेयं पाशः पशुः पतिः । लिङ्गार्चनाद्यनुष्ठेयं भक्तस्त्वधिकृतोऽपि यः ॥४७॥
साधनं शिवमन्त्राद्यं साध्यं शिवसमानता । षडर्थसंग्रहस्यास्य ज्ञानात्सर्वज्ञतोच्यते ॥४८॥
प्रथमं कर्म यज्ञादेर्भक्त्या वित्तानुसारतः । बाह्येऽभ्यर्च्य शिवं पश्चादंतर्यागरतो भवेत् ॥४९॥
रतिरभ्यन्तरे यस्य न बाह्ये पुण्यगौरवात् । न कर्म करणीयं हि बहिस्तस्य महात्मनाः ॥५०॥
ज्ञानामृतेन तृप्तस्य भक्त्या शैव शिवात्मनः । नान्तर्न च बहिः कृष्ण कृत्यमस्ति कदाचन ॥५१॥
तस्मात्क्रमेण सन्त्यज्य बाह्यमाभ्यन्तरं तथा । ज्ञानेन ज्ञेयमालोक्याज्ञानं चापि परित्यजेत् ॥५२॥
नैकाग्रं चेच्छिवे चित्तं किं कृतेनापि कर्मणा । एकाग्रमेव चेच्चित्तं किं कृतेनापि कर्मणा ॥५३॥
तस्मात्कर्माण्यकृत्वा वा कृत्वा वान्तर्बहिःक्रमात् । येन केनाप्युपायेन शिवे चित्तं निवेशयेत् ॥५४॥
शिवे निविष्टचित्तानां प्रतिष्ठितधियां सताम् । परत्रेह च सर्वत्र निर्वृतिः परमा भवेत् ॥५५॥
इहोन्नमः शिवायेति मन्त्रेणानेन सिद्धयः । स तस्मादधिगंतव्यः परावरविभूतये ॥५६॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवज्ञानवर्णनं नामैकादशोऽध्यायः ॥११॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,३७५+५६=२२,४३१



## ॥ अथ द्वादशोऽध्यायः ॥

श्रीकृष्ण उवाच ॥
महर्षिवर सर्वज्ञ सर्वज्ञानमहोदधे । पञ्चाक्षरस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥१॥
उपमन्युरुवाच ॥
पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि । अशक्यं विस्तराद्वक्तुं तस्मात्संक्षेपतः शृणु ॥२॥
वेदे शिवागमे चायमुभयत्र षडक्षरेः । सर्वेषां शिवभक्तानामशेषार्थसाधकः ॥३॥
तदल्पाक्षरमर्थाढ्यं वेदसारं विमुक्तिदम् । आज्ञासिद्धमसंदिग्धं वाक्यमेतच्छिवात्मकम् ॥४॥
नानासिद्धियुतं दिव्यं लोकचित्तानुरंजकम् । सुनिश्चितार्थं गंभीरं वाक्यं तत्पारमेश्वरम् ॥५॥
मन्त्रं सुखमुकोच्चार्यमशेषार्थप्रसिद्धये । प्राहोन्नमः शिवायेति सर्वज्ञस्सर्वदेहिनाम् ॥६॥
तद्‌बीजं सर्वविद्यानां मन्त्रमाद्यं षडक्षरम् । अतिसूक्ष्मं महार्थं च ज्ञेयं तद्वटबीजवत् ॥७॥
देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत्प्रभुः । ओमित्येकाक्षरे मन्त्रे स्थितः सर्वगतः शिवः ॥८॥
इशानाद्यानि सूक्ष्माणि ब्रह्माण्येकाक्षराणि तु । मन्त्रे नमश्शिवायेति संस्थितानि यथाक्रमम् ॥९॥
मन्त्रे षडक्षरे सूक्ष्मे पञ्चब्रह्मतनुः शिवः । वाच्यवाचकभावेन स्थितः साक्षात्स्वभावतः ॥१०॥
वाच्यश्शिवोप्रमेयत्वान्मन्त्रस्तद्वाचकस्स्मृतः । वाच्यवाचकभावोऽयमनादिसंस्थितस्तयोः ॥११॥
यथाऽनादिप्रवृत्तोयं घोरसंसारसागरः । शिवोऽपि हि तथानादिसंसारान्मोचकः स्थितः ॥१२॥
व्याधीनां भेषजं यद्वत्प्रतिपक्षः स्वभावतः । तद्वत्संसारदोषाणां प्रतिपक्षः शिवस्स्मृतः ॥१३॥
असत्यस्मिन् जगन्नाथे तमोभूतमिदं भवेत् । अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरषस्य च ॥१४॥
प्रधानपरमाण्वादि यावत्किंचिदचेतनम् । न तत्कर्तृ स्वयं दृष्टं बुद्धिमत्कारणं विना ॥१५॥
धर्माधर्मोपदेशश्च बन्धमोक्षौ विचारणात् । न सर्वज्ञं विना पुंसामादिसर्गः प्रसिद्ध्यति ॥१६॥
वैद्यं विना निरानंदाः क्लिश्यन्ते रोगिणो यथा । तस्मादनादिः सर्वज्ञः परिपूर्णस्सदा शिवः ॥१७॥

अस्ति नाथः परित्राता पुंसां संसारसागरात् । आदिमध्यान्तनिर्मुक्तस्स्वभावविमलः प्रभुः ॥१८॥
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयश्शिवागमे । तस्याभिधानमन्त्रोऽयमभिधेयश्च स स्मृतः ॥१९॥
अभिधानाभिधेयत्वान्मन्त्रस्सिद्धः परश्शिवः । एतावत्तु शिवज्ञानमेतावत्परमं पदम् ॥२०॥
यदोंनमश्शिवायेति शिववाक्यं षडक्षरम् । विधिवाक्यमिदं शैवं नार्थवादं शिवात्मकम् ॥२१॥
यस्सर्वज्ञस्सुसंपूर्णः स्वभावविमलः शिवः । लोकानुग्रहकर्ता च स मृषार्थं कथं वदेत् ॥२२॥
यद्यथावस्थितं वस्तु गुणदोषैः स्वभावतः । यावत्फलं च तत्पूर्णं सर्वज्ञस्तु यथा वदेत् ॥२३॥
रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत् । ते चेश्वरे न विद्येते ब्रूयात्स कथमन्यथा ॥२४॥
अज्ञाताशेषदोषेण सर्वज्ञेय शिवेन यत् । प्रणीतममलं वाक्यं तत्प्रमाणं न संशयः ॥२५॥
तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता । यथार्थपुण्यपापेषु तदश्रद्धो व्रजत्यधः ॥२६॥
स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत्सुशोभनम् । वाक्यं मुनिवरैः शान्तैस्तद्विज्ञेयं सुभाषितम् ॥२७॥
रागद्वेषानृतक्रोधकामतृष्णानुसारि यत् । वाक्यं निरयहेतुत्वात्तद्दुर्भाषितमुच्यते ॥२८॥
संस्कृतेनापि किं तेन मृदुना ललितेन वा । अविद्यारागवाक्येन संसारक्लेशहेतुना ॥२९॥
यच्छ्रुत्वा जायते श्रेयो रागादीनां च संशयः । विरूपमपि तद्वाक्यं विज्ञेयमिति शोभनम् ॥३०॥
बहुत्वेपि हि मन्त्राणां सर्वज्ञेन शिवेन यः । प्रणीतो विमलो मन्त्रो न तेन सदृशः क्वचित् ॥३१॥
साङ्गानि वेदशास्त्राणि संस्थितानि षडक्षरे । न तेन सदृशस्तस्मान्मन्त्रोऽप्यस्त्यपरः क्वचित् ॥३२॥
सप्तकोटिमहामन्त्रैरुपमन्त्रैरनेकधा । मन्त्रः षडक्षरो भिन्नस्सूत्रं वृत्यात्मना यथा ॥३३॥
शिवज्ञानानि यावन्ति विद्यास्थानापि यानि च । षडक्षरस्य सूत्रस्य तानि भाष्यं समासतः ॥३४॥
किं तस्य बहुभिर्मन्त्रैश्शास्त्रैर्वा बहुविस्तरैः । यस्योन्नमः शिवायेति मन्त्रोऽयं हृदि संस्थितः ॥३५॥
तेनाधीतं श्रुतं तेन कृतं सर्वमनुष्ठितम् । येनोन्नमश्शिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥३६॥
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् । जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥३७॥
अंत्यजो वाधमो वापि मूर्खो वा पंडितोऽपि वा । पञ्चाक्षरजपे निष्ठो मुच्यते पापपंजरात् ॥३८॥
इत्युक्तं परमेशेन देव्या पृष्टेन शूलिना । हिताय सर्वमर्त्यानां द्विजानां तु विशेषतः ॥३९॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पञ्चाक्षरमाहात्म्यवर्णनं नाम द्वादशोऽध्यायः ॥१२॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,४३१+३९=२२,४७०



## ॥ अथ त्रयोदशोऽध्यायः ॥

देव्युवाच ॥
कलौ कलुषिते काले दुर्जये दुरतिक्रमे । अपुण्यतमसाच्छन्ने लोके धर्मपराङ्मुखे ॥१॥
क्षीणे वर्णाश्रमाचारे संकटे समुपस्थिते । सर्वाधिकारे संदिग्धे निश्चिते वापि पर्यये ॥२॥
तदोपदेशे विहते गुरुशिष्यक्रमे गते । केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर ॥३॥
ईश्वर उवाच ॥
आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम । भक्त्या च भावितात्मानो मुच्यन्ते कलिजा नराः ॥४॥
मनोवाक्कायजैर्दोषैर्वक्तुं स्मर्तुमगोचरैः । दूषितानां कृतघ्नानां निंदकानां छलात्मनाम् ॥५॥
लुब्धानां वक्रमनसामपि मत्प्रवणात्मनाम् । मम पञ्चाक्षरी विद्या संसारभयतारिणी ॥६॥
मयैवमसकृद्देवि प्रतिज्ञातं धरातले । पतितोऽपि विमुच्येत मद्भक्तो विद्ययानया ॥७॥
देव्युवाच ॥
कर्मायोग्यो भवेन्मर्त्यः पतितो यदि सर्वथा । कर्मायोगेन यत्कर्म कृतं च नरकाय हि ॥
ततः कथं विमुच्येत पतितो विद्ययाऽनया ॥८॥
ईश्वर उवाच ॥
तथ्यमेतत्त्वया प्रोक्तं तथा हि शृणु सुन्दरि । रहस्यमिति मत्वैतद्गोपितं यन्मया पुरा ॥९॥

समन्त्रकं मां पतितः पूजयेद्यदि मोहितः । नारकी स्यान्न सन्देहो मम पञ्चाक्षरं विना ॥१०॥
अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः । तेषामेतैर्व्रतैर्नास्ति मम लोकसमागमः ॥११॥
भक्त्या पञ्चाक्षरेणैव यो हि मां सकृदर्चयेत् । सोऽपि गच्छेन्मम स्थानं मन्त्रस्यास्यैव गौरवात् ॥१२॥
तस्मात्तपांसि यज्ञाश्च व्रतानि नियमास्तथा । पञ्चाक्षरार्चनस्यैते कोटयंशेनापि नो समः ॥१३॥
बद्धो वाप्यथ मुक्तो वा पाशात्पञ्चाक्षरेण यः । पूजयेन्मां स मुच्येत नात्र कार्या विचारणा ॥१४॥
अरुद्रो वा सरुद्रो वा सकृत्पञ्चाक्षरेण यः । पूजयेत्पतितो वापि मूढो वा मुच्यते नरः ॥१५॥
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा । स ब्रह्माङ्गेन मां भक्त्या पूजयेद्यदि मुच्यते ॥१६॥
पतितोऽपतितो वापि मन्त्रेणानेन पूजयेत् । मम भक्तो जितक्रोधो सलब्धोऽलब्ध एव वा ॥१७॥
अलब्धालब्ध एवेह कोटिकोटिगुणाधिकः । तस्माल्लब्ध्वैव मां देवि मन्त्रेणानेन पूजयेत् ॥१८॥
लब्ध्वा संपूजयेद्यस्तु मैत्र्यादिगुणसंयुतः । ब्रह्मचर्यरतो भक्त्या मत्सादृश्यमवाप्नुयात् ॥१९॥
किमत्र बहुनोक्तेन भक्तास्सर्वेधिकारिणः । मम पञ्चाक्षरे मन्त्रे तस्माच्छ्रेष्ठतरो हि सः ॥२०॥
पञ्चाक्षरप्रभावेण लोकवेदमहर्षयः । तिष्ठंति शाश्वता धर्मा देवास्सर्वमिदं जगत् ॥२१॥
प्रलये समनुप्राप्ते नष्टे स्थावरजंगमे । सर्वं प्रकृतिमापन्नं तत्र संलयमेष्यति ॥२२॥
एकोऽहं संस्थितो देवि न द्वितीयोऽस्ति कुत्रचित् । तदा वेदाश्च शास्त्राणि सर्वे पञ्चाक्षरे स्थिताः ॥२३॥
ते नाशं नैव संप्राप्ता मच्छक्त्या ह्यनुपालिताः । ततस्सृष्टिरभून्मत्तः प्रकृत्यात्मप्रभेदतः ॥२४॥
गुणमूर्त्यात्मनां चैव ततोवान्तरसंहृतिः । तदा नारायणश्शेते देवो मायामयीं तनुम् ॥२५॥
आस्थाय भोगिपर्यंकशयने तोयमध्यगः । तन्नाभिपंकजाज्जातः पञ्चवक्त्रः पितामहः ॥२६॥
सिसृक्षमाणो लोकांस्त्रीन्न सक्तो ह्यसहायवान् । मुनीन्दश ससर्जादौ मानसानमितौजसः ॥२७॥
तेषां सिद्धिविवृद्ध्यर्थं मां प्रोवाच पितामहः । मत्पुत्राणां महादेव शक्तिं देहि महेश्वर ॥२८॥
इत्येवं प्रार्थितस्तेन पञ्चवक्त्रधरो ह्यहम् । पञ्चाक्षराणि क्रमशः प्रोक्तवान्पद्मयोनये ॥२९॥
स पञ्चवदनैस्तानि गृह्णंल्लोकपितामहः । वाच्यवाचकभावेन ज्ञातवान्मां महेश्वरम् ॥३०॥
ज्ञात्वा प्रयोगं विविधं सिद्धमन्त्रः प्रजापतिः । पुत्रेभ्यः प्रददौ मन्त्रं मन्त्रार्थं च यथातथम् ॥३१॥
ते च लब्ध्वा मन्त्ररत्नं साक्षाल्लोकपितामहात् । तदाज्ञप्तेन मार्गेण मदाराधनकांक्षिणः ॥३२॥
मेरोस्तु शिखरे रम्ये मुंजवान्नाम पर्वतः । मत्प्रियः सततं श्रीमान्मद्भक्तै रक्षितस्सदा ॥३३॥
तस्याभ्याशे तपस्तीव्रं लोकं स्रष्टुं समुत्सुकाः । दिव्यं वर्षसहस्रं तु वायुभक्षास्समाचरन् ॥३४॥
तेषां भक्तिमहं दृष्ट्वा सद्यः प्रत्यक्षतामियाम् । ऋषिं छंदश्च कीलं च बीजशक्तिं च दैवतम् ॥३५॥
न्यासं षडंगं दिग्बन्धं विनियोगमशेषतः । प्रोक्तवानहमार्याणां जगत्सृष्टिविवृद्धये ॥३६॥
ततस्ते मन्त्रमाहात्म्यादृषयस्तपसेधिताः । सृष्टिं वितन्वते सम्यक्सदेवासुरमानुषीम् ॥३७॥
अस्याः परमविद्यायास्स्वरूपमधुनोच्यते । आदौ नमः प्रयोक्तव्यं शिवाय तु ततः परम् ॥३८॥
सैषा पञ्चाक्षरी विद्या सर्वश्रुतिशिरोगता । सर्वजातस्य सर्वस्य बीजभूता सनातनी ॥३९॥
प्रथमं मन्मुखोद्गीर्णा सा ममैवास्ति वाचिका । तप्तचामीकरप्रख्या पीनोन्नतपयोधरा ॥४०॥
चतुर्भुजा त्रिनयना बालेंदुकृतशेखरा । पद्मोत्पलकरा सौम्या वरदाभयपाणिका ॥४१॥
सर्वलक्षणसंपन्ना सर्वाभरणभूषिता । सितपद्मासनासीना नीलकुंचितमूर्धजा ॥४२॥
अस्याः पञ्चविधा वर्णाः प्रस्फुरद्रश्मिमण्डलाः । पीतः कृष्णस्तथा धूम्रः स्वर्णाभो रक्त एव च ॥४३॥
पृथक्प्रयोज्या यद्येते बिंदुनादविभूषिताः । अर्धचन्द्रनिभो बिंदुर्नादो दीपशिखाकृतिः ॥४४॥
बीजं द्वितीयं बीजेषु मन्त्रस्यास्य वरानने । दीर्घपूर्वं तुरीयस्य पञ्चमं शक्तिमादिशेत् ॥४५॥
वामदेवो नाम ऋषिः पंक्तिश्छन्द उदाहृतम् । देवता शिव एवाहं मन्त्रस्यास्य वरानने ॥४६॥
गौतमोऽत्रिर्वरारोहे विश्वामित्रस्तथांगिराः । भरद्वाजश्च वर्णानां क्रमशश्चर्षयः स्मृताः ॥४७॥
गायत्र्यनुष्टुप्त्रिष्टुप्च छंदांसि बृहती विराट् । इन्द्रो रुद्रो हरिर्ब्रह्मा स्कंदस्तेषां च देवताः ॥४८॥
मम पञ्चमुखान्याहुः स्थाने तेषां वरानने । पूर्वादिश्चोर्ध्वपर्यन्तं नकारादि यथाक्रमम् ॥४९॥
उदात्तः प्रथमो वर्णश्चतुर्थश्च द्वितीयकः । पञ्चमः स्वरितश्चैव तृतीयो निहतः स्मृतः ॥५०॥

मूलविद्या शिवं शैवं सूत्रं पञ्चाक्षरं तथा । नामान्यस्य विजानीयाच्छैवं मे हृदयं महत् ॥५१॥
नकारश्शिर उच्येत मकारस्तु शिखोच्यते । शिकारः कवचं तद्वद्वकारो नेत्रमुच्यते ॥५२॥
यकारोऽस्त्रं नमस्स्वाहा वषठुंवौषडित्यपि । फडित्यपि च वर्णानामन्तेऽङ्गत्वं यदा तदा ॥५३॥
तत्रापि मूलमन्त्रोऽयं किञ्चिद्भेदसमन्वयात् । तत्रापि पञ्चमो वर्णो द्वादशस्वरभूषितः ॥५४॥
तास्मादनेन मन्त्रेण मनोवाक्कायभेदतः । आवयोरर्चनं कुर्याज्जपहोमादिकं तथा ॥५५॥
यथाप्रज्ञं यथाकालं यथाशास्त्रं यथामति । यथाशक्ति यथासंपद्यथायोगं यथारति ॥५६॥
यदा कदापि वा भक्त्या यत्र कुत्रापि वा कृता । येन केनापि वा देवि पूजा मुक्तिं नयिष्यते ॥५७॥
मय्यासक्तेन मनसा यत्कृतं मम सुन्दरि । मत्प्रियं च शिवं चैव क्रमेणाप्यक्रमेण वा ॥५८॥
तथापि मम भक्ता ये नात्यन्तविवशाः पुनः । तेषां सर्वेषु शास्त्रेषु मयेव नियमः कृतः ॥५९॥
तत्रादौ संप्रवक्ष्यामि मन्त्रसंग्रहणं शुभम् । यं विना निष्फलं जाप्यं येन वा सफलं भवेत् ॥६०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पञ्चाक्षरमाहात्म्यवर्णनं नाम त्रयोदशोऽध्यायः ॥१३॥

आदितः श्लोकानां समष्ट्यङ्काः-२२,४७०+६०=२२,५३०



## ॥ अथ चतुर्दशोऽध्यायः ॥

ईश्वर उवाच ॥

आज्ञाहीनं क्रियाहीनं श्रद्धाहीनं वरानने । आज्ञार्थं दक्षिणाहीनं सदा जप्तं च निष्फलम् ॥१॥
आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं ममात्मकम् । एवं चेद्दक्षिणायुक्तं मन्त्रसिद्धिर्महत्फलम् ॥२॥
उपगम्य गुरुं विप्रमाचार्यं तत्त्ववेदिनम् । जापितं सद्गुणोपेतं ध्यानयोगपरायणम् ॥३॥
तोषयेत्तं प्रयत्नेन भावशुद्धिसमन्वितः । वाचा च मनसा चैव कायेन द्रविणेन च ॥४॥
आचार्यं पूजयेद्विप्रः सर्वदातिप्रयत्नतः । हस्त्यश्वरथरत्नानि क्षेत्राणि च गृहाणि च ॥५॥
भूषणानि च वासांसि धान्यानि च धनानि च । एतानि गुरवे दद्याद्भक्त्या च विभवे सति ॥६॥
वित्तशाठ्यं न कुर्वीत यदीच्छेत्सिद्धिमात्मनः । पश्चान्निवेद्य स्वात्मानं गुरवे सपरिच्छदम् ॥७॥
एवं संपूज्य विधिवद्यथाशक्तित्ववंचयन् । आददीत गुरोर्मंत्रं ज्ञानं चैव क्रमेण तु ॥८॥
एवं तुष्टो गुरुः शिष्यं पूजकं वत्सरोषितम् । शुश्रूषुमनहङ्कारं स्नातं शुचिमुपोषितम् ॥९॥
स्नापयित्वा विशुद्ध्यर्थं पूर्णकुम्भघृतेन वै । जलेन मन्त्रशुद्धेन पुण्यद्रव्ययुतेन च ॥१०॥
अलंकृत्य सुवेषं च गन्धस्रग्वस्त्रभूषणैः । पुण्याहं वाचयित्वा च ब्राह्मणानभिपूज्य च ॥११॥
समुद्रतीरे नद्यां च गोष्ठे देवालयेऽपि वा । शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ ॥१२॥
नक्षत्रे शुभयोगे च सर्वदोषविवर्जिते । अनुगृह्य ततो दद्याज्ज्ञानं मम यथाविधि ॥१३॥
स्वरेणोच्चारयेत्सम्यगेकान्तेऽतिप्रसन्नधीः । उच्चार्योच्चारयित्वा तमावयोर्मंत्रमुत्तमम् ॥१४॥
शिवं चास्तु शुभं चास्तु शोभनोऽस्तु प्रियोऽस्त्विति । एवं दद्याद्गुरुर्मंत्रमाज्ञां चैव ततः परम् ॥१५॥
एवं लब्ध्वा गुरोर्मंत्रमाज्ञां चैव समाहितः । संकल्प्य च जपेन्नित्यं पुरश्चरणपूर्वकम् ॥१६॥
यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम् । अनन्यस्तत्परो भूत्वा स याति परमां गतिम् ॥१७॥
जपेदक्षरलक्षं वै चतुर्गुणितमादरात् । नक्ताशी संयमी यस्स पौरश्चरणिकः स्मृतः ॥१८॥
यः पुरश्चरणं कृत्वा नित्यजापी भवेत्पुनः । तस्य नास्ति समो लोके स सिद्धः सिद्धदो भवेत् ॥१९॥
स्नानं कृत्वा शुचौ देशे बद्ध्वा रुचिरमानसम् । त्वया मां हृदि संचिन्त्य संचिन्त्य स्वगुरुं ततः ॥२०॥
उदङ्मुखः प्राङ्मुखो वा मौनी चैकाग्रमानसः । विशोध्य पञ्चतत्त्वानि दहनप्लावनादिभिः ॥२१॥
मन्त्रन्यासादिकं कृत्वा सफलीकृतविग्रहः । आवयोर्विग्रहौ ध्यायन्प्राणापानौ नियम्य च ॥२२॥
विद्यास्थानं स्वकं रूपमृषिञ्छन्दोऽधिदैवतम् । बीजं शक्तिं तथा वाक्यं स्मृत्वा पञ्चाक्षरीं जपेत् ॥२३॥
उत्तमं मानसं जाप्यमुपांशुं चैवमध्यमम् । अधमं वाचिकं प्राहुरागमार्थविशारदाः ॥२४॥

उत्तमं रुद्रदैवत्यं मध्यमं विष्णुदैवतम् । अधमं ब्रह्मदैवत्यमित्याहुरनुपूर्वशः ॥२५॥
यदुच्चनीचस्वरितैःस्पष्टास्पष्टपदाक्षरैः । मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपस्स्मृतः ॥२६॥
जिह्वामात्रपरिस्पंदादीषदुच्चारितोऽपि वा । अपरैरश्रुतः किंचिच्छ्रुतो वोपांशुरुच्यते ॥२७॥
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् । शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ॥२८॥
वाचिकस्त्वेक एव स्यादुपांशुः शतमुच्यते । साहस्रं मानसः प्रोक्तः सगर्भस्तु शताधिकः ॥२९॥
प्राणायामसमायुक्तस्सगर्भो जप उच्यते । आद्यंतयोरगर्भोऽपि प्राणायामः प्रशस्यते ॥३०॥
चत्वारिंशत्समावृत्तीः प्राणानायम्य संस्मरेत् । मन्त्रं मन्त्रार्थविद्धीमानशक्तः शक्तितो जपेत् ॥३१॥
पञ्चकं त्रिकमेकं वा प्राणायामं समाचरेत् । अगर्भं वा सगर्भं वा सगर्भस्तत्र शस्यते ॥३२॥
सगर्भादपि साहस्रं सध्यानो जप उच्यते । एषु पञ्चविधेष्वेकः कर्तव्यः शक्तितो जपः ॥३३॥
अङ्गुल्या जपसंख्यानमेकमेवमुदाहृतम् । रेखयाष्टगुणं विद्यात्पुत्रजीवैर्दशाधिकम् ॥३४॥
शतं स्याच्छंखमणिभिः प्रवालैस्तु सहस्रकम् । स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥३५॥
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते । कुशग्रंथ्या च रुद्राक्षैरनन्तगुणितं भवेत् ॥३६॥
त्रिंशदक्षैः कृता माला धनदा जपकर्मणि । सप्तविंशतिसंख्यातैरक्षैः पुष्टिप्रदा भवेत् ॥३७॥
पञ्चविंशतिसंख्यातैः कृता मुक्तिं प्रयच्छति । अक्षैस्तु पञ्चदशभिरभिचारफलप्रदा ॥३८॥
अङ्गुष्ठं मोक्षदं विद्यात्तर्जनीं शत्रुनाशिनीम् । मध्यमां धनदां शान्तिं करोत्येषा ह्यनामिका ॥३९॥
अष्टोत्तरशतं माला तत्र स्यादुत्तमोत्तमा । शतसंख्योत्तमा माला पञ्चाशद्भिस्तु मध्यमा ॥४०॥
चतुः पञ्चाशदक्षैस्तु हृच्छेष्ठा हि प्रकीर्तिता । इत्येवं मालया कुर्याज्जपं कस्मै न दर्शयेत् ॥४१॥
कनिष्ठा क्षरिणी प्रोक्ता जपकर्मणि शोभना । अङ्गुष्ठेन जपेज्जप्यमन्यैरङ्गुलिभिस्सह ॥४२॥
अङ्गुष्ठेन विना जप्यं कृतं तदफलं यतः । गृहे जपं समं विद्याद्गोष्ठे शतगुणं विदुः ॥४३॥
पुण्यारण्ये तथारामे सहस्रगुणमुच्यते । अयुतं पर्वते पुण्ये नद्यां लक्षमुदाहृतम् ॥४४॥
कोटिं देवालये प्राहुरनन्तं मम सन्निधौ । सूर्यस्याग्नेर्गुरोरिंदोर्दीपस्य च जलस्य च ॥४५॥
विप्राणां च गवां चैव सन्निधौ शस्यते जपः । तत्पूर्वाभिमुखं वश्यं दक्षिणं चाभिचारिकम् ॥४६॥
पश्चिमं धनदं विद्यादौत्तरं शान्तिदं भवेत् । सूर्याग्निविप्रदेवानां गुरूणामपि सन्निधौ ॥४७॥
अन्येषां च प्रसक्तानां मन्त्रं न विमुखो जपेत् । उष्णीषी कुंचुकी नग्नो मुक्तकेशो गलावृतः ॥४८॥
अपवित्रकरोऽशुद्धो विलपन्न जपेत्क्वचित् । क्रोधं मदं क्षुतं त्रीणि निष्ठीवनविजृंभणे ॥४९॥
दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि । आचमेत्संभवे तेषां स्मरेद्वा मां त्वया सह ॥५०॥
ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयमम् । अनासनः शयाने वा गच्छन्नुत्थित एव वा ॥५१॥
रथ्यायामशिवे स्थाने न जपेत्तिमिरान्तरे । प्रसार्य न जपेत्पादौ कुक्कुटासन एव वा ॥५२॥
यानशय्याधिरूढो वा चिन्ताव्याकुलितोऽथ वा । शक्तश्चेत्सर्वमेवैतदशक्तः शक्तितो जपेत् ॥५३॥
किमत्र बहुनोक्तेन समासेन वचः शृणु । सदाचारो जपञ्छुद्धं ध्यायन्भद्रं समश्नुते ॥५४॥
आचारः परमो धर्म आचारः परमं धनम् । आचारः परमा विद्या आचारः परमा गतिः ॥५५॥
आचारहीनः पुरुषो लोके भवति निन्दितः । परत्र च सुखी न स्यात्तस्मादाचारवान्भवेत् ॥५६॥
यस्य यद्विहितं कर्म वेदे शास्त्रे च वैदिकैः । तस्य तेन समाचारः सदाचारो न चेतरः ॥५७॥
सद्भिराचरितत्वाच्च सदाचारः स उच्यते । सदाचारस्य तस्याहुरास्तिक्यं मूलकारणम् ॥५८॥
आस्तिकश्चेत्प्रमादाद्यैः सदाचारादविच्युतः । न दुष्यति नरो नित्यं तस्मादास्तिकतां व्रजेत् ॥५९॥
यथेहास्ति सुखं दुःखं सुकृतैर्दुष्कृतैरपि । तथा परत्र चास्तीति मतिरास्तिक्यमुच्यते ॥६०॥
रहस्यमन्यद्वक्ष्यामि गोपनीयमिदं प्रिये । न वाच्यं यस्य कस्यापि नास्तिकस्याथ वा पशोः ॥६१॥
सदाचारविहीनस्य पतितस्यान्त्यजस्य च । पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे ॥६२॥
गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः । अशुचेर्वा शुचेर्वापि मन्त्रोऽयन्न च निष्फलः ॥६३॥
अनाचारवतां पुंसामविशुद्धषडध्वनाम् । अनादिष्टोऽपि गुरुणा मन्त्रोऽयं न च निष्फलः ॥६४॥
अन्त्यजस्यापि मूर्खस्य मूढस्य पतितस्य च । निर्मर्यादस्य नीचस्य मन्त्रोऽयं न च निष्फलः ॥६५॥

सर्वावस्थां गतस्यापि मयि भक्तिमतः परम् । सिध्यत्येव न संदेहो नापरस्य तु कस्यचित् ॥६६॥
न लग्नतिथिनक्षत्रवारयोगादयः प्रिये । अस्यात्यन्तमवेक्ष्याः स्युर्नैष सप्तस्सदोदितः ॥६७॥
न कदाचिन्न कस्यापि रिपुरेष महामनुः । सुसिद्धो वापि सिद्धो वा साध्यो वापि भविष्यति ॥६८॥
सिद्धेन गुरुणादिष्टस्सुसिद्ध इति कथ्यते । असिद्धेनापि वा दत्तस्सिद्धसाध्यस्तु केवलः ॥६९॥
असाधितस्साधितो वा सिध्यत्वेन न संशयः । श्रद्धातिशययुक्तस्य मयि मन्त्रे तथा गुरौ ॥७०॥
तस्मान्मन्त्रान्तरांस्त्यक्त्वा सापायानधिकारतः । आश्रमेत्परमां विद्यां साक्षात्पञ्चाक्षरीं बुधः ॥७१॥
मन्त्रान्तरेषु सिद्धेषु मन्त्र एष न सिध्यति । सिद्धे त्वस्मिन्महामन्त्रे ते च सिद्धा भवंत्युत ॥७२॥
यथा देवेष्वलब्धोऽस्मि लब्धेष्वपि महेश्वरि । मयि लब्धे तु ते लब्धा मन्त्रेष्वेषु समो विधिः ॥७३॥
ये दोषास्सर्वमन्त्राणां न तेऽस्मिन्संभवंत्यपि । अस्य मन्त्रस्य जात्यादीननपेक्ष्य प्रवर्तनात् ॥७४॥
तथापि नैव क्षुद्रेषु फलेषु प्रति योगिषु । सहसा विनियुंजीत तस्मादेष महाबलः ॥७५॥
उपमन्युरुवाच ॥
एवं साक्षान्महादेव्यै महादेवेन शूलिना । हिता य जगतामुक्तः पञ्चाक्षरविधिर्यथा ॥७६॥
य इदं कीर्तयेद्भक्त्या शृणुयाद्वा समाहितः । सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥७७॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पञ्चाक्षरमहिमवर्णनं नाम चतुर्दशोध्यायः ॥१४॥
आदितः श्लोकानां समष्टयङ्काः-२२,५३०+७७=२२,६०७



## ॥ अथ पञ्चदशोऽध्यायः ॥

श्रीकृष्ण उवाच ॥
भगवान्मन्त्रमाहात्म्यं भवता कथितं प्रभो । तत्प्रयोगविधानं च साक्षाच्छ्रुतिसमं यथा ॥१॥
इदानीं श्रोतुमिच्छामिशिवसंस्कारमुत्तमम् । मन्त्रसंग्रहणे किञ्चित्सूचितन्न तु विस्मृतम् ॥२॥
उपमन्युरुवाच ॥
हन्त ते कथयिष्यामि सर्वपापविशोधनम् । संस्कारं परमं पुण्यं शिवेन पतिभाषितम् ॥३॥
सम्यक्कृताधिकारः स्यात्पूजादिषु नरो यतः । संस्कारः कथ्यते तेन षडध्वपरिशोधनम् ॥४॥
दीयते येन विज्ञानं क्षीयते पाशबन्धनम् । तस्मात्संस्कार एवायं दीक्षेत्यपि च कथ्यते ॥५॥
शाम्भवी चैव शाक्ती च मांत्री चैव शिवागमे । दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ॥६॥
गुरोरालोकमात्रेण स्पर्शात्संभाषणादपि । सद्यस्संज्ञा भवेज्जंतोः पाशोपक्षयकारिणी ॥७॥
सा दीक्षा शाम्भवी प्रोक्ता सा पुनर्भिद्यते द्विधा । तीव्रा तीव्रतरा चेति पाशो पक्षयभेदतः ॥८॥
यया स्यान्निर्वृतिः सद्यस्सैव तीव्रतरा मता । तीव्रा तु जीवतोत्यन्तं पुंसः पापविशोधिका ॥९॥
शक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु । गुरुणा योगमार्गेण क्रियते ज्ञानचक्षुषा ॥१०॥
मांत्री क्रियावती दीक्षा कुण्डमण्डलपूर्विका । मंदमंदतरोद्देशात्कर्तव्या गुरुणा बहिः ॥११॥
शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति । शैवधर्मानुसारस्य तन्मूलत्वात्समासतः ॥१२॥
यत्र शक्तिर्न पतिता तत्र शुद्धिर्न जायते । न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः ॥१३॥
तस्माल्लिंगानि संवीक्ष्य शक्तिपातस्य भूयसः । ज्ञानेन क्रियया वाथ गुरुश्शिष्यं विशोधयेत् ॥१४॥
योऽन्यथा कुरुते मोहात्स विनश्यति दुर्मतिः । तस्मात्सर्वप्रकारेण गुरुः शिष्यं परीक्षयेत् ॥१५॥
लक्षणं शक्तिपातस्य प्रबोधानंदसंभवः । सा यस्मात्परमा शक्तिः प्रबोधानंदरूपिणी ॥१६॥
आनंदबोधयोर्लिंगमंतःकरणविक्रियाः । यथा स्यात्कंपरोमांचस्वरनेत्राङ्गविक्रियाः ॥१७॥
शिष्योपि लक्षणैरेभिः कुर्याद्गुरुपरीक्षणम् । तत्संपर्कैः शिवार्चादौ संगतैर्वाथ तद्गतैः ॥१८॥
शिष्यस्तु शिक्षणीयत्वाद्गुरोर्गौरवकारणात् । तस्मात्सर्वप्रयत्नेन गुरोर्गौरवमाचरेत् ॥१९॥
यो गुरुस्स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः । गुरुर्वा शिव एवाथ विद्याकारेण संस्थितः ॥२०॥
यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः । शिवविद्या गुरूणां च पूजया सदृशं फलम् ॥२१॥

सर्वदेवात्मकश्चासौ सर्वमन्त्रमयो गुरुः । तस्मात्सर्वप्रयत्नेन यस्याज्ञां शिरसा वहेत् ॥२२॥
श्रेयोऽर्थी यदि गुर्वाज्ञां मनसापि न लंघयेत् । गुर्वाज्ञापालको यस्माज्ज्ञानसंपत्तिमश्नुते ॥२३॥
गच्छंस्तिष्ठन्स्वपन्भुंजन्नान्यत्कर्म समाचरेत् । समक्षं यदि कुर्वीत सर्वं चानुज्ञया गुरोः ॥२४॥
गुरोर्गृहे समक्षं वा न यथेष्टासनो भवेत् । गुरुर्देवो यतः साक्षात्तद्गृहं देवमन्दिरम् ॥२५॥
पापिनां च यथा संगात्तत्पापात्पतितो भवेत् । यथेह वह्निसंपर्कान्मलं त्यजति कांचनम् ॥२६॥
तथैव गुरुसंपर्कात्पापं त्यजति मानवः । यथा वह्निसमीपस्थो घृतकुम्भो विलीयते ॥२७॥
तथा पापं विलीयेत ह्याचार्यस्य समीपतः । यथा प्रज्वलितो वह्निः शुष्कमार्द्रं च निर्दहेत् ॥२८॥
तथायमपि सन्तुष्टो गुरुः पापं क्षणाद्दहेत् । मनसा कर्मणा वाचा गुरोः क्रोधं न कारयेत् ॥२९॥
तस्य क्रोधेन दह्यन्ते ह्यायुःश्रीज्ञानसत्क्रियाः । तत्क्रोधकारिणो ये स्युस्तेषां यज्ञाश्च निष्फलाः ॥३०॥
यमश्च नियमाश्चैव नात्र कार्या विचारणा । गुरोर्विरुद्धं यद्वाक्यं न वदेज्जातुचिन्नरः ॥३१॥
वदेद्यदि महामोहाद्रौरवं नरकं व्रजेत् । मनसा कर्मणा वाचा गुरुमुद्दिश्य यत्नतः ॥३२॥
श्रेयोर्थी चेन्नरो धीमान्न मिथ्याचारमाचरेत् । गुरोर्हितं प्रियं कुर्यादादिष्टो वा न वा सदा ॥३३॥
असमक्षं समक्षं वा तस्य कार्यं समाचरेत् । इत्थमाचारवान्भक्तो नित्यमुद्युक्तमानसः ॥३४॥
गुरुप्रियकरः शिष्यः शैवधर्मांस्ततोऽर्हति । गुरुश्चेद्गुणवान्प्राज्ञः परमानंदभासकः ॥३५॥
तत्त्वविच्छिवसंसक्तो मुक्तिदो न तु चापरः । संवित्संजननं तत्त्वं परमानंदसंभवम् ॥३६॥
तत्तत्त्वं विदितं येन स एवानंददर्शकः । न पुनर्नाममात्रेण संविदारहितस्तु यः ॥३७॥
अन्योन्यं तारयेन्नौका किं शिला तारयेच्छिलाम् । एतस्या नाममात्रेण मुक्तिर्वै नाममात्रिका ॥३८॥
यैः पुनर्विदितं तत्त्वं ते मुक्ता मोचयन्त्यपि । तत्त्वहीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥३९॥
परिग्रहविनिर्मुक्तः पशुरित्यभिधीयते । पशुभिः प्रेरितश्चापि पशुत्वं नातिवर्तते ॥४०॥
तस्मात्तत्त्वविदेवेह मुक्तो मोचक इष्यते । सर्वलक्षणसंयुक्तः सर्वशास्त्रविदप्ययम् ॥४१॥
सर्वोपायविधिज्ञोऽपि तत्त्वहीनस्तु निष्फलः । यस्यानुभवपर्यंता बुद्धिस्तत्त्वे प्रवर्तते ॥४२॥
तस्यावलोकनाद्यैश्च परानन्दोऽभिजायते । तस्माद्यस्यैव संपर्कात्प्रबोधानंदसंभवः ॥४३॥
गुरुं तमेव वृणुयान्नापरं मतिमान्नरः । स शिष्यैर्विनयाचारचतुरैरुचितो गुरुः ॥४४॥
यावद्विज्ञायते तावत्सेवनीयो मुमुक्षुभिः । ज्ञाते तस्मिन्स्थिरा भक्तिर्यावत्तत्त्वं समाश्रयेत् ॥४५॥
न तु तत्त्वं त्यजेज्जातु नोपेक्षेत कथंचन । यत्रानंदः प्रबोधो वा नाल्पमप्युपलभ्यते ॥४६॥
वत्सरादपि शिष्येण सोऽन्यं गुरुमुपाश्रयेत् । गुरुमन्यं प्रपन्नेऽपि नावमन्येत पौर्विकम् ॥४७॥
गुरोर्भ्रातॄंस्तथा पुत्रान्बोधकान्प्रेरकानपि । तत्रादावुपसंगम्य ब्राह्मणं वेदपारगम् ॥४८॥
गुरुमाराधयेत्प्राज्ञं शुभगं प्रियदर्शनम् । सर्वाभयप्रदातारं करुणाक्रान्तमानसम् ॥४९॥
तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा । तावदाराधयेच्छिष्यः प्रसन्नोसौ भवेद्यथा ॥५०॥
तस्मिन्प्रसन्ने शिष्यस्य सद्यः पापक्षयो भवेत् । तस्माद्धनानि रत्नानि क्षेत्राणि च गृहाणि च ॥५१॥
भूषणानि च वासांसि यानशय्यासनानि च । एतानि गुरवे दद्याद्भक्त्या वित्तानुसारतः ॥५२॥
वित्तशाठ्यं न कुर्वीत यदीच्छेत्परमां गतिम् । स एव जनको माता भर्ता बन्धुर्धनं सुखम् ॥५३॥
सखा मित्रं च यत्तस्मात्सर्वं तस्मै निवेदयेत् । निवेद्य पश्चात्स्वात्मानं सान्वयं सपरिग्रहम् ॥५४॥
समर्प्य सोदकं तस्मै नित्यं तद्वशगो भवेत् । यदा शिवाय स्वात्मानं दत्तवान् देशिकात्मने ॥५५॥
तदा शैवो भवेद्देही न ततोऽस्ति पुनर्भवः । गुरुश्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥५६॥
ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षं च त्रिवर्षकम् । प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमैः ॥५७॥
उत्तमांश्चाधमे कृत्वा नीचानुत्तमकर्मणि । आक्रुष्टास्ताडिता वापि ये विषादं न यान्त्यपि ॥५८॥
ते योग्याः संयताः शुद्धाः शिवसंस्कारकर्मणि । अहिंसका दयावंतो नित्यमुद्युक्तचेतसः ॥५९॥
अमानिनो बुद्धिमंतस्त्यक्तस्पर्धाः प्रियंवदाः । ऋजवो मृदवः स्वच्छा विनीताः स्थिरचेतसः ॥६०॥
शौचाचारसमायुक्ताः शिवभक्ता द्विजातयः । एवं वृत्तसमोपेता वाङ्मनःकायकर्मभिः ॥६१॥
शोध्या बोध्या यथान्यायमिति शास्त्रेषु निश्चयः । नाधिकारः स्वतो नार्याः शिवसंस्कारकर्मणि ॥६२॥

नियोगाद्भर्तुरस्त्येव भक्तियुक्ता यदीश्वरे । तथैव भर्तृहीनाया पुत्रादेरभ्यनुज्ञया ॥६३॥
अधिकारो भवत्येव कन्यायाः पितुराज्ञया । शूद्राणां मर्त्यजातीनां पतितानां विशेषतः ॥६४॥
तथा संकरजातीनां नाध्वशुद्धिर्विधीयते । तैप्यकृत्रिमभावश्चेच्छिवे परमकारणे ॥६५॥
पादोदकप्रदानाद्यैः कुर्युः पापविशोधनम् । अत्रानुलोमजाता ये युक्ता एव द्विजातिषु ॥६६॥
तेषामध्वविशुद्ध्यादि कुर्यान्मातृकुलोचितम् । या तु कन्या स्वपित्राद्यैश्शिवधर्मे नियोजिता ॥६७॥
सा भक्ताय प्रदातव्या नापराय विरोधिने । दत्ता चेत्प्रतिकूलाय प्रमादाद्बोधयेत्पतिम् ॥६८॥
अशक्ता तं परित्यज्य मनसा धर्ममाचरेत् । यथा मुनिवरं त्यक्त्वा पतिमत्रिं पतिव्रता ॥६९॥
कृतकृत्याऽभवत्पूर्वं तपसाराध्य शङ्करम् । यथा नारायणं देवं तपसाराध्य पांडवान् ॥७०॥
पतींल्लब्धवती धर्मे गुरुभिर्न नियोजिता । अस्वातन्त्र्यकृतो दोषो नेहास्ति परमार्थतः ॥७१॥
शिवधर्मे नियुक्तायाश्शिवशासनगौरवात् । बहुनात्र किमुक्तेन योऽपि कोऽपि शिवाश्रयः ॥७२॥
संस्कार्यो गुर्वधीनश्चेत्संस्क्रिया न प्रभिद्यते । गुरोरालोकनादेव स्पर्शात्संभाषणादपि ॥७३॥
यस्य संजायते प्रज्ञा तस्य नास्ति पराजयः । मनसा यस्तु संस्कारः क्रियते योगवर्त्मना ॥७४॥
स नेह कथितो गुह्यो गुरुवक्त्रैकगोचरः । क्रियावान्यस्तु संस्कारः कुण्डमण्डपपूर्वकः ॥
स वक्ष्यते समासेन तस्य शक्यो न विस्तरः ॥७५॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे दीक्षाविधाने गुरुमाहात्म्यं नाम पञ्चदशोऽध्यायः ॥१५॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,६०७+७५=२२,६८२



## ॥ अथ षोडशोऽध्यायः ॥

उपमन्युरुवाच ॥

पुण्येऽहनि शुचौ देशे बहुदोषविवर्जिते । देशिकः प्रथमं कुर्यात्संस्कारं समयाह्वयम् ॥१॥
परीक्ष्य भूमिं विधिवद्गंधवर्णरसादिभिः । शिल्पिशास्त्रोक्तमार्गेण मण्डपं तत्र कल्पयेत् ॥२॥
कृत्वा वेदिं च तन्मध्ये कुण्डानि परिकल्पयेत् । अष्टदिक्षु तथा दिक्षु तत्रैशान्यां पुनः क्रमात् ॥३॥
प्रधानकुण्डं कुर्वीत यद्वा पश्चिमभागतः । प्रधानमेकमेवाथ कृत्वा शोभां प्रकल्पयेत् ॥४॥
वितानध्वजमालाभिर्विविधाभिरनेकशः । वेदिमध्ये ततः कुर्यान्मण्डलं शुभलक्षणम् ॥५॥
रक्तहेमादिभिश्चूर्णैरीश्वरावाहनोचितम् । सिंदूरशालिनीवारचूर्णैरेवाथ निर्धनः ॥६॥
एकहस्तं द्विहस्तं वा सितं वा रक्तमेव वा । एकहस्तस्य पद्मस्य कर्णिकाष्टाङ्गुला मता ॥७॥
केसराणि तदर्धानि शेषं चाष्टदलादिकम् । द्विहस्तस्य तु पद्मस्य द्विगुणं कर्णिकादिकम् ॥८॥
कृत्वा शोभोपशोभाढ्यमैशान्यां तस्य कल्पयेत् । एकहस्तं तदर्धं वा पुनर्वेद्यः तु मण्डलम् ॥९॥
व्रीहितंदुलसिद्धार्थतिलपुष्पकुशास्तृते । तत्र लक्षणसंयुक्तं शिवकुम्भं प्रसाधयेत् ॥१०॥
सौवर्णं राजतं वापि ताम्रजं मृन्मयं तु वा । गन्धपुष्पाक्षताकीर्णं कुशदूर्वांकुराचितम् ॥११॥
सितसूत्रावृतं कण्ठे नववस्त्रयुगावृतम् । शुद्धाम्बुपूर्णमुत्कूर्चं सद्रव्यं सपिधानकम् ॥१२॥
भृङ्गारं वर्धनीं चापि शंखं च चक्रमेव वा । विना सूत्रादिकं सर्वं पद्मपत्रमथापि वा ॥१३॥
तस्यासनारविंदस्य कल्पयेदुत्तरे दले । अग्रतश्चंदनांभोभिरस्त्रराजस्य वर्धनीम् ॥१४॥
मण्डलस्य ततः प्राच्यां मन्त्रकुम्भे च पूर्ववत् । कृत्वा विधिवदीशस्य महापूजां समाचरेत् ॥१५॥
अथार्णवस्य तीरे वा नद्यां गोष्ठेऽपि वा गिरौ । देवागरे गृहे वापि देशेऽन्यस्मिन्मनोहरे ॥१६॥
कृत्वा पूर्वोदितं सर्वं विना वा मण्डपादिकम् । मण्डलं पूर्ववत्कृत्वा स्थण्डिलं च विभावसोः ॥१७॥
प्रविश्य पूजाभवनं प्रहृष्टवदनो गुरुः । सर्वमङ्गलसंयुक्तः समाचरितनैत्यकः ॥१८॥
महापूजां महेशस्य कृत्वा मण्डलमध्यतः । शिवकुम्भे तथा भूयः शिवमावाह्य पूजयेत् ॥१९॥
पश्चिमाभिमुखं ध्यात्वा यज्ञरक्षकमीश्वरम् । अर्चयेदस्त्रवर्धन्यामस्त्रमीशस्य दक्षिणे ॥२०॥

मन्त्रकुम्भे च विन्यस्य मन्त्रं मन्त्रविशारदः । कृत्वा मुद्रादिकं सर्वं मन्त्रयागं समाचरेत् ॥२१॥
ततश्शिवानले होमं कुर्याद्देशिकसत्तमः । प्रधानकुण्डे परितो जुहुयुश्चापरे द्विजाः ॥२२॥
आचार्यात्पादमर्धं वा होमस्तेषां विधीयते । प्रधानकुण्ड एवाथ जुहुयाद्देशिकोत्तमः ॥२३॥
स्वाध्यायमपरे कुर्युः स्तोत्रं मङ्गलवाचनम् । जपं च विधिवच्चान्ये शिवभक्तिपरायणाः ॥२४॥
नृत्यं गीतं च वाद्यं च मङ्गलान्यपराणि च । पूजनं च सदस्यानां कृत्वा सम्यग्विधानतः ॥२५॥
पुण्याहं कारयित्वाथ पुनः संपूज्य शंकरम् । प्रार्थयेद्देशिको देवं शिष्यानुग्रहकाम्यया ॥२६॥
प्रसीद देवदेवेश देहमाविश्य मामकम् । विमोचयैनं विश्वेश घृणया च घृणानिधे ॥२७॥
अथ चैवं करोमीति लब्धानुज्ञस्तु देशिकः । आनीयोपोषितं शिष्यं हविष्याशिनमेव वा ॥२८॥
एकाशनं वा विरतं स्नातं प्रातःकृतक्रियम् । जपंतं प्रणवं देवं ध्यायन्तं कृतमङ्गलम् ॥२९॥
द्वारस्य पश्चिमस्याग्रमण्डले दक्षिणस्य वा । दर्भासने समासीनं विधायोदङ्मुखं शिशुम् ॥३०॥
स्वयं प्राग्वदनस्तिष्ठन्नूर्ध्वकायं कृताञ्जलिम् । संप्रोक्ष्य प्रोक्षणीतोयैर्मूर्धन्यस्त्रेण मुद्रया ॥३१॥
पुष्पक्षेपेण सन्ताड्य बध्नीयाल्लोचनं गुरुः । दुकूलार्धेन वस्त्रेण मंत्रितेन नवेन च ॥३२॥
ततः प्रवेशयेच्छिष्यं गुरुद्वारेण मण्डलम् । सोऽपि तेनेरितः शम्भोराचरेत्त्रिः प्रदक्षिणम् ॥३३॥
ततस्सुवर्णसंमिश्रं दत्त्वा पुष्पांजलिं प्रभोः । प्राङ्मुखश्चोदङ्मुखो वा प्रणमेद्दंडवत्क्षितो ॥३४॥
ततस्संप्रोक्ष्य मूलेन शिरस्यस्त्रेण पूर्ववत् । सन्ताड्य देशिकस्तस्य मोचयेन्नेत्रबन्धनम् ॥३५॥
स दृष्ट्वा मण्डलं भूयः प्रणमेत्साञ्जलिः प्रभुम् । अथासीनं शिवाचार्यो मण्डलस्य तु दक्षिणे ॥३६॥
उपवेश्यात्मनस्सव्ये शिष्यं दर्भासने गुरुः । आराध्य च महादेवं शिवहस्तं प्रविन्यसेत् ॥३७॥
शिवतेजोमयं पाणिं शिवमन्त्रमुदीरयेत् । शिवाभिमानसंपन्नो न्यसेच्छिष्यस्य मस्तके ॥३८॥
सर्वाङ्गालंबनं चैव कुर्यात्तेनैव देशिकः । शिष्योऽपि प्रणमेद्भूमौ देशिकाकृतमीश्वरम् ॥३९॥
ततश्शिवानले देवं समभ्यर्च्य यथाविधि । हुताहुतित्रयं शिष्यमुपवेश्य यथा पुरा ॥४०॥
दर्भाग्रैः संस्पृशंस्तं च विद्ययात्मानमाविशेत् । नमस्कृत्य महादेवं नाडीसंधानमाचरेत् ॥४१॥
शिवशास्त्रोक्तमार्गेण कृत्वा प्राणस्य निर्गमम् । शिष्यदेहप्रवेशं च स्मृत्वा मन्त्रांस्तु तर्पयेत् ॥४२॥
सन्तर्पणाय मूलस्य तेनैवाहुतयो दश । देयास्तिस्रस्तथाङ्गानामङ्गैरेव यथाक्रमम् ॥४३॥
ततः पूर्णाहुतिं दत्त्वा प्रायश्चित्ताय देशिकः । पुनर्दशाहुतीन्कुर्यान्मूलमन्त्रेण मन्त्रवित् ॥४४॥
पुनः संपूज्य देवेशं सम्यगाचम्य देशिकः । हुत्वा चैव यथान्यायं स्वजात्या वैश्यमुद्धरेत् ॥४५॥
तस्यैवं जनयेत्क्षात्रमुद्धारं च ततः पुनः । कृत्वा तथैव विप्रत्वं जनयेदस्य देशिकः ॥४६॥
राजन्यं चैवमुद्धृत्य कृत्वा विप्रं पुनस्तयोः । रुद्रत्वं जनयेद्विप्रे रुद्रनामैव साधयेत् ॥४७॥
प्रोक्षणं ताडनं कृत्वा शिशोस्स्वात्मानमात्मनि । शिवात्मकमनुस्मृत्य स्फुरन्तं विस्फुलिङ्गवत् ॥४८॥
नाड्या यथोक्तया वायुं रेचयेन्मन्त्रतो गुरुः । निर्गम्य प्रविशेन्नाड्या शिष्यस्य हृदयं तथा ॥४९॥
प्रविश्य तस्य चैतन्यं नीलबिन्दुनिभं स्मरन् । स्वतेजसापास्तमलं ज्वलंतमनुचिन्तयेत् ॥५०॥
तमादाय तया नाड्या मन्त्री संहारमुद्रया । न पूरकेण निवेश्यैनमेकीभावार्थमात्मनः ॥५१॥
कुम्भकेन तथा नाड्या रेचकेन यथा पुरा । तस्मादादाय शिष्यस्य हृदये तन्निवेशयेत् ॥५२॥
तमालभ्य शिवाल्लब्धं तस्मै दत्त्वोपवीतकम् । हुत्वाष्टहुतित्रयं पश्चाद्दद्यात्पूर्णाहुतिं ततः ॥५३॥
देवस्य दक्षिणे शिष्यमुपवेश्यवरासने । कुशपुष्पपरिस्तीर्णे बद्धांजलिरुदङ्मुखम् ॥५४॥
स्वस्तिकासनमारूढं विधाय प्राङ्मुखः स्वयम् । वरासनस्थितो मन्त्रैर्महामङ्गलनिःस्वनैः ॥५५॥
समादाय घटं पूर्णं पूर्णमेव प्रसादितम् । ध्यायमानः शिवं शिष्यमाभिषिंचेत देशिकः ॥५६॥
अथापनुद्य स्नानांबु परिधाय सितांबरम् । आचान्तोलंकृतश्शिष्यः प्रांजलिर्मंडपं व्रजेत् ॥५७॥
उपवेश्य यथापूर्वं तं गुरुर्दर्भविष्टरे । संपूज्य मण्डलं देवं करन्यासं समाचरेत् ॥५८॥
ततस्तु भस्मना देवं ध्यायन्मनसि देशिकः । समालभेत पाणिभ्यां शिशुं शिवमुदीरयेत् ॥५९॥
अथ तस्य शिवाचार्यो दहनप्लावनादिकम् । सकलीकरणं कृत्वा मातृकान्यासवर्त्मना ॥६०॥
ततः शिवासनं ध्यात्वा शिष्यमूर्ध्नि देशिकः । तत्रावाह्य यथान्यायमर्चयेन्मनसा शिवम् ॥६१॥

प्रार्थयेत्प्रांजलिर्देवं नित्यमत्र स्थितो भव । इति विज्ञाप्य तं शम्भोस्तेजसा भासुरं स्मरेत् ॥६२॥
संपूज्याथ शिवं शैवीमाज्ञां प्राप्य शिवात्मिकाम् । कर्णे शिष्यस्य शनकैश्शिवमन्त्रमुदीरयेत् ॥६३॥
स तु बद्धांजलिः श्रुत्वा मन्त्रं तद्गतमानसः । शनैस्तं व्याहरेच्छिष्य शिवाचार्यस्य शासनात् ॥६४॥
ततः शाक्तं च संदिश्य मन्त्रं मन्त्रविचक्षणः । उच्चारयित्वा च सुखं तस्मै मङ्गलमादिशेत् ॥६५॥
ततस्समासान्मन्त्रार्थं वाच्यवाचकयोगतः । समदिश्येश्वरं रूपं योगमासनमादिशेत् ॥६६॥
अथ गुर्वाज्ञया शिष्यः शिवाग्निगुरुसन्निधौ । भक्त्यैवमभिसंधाय दीक्षावाक्यमुदीरयेत् ॥६७॥
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा । न त्वनभ्यर्च्य भुंजीय भगवन्तं त्रिलोचनम् ॥६८॥
स एव दद्यान्नियतो यावन्मोहविपर्ययः । तावदाराधयेद्देवं तन्निष्ठस्तत्परायणः ॥६९॥
ततः स समयो नाम भविष्यति शिवाश्रमे । लब्धाधिकारो गुर्वाज्ञापालकस्तद्वशो भवेत् ॥७०॥
अतः परं न्यस्तकरो भस्मादाय स्वहस्ततः । दद्याच्छिष्याय मूलेन रुद्राक्षं चाभिमंत्रितम् ॥७१॥
प्रतिमा वापि देवस्य गूढदेहमथापि वा । पूजाहोमजपध्यानसाधनानि च संभवे ॥७२॥
सोपि शिष्यः शिवाचार्याल्लब्धानि बहुमानतः । आददीताज्ञया तस्य देशिकस्य न चान्यथा ॥७३॥
आचार्यादाप्तमखिलं शिरस्याधाय भक्तितः । रक्षयेत्पूजयेच्छंभुं मठे वा गृह एववा ॥७४॥
अतः परं शिवाचारमादिशेदस्य देशिकः । भक्तिश्रद्धानुसारेण प्रज्ञायाश्चानुसारतः ॥७५॥
यदुक्तं यत्समाज्ञातं यच्चैवान्यत्प्रकीर्तितम् । शिवाचार्येण समये तत्सर्वं शिरसा वहेत् ॥७६॥
शिवागमस्य ग्रहणं वाचनं श्रवणं तथा । देशिकदेशतः कुर्यान्न स्वेच्छातो न चान्यतः ॥७७॥
इति संक्षेपतः प्रोक्तः संस्कारः समयाह्वयः । साक्षाच्छिवपुरप्राप्तौ नृणां परमसाधनम् ॥७८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिष्यसंस्कारवर्णनं नाम षोडशोऽध्यायः ॥१६॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,६८२+७८=२२,७६०



## ॥ अथ सप्तदशोऽध्यायः ॥

उपमन्युरुवाच ॥

अतः परं समावेक्ष्य गुरुः शिष्यस्य योग्यताम् । षडध्वशुद्धिं कुर्वीत सर्वबन्धविमुक्तये ॥१॥
कलां तत्त्वं च भुवनं वर्णं पदमतः परम् । मन्त्रश्चेति समासेन षडध्वा परिपठ्यते ॥२॥
निवृत्त्याद्याः कलाः पञ्च कलाध्वा कथ्यते बुधैः । व्याप्ताः कलाभिरितरे त्वध्वानः पञ्च पञ्चभिः ॥३॥
शिवतत्त्वादिभूम्यन्तं तत्त्वाध्वा समुदाहृतः । षड् विंशत्संख्ययोपेतः शुद्धाशुद्धोभयात्मकः ॥४॥
आधाराद्युन्मनान्तश्च भुवनाध्वा प्रकीर्तितः । विना भेदोपभेदाभ्यां षष्टिसंख्यासमन्वितः ॥५॥
पञ्चाशद्रुद्ररूपास्तु वर्णा वर्णाध्वसंज्ञिताः । अनेकभेदसंपन्नः पदाध्वा समुदाहृतः ॥६॥
सर्वोपमन्त्रैर्मंत्राध्वा व्याप्तः परमविद्यया । यथा शिवो न तत्त्वेषु गण्यते तत्त्वनायकः ॥७॥
मन्त्राध्वनि न गण्येत तथासौ मन्त्रनायकः । कलाध्वनो व्यापकत्वं व्याप्यत्वं चेतराध्वनाम् ॥८॥
न वेत्ति तत्त्वतो यस्य नैवार्हत्यध्वशोधनम् । षड्विधस्याध्वनो रूपं न येन विदितं भवेत् ॥९॥
व्याप्यव्यापकता तेन ज्ञातुमेव न शक्यते । तस्मादध्वस्वरूपं च व्याप्यव्यापकतां तथा ॥१०॥
यथावदवगम्यैव कुर्यादध्वविशोधनम् । कुण्डमण्डलपर्यन्तं तत्र कृत्वा यथा पुरा ॥११॥
द्विहस्तमानं कुर्वीत प्राच्यां कलशमण्डलम् । ततः स्नातश्शिवाचार्यः सशिष्यः कृतनैत्यकः ॥१२॥
प्रविश्य मण्डलं शम्भोः पूजां पूर्ववदाचरेत् । तत्राढकावरैस्सिद्धं तंदुलैः पायसं प्रभोः ॥१३॥
अर्धं निवेद्य होमार्थं शेषं समुपकल्पयेत् । पुरतः कल्पिते वाथ मण्डले वर्णिमण्डिते ॥१४॥
स्थापयेत्पञ्चकलशान्दिक्षु मध्ये च देशिकः । तेषु ब्रह्माणि मूलार्णैर्बिन्दुनादसमन्वितैः ॥१५॥
नम आद्यैर्यकरान्तैः कल्पयेत्कल्पवित्तमः । ईशानं मध्यमे कुम्भे पुरुषं पुरतः स्थिते ॥१६॥
अघोरं दक्षिणे वामे वामं सद्यं च पश्चिमे । रक्षां विधाय मुद्रा च बद्ध् वा कुम्भाभिमन्त्रणम् ॥१७॥
कृत्वा शिवानलैर्होमं प्रारभेत्यथा पुरा । यदर्धं पायसं पूर्वं होमार्थं परिकल्पितम् ॥१८॥

हुत्वा शिष्यस्य तच्छेषं भोक्तुं समुपकल्पयेत् । तर्पणान्तं च मन्त्राणां कृत्वा कर्म यथा पुरा ॥१९॥
हुत्वा पूर्णाहुतिं तेषां ततः कुर्यात्प्रदीपनम् । ओंकारादनु हुंकारं ततो मूलं फडंतकम् ॥२०॥
स्वाहान्तं दीपने प्राहुरङ्गानि च यथाक्रमम् । तेषामाहुतयस्तिस्रो देया दीपनकर्मणि ॥२१॥
मन्त्रैरेकैकशस्तैस्तु विचिन्त्या दीप्तमूर्तयः । त्रिगुणं त्रिगुणी कृत्य द्विजकन्याकृतं सितम् ॥२२॥
सूत्रं सूत्रेण संमंत्र्य शिखाग्रे बन्धयेच्छिशोः । चरणाङ्गुष्ठपर्यन्तमूर्ध्वकायस्य तिष्ठतः ॥२३॥
लंबयित्वा तु तत्सूत्रं सुषुम्णां तत्र योजयेत् । शान्तया मुद्रयादाय मूलमन्त्रेण मन्त्रवित् ॥२४॥
हुत्वाहुतित्रयं तस्यास्सान्निध्यमुपकल्पयेत् । हृदि सन्ताड्य शिष्यस्य पुष्पक्षेपेण पूर्ववत् ॥२५॥
चैतन्यं समुपादाय द्वादशान्ते निवेद्य च । सूत्रं सूत्रेण संयोज्य संरक्ष्यास्त्रेण वर्मणा ॥२६॥
अवगुंठ्याथ तत्सूत्रं शिष्यदेहं विचिन्तयेत् । मूलत्रयमयं पाशं भोगभोग्यत्वलक्षणम् ॥२७॥
विषयेन्द्रियदेहादिजनकं तस्य भावयेत् । व्योमादिभूतरूपिण्यः शान्तयतीतादयः कलाः ॥२८॥
सूत्रे स्वनामभिर्योज्यः पूज्यश्चैव नमोयुतैः । अथवा बीजभूतैस्तत्कृत्वा पूर्वोदितं क्रमात् ॥२९॥
ततो मलादेस्तत्त्वादौ व्याप्तिं समलोकयेत् । कलाव्याप्तिं मलादौ च हुत्वा संदीपयेत्कलाः ॥३०॥
शिष्यं शिरसि सन्ताड्य सूत्रं देहे यथाक्रमम् । शान्तयतीतपदे सूत्रं लाञ्छयेन्मन्त्रमुच्चरन् ॥३१॥
एवं कृत्वा निवृत्त्यन्तं शान्तयतीतमनुक्रमात् । हुत्वाहुतित्रयं पश्चान्मण्डले च शिवं यजेत् ॥३२॥
देवस्य दक्षिणे शिष्यमुपवेश्योत्तरामुखम् । सदर्भे मण्डले दद्याद्धोमशिष्टं चरुं गुरुः ॥३३॥
शिष्यस्तद्गुरुणा दत्तं सत्कृत्य शिवपूर्वकम् । भुक्त्वा पश्चाद्द्विराचम्य शिवमन्त्रमुदीरयेत् ॥३४॥
अपरे मण्डले दद्यात्पञ्चगव्यं तथा गुरुः । सोऽपि तच्छक्तितः पीत्वा द्विराचम्य शिवं स्मरेत् ॥३५॥
तृतीये मण्डले शिष्यमुपवेश्य यथा पुरा । प्रदद्याद्दंतपवनं यथाशास्त्रोक्तलक्षणम् ॥३६॥
अग्रेण तस्य मृदुना प्राङ्मुखो वाप्युदङ्मुखः । वाचं नियम्य चासीनश्शिष्यो दंतान्विशोधयेत् ॥३७॥
प्रक्षाल्य दंतपवनं त्यक्त्वाचम्य शिवं स्मरेत् । प्रविशेद्देशिकादिष्टः प्रांजलिः शिवमण्डलम् ॥३८॥
त्यक्तं तद्दन्तपवनं दृश्यते गुरुणा यदि । प्रागुदक्पश्चिमे वाग्रे शिवमन्यच्छिवेतरम् ॥३९॥
अशस्ताशामुखे तस्मिन्गुरुस्तद्दोषशान्तये । शतमर्धं तदर्धं वाजुहुयान्मूलमन्त्रतः ॥४०॥
ततः शिष्यं समालभ्य जपित्वा कर्णयोः शिवम् । देवस्य दक्षिणे भागे तं शिष्यमधिवासयेत् ॥४१॥
अहतास्तरणास्तीर्णे स दर्भशयने शुचिः । मंत्रितेऽन्तः शिवं ध्यायञ्शयीत प्राक्छिरा निशि ॥४२॥
शिखायां बद्धसूत्रस्य शिखया तच्छिखां गुरुः । आबध्याहतवस्त्रेण तमाच्छाद्य च वर्मणा ॥४३॥
रेखात्रयं च परितो भस्मना तिलसर्षपैः । कृत्वास्त्रजप्तैस्तद्बाह्ये दिगीशानां बलिं हरेत् ॥४४॥
शिष्योऽपि परतोऽनश्नन्कृत्वैवमधिवासनम् । प्रबुध्योत्थाय गुरवे स्वप्नं दृष्टं निवेदयेत् ॥४५॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवदीक्षाविधानवर्णनं नाम सप्तदशोऽध्यायः ॥१७॥

आदितः श्लोकानां समष्ट्यङ्काः-२२,७६०+४५=२२,८०५



## ॥ अथाष्टादशोऽध्यायः ॥

उपमन्युरुवाच ॥

ततः स्नानादिकं सर्वं समाप्याचार्यचोदितः । गच्छेद्बद्धांजलिर्ध्यायञ्छिवमण्डलपार्श्वतः ॥१॥
अथ पूजां विना सर्वं कृत्वा पूर्वदिने यथा । नेत्रबन्धनपर्यन्तं दर्शयेन्मण्डलं गुरुः ॥२॥
बद्धनेत्रेण शिष्येण पुष्पावकिरणे कृते । यत्रापतन्ति पुष्पाणि तस्य नामाऽस्य संदिशेत् ॥३॥
तं चोपनीय निर्माल्यमण्डलेऽस्मिन्यथा पुरा । पूजयेद्देवमीशानं जुहुयाच्च शिवानले ॥४॥
शिष्येण यदि दुःस्वप्नो दृष्टस्तद्दोषशान्तये । शतमर्धं तदर्धं वा जुहुयान्मूलविद्यया ॥५॥
ततः सूत्रं शिखाबद्धं लंबयित्वा यथा पुरा । आधारपूजाप्रभृति यन्निवृत्तिकलाश्रयम् ॥६॥
वागीश्वरीपूजनान्तं कुर्याद्धोमपुरस्सरम् । अथ प्रणम्य वागीशां निवृत्तेर्व्यापिकां सतीम् ॥७॥

मण्डले देवमभ्यर्च्य हुत्वा चैवाहुतित्रयम् । प्रापयेच्च शिशोः प्राप्तिं युगपत्सर्वयोनिषु ॥८॥
सूत्रदेहेऽथ शिष्यस्य ताडनप्रोक्षणादिकम् । कृत्वात्मानं समादाय द्वादशान्ते निवेद्य च ॥९॥
ततोऽप्यादाय मूलेन मुद्रया शास्त्रदृष्टया । योजयेन्मनसाचार्यो युगपत्सर्वयोनिषु ॥१०॥
देवानां जातयश्चाष्टौ तिरश्चां पञ्च जातयः । जात्यैकया च मानुष्या योनयश्च चतुर्दश ॥११॥
तासु सर्वासु युगपत्प्रवेशाय शिशोर्धिया । वागीशान्यां यथान्यायं शिष्यात्मानं निवेशयेत् ॥१२॥
गर्भनिष्पत्तये देवं संपूज्य प्रणिपत्य च । हुत्वा चैव यथान्यायं निष्पन्नं तदनुस्मरेत् ॥१३॥
निष्पन्नस्यैवमुत्पत्तिमनुवृत्तिं च कर्मणा । आर्जवं भोगनिष्पत्तिः कुर्यात्प्रीतिं परां तथा ॥१४॥
निष्कृत्यर्थं च जात्यायुर्भोगसंस्कारसिद्धये । हुत्वाहुतित्रयं देवं प्रार्थयेद्देशिकोत्तमः ॥१५॥
भोक्तृत्वविषयासंगमलं तत्कायशोधनम् । कृत्वैवमेव शिष्यस्य छिंद्यात्पाशत्रयं ततः ॥१६॥
निकृत्या परि बद्धस्य पाशस्यात्यन्तभेदतः । कृत्वा शिष्यस्य चैतन्यं स्वच्छं मन्येत केवलम् ॥१७॥
हुत्वा पूर्णाहुतिं वह्नौ ब्रह्माणं पूजयेत्ततः । हुत्वाहुतित्रयं तस्मै शिवाज्ञामनुसंदिशेत् ॥१८॥
पितामह त्वया नास्य यातुः शैवं परं पदम् । प्रतिबन्धो विधातव्यः शैवाज्ञैषा गरीयसी ॥१९॥
इत्यादिश्य तमभ्यर्च्य विसृज च विधानतः । समभ्यर्च्य महादेवं जुहुयादाहुतित्रयम् ॥२०॥
निवृत्त्या शुद्धमुद्धृत्य शिष्यात्मानं यथा पुरा । निवेश्यात्मनि सूत्रे च वागीशं पूजयेत्ततः ॥२१॥
हुत्वाहुतित्रयं तस्मै प्रणम्य च विसृज्य ताम् । कुर्यान्निवृत्तः संधानं प्रतिष्ठां कलया सह ॥२२॥
संधाने युगपत्पूजां कृत्वा हुत्वाहुतित्रयम् । शिष्यात्मनः प्रतिष्ठायां प्रवेशं त्वथ भावयेत् ॥२३॥
ततः प्रतिष्ठामावाह्य कृत्वाशेषं पुरोदितम् । तद्व्याप्तिं व्यापिकां तस्य वागीशानीं च भावयेत् ॥२४॥
पूर्णेन्दुमण्डलप्रख्यां कृत्वा शेषं च पूर्ववत् । विष्णवे संविशेदाज्ञां शिवस्य परमात्मनः ॥२५॥
विष्णोर्विसर्जनाद्यं च कृत्वा शेषं च विद्यया । प्रतिष्ठामनुसंधाय तस्यां चापि यथा पुरा ॥२६॥
कृत्वानुचिन्त्य तद्व्याप्तिं वागीशां च यथाक्रमम् । दीप्ताग्नौ पूर्णहोमान्तं कृत्वा शेषं च पूर्ववत् ॥२७॥
नीलरुद्रमुपस्थाप्य तस्मै पूजादिकं तथा । कृत्वा कर्म शिवाज्ञां च दद्यात्पूर्वोक्तवर्त्मना ॥२८॥
तपस्तमपि चोद्वास्य कृत्वा तस्याथ शान्तये । विद्याकलां समाधाय तद्व्याप्तिं चावलोकयेत् ॥२९॥
स्वात्मनो व्यापिकां तद्वद्वागीशीं च यथा पुरा । बालार्कसदृशाकारां भासयन्तीं दिशो दश ॥३०॥
ततः शेषं यथापूर्वं कृत्वा देवं महेश्वरम् । आवाह्याराध्य हुत्वास्मै शिवाज्ञां मनसा दिशेत् ॥३१॥
महेश्वरं तथोत्सृज्य कृत्वान्यां च कलामिमाम् । शान्त्यतीतां कलां नीत्वा तद्व्याप्तिमवलोकयेत् ॥३२॥
स्वात्मनो व्यापिकां तद्वद्वागीशां च विचिन्तयेत् । नभोमण्डलसंकाशां पूर्णान्तं चापि पूर्ववत् ॥३३॥
कृत्वा शेषविधानेन समभ्यर्च्य सदा शिवम् । तस्मै समादिशेदाज्ञां शम्भोरमितकर्मणः ॥३४॥
तत्रापि च यथापूर्वं शिवं शिरसि पूर्ववत् । समभ्यर्च्य च वागीशं प्रणम्य च विसर्जयेत् ॥३५॥
ततश्शिवेन सम्प्रोक्ष्य शिष्यं शिरसि पूर्ववत् । विलयं शान्त्यतीतायाः शक्तितत्त्वेऽथ चिन्तयेत् ॥३६॥
षडध्वनः परे पारे सर्वाध्वव्यापिनी पराम् । कोटिसूर्यप्रतीकाशं शैवीं शक्तिश्च चिन्तयेत् ॥३७॥
तदग्रे शिष्यमानीय शुद्धस्फटिकनिर्मलम् । प्रक्षाल्य कर्तरीं पश्चाच्छिवशास्त्रोक्तमार्गतः ॥३८॥
कुर्यात्तस्य शिखाच्छेदं सह सूत्रेण देशिकः । ततस्तां गोमये न्यस्य शिवाग्नौ जुहुयाच्छिखाम् ॥३९॥
वौषडंतेन मूलेन पुनः प्रक्षाल्य कर्तरीम् । हस्ते शिष्यस्य चैतन्यं तद्देहे विनिवर्तयेत् ॥४०॥
ततः स्नातं समाचान्तं कृतस्वस्त्ययनं शिशुम् । प्रवेश्य मण्डलाभ्यासं प्रणिपत्य च दण्डवत् ॥४१॥
पूजां कृत्वा यथान्यायं क्रियावैकल्यशुद्धये । वाचकेनैव मन्त्रेण जुहुयादाहुतित्रयम् ॥४२॥
उपांशूच्चारयोगेन जुहुयादाहुतित्रयम् । पुनस्संपूज्य देवेशं मन्त्रवैकल्यशुद्धये ॥४३॥
मानसोच्चारयोगेन जुहुयादाहुतित्रयम् । तत्र शंभुं समाराध्य मण्डलस्थं सहांबया ॥४४॥
हुत्वाहुतित्रयं पश्चात्प्रार्थयेत्प्रांजलिर्गुरुः । भगवंस्त्वत्प्रसादेन शुद्धिरस्य षडध्वनः ॥४५॥
कृता तस्मात्परं धाम गमयैनं तवाव्ययम् । इति विज्ञाप्य देवाय नाडीसंधानपूर्वकम् ॥४६॥
पूर्णां तं पूर्ववत्कृत्वा ततो भूतानि शोधयेत् । स्थिरास्थिरे ततः शुद्ध्यै शीतोष्णे च ततः पदे ॥४७॥
ध्यायेद्व्याप्त्यैकताकारे भूतशोधनकर्मणि । भूतानां ग्रंथिविच्छेदं कृत्वा त्यक्त्वा सहाधिपैः ॥४८॥

भूतानि स्थितयोगेन यो जपेत्परमे शिवे । विशोध्यास्य तनुं दग्ध्वा प्लावयित्वा सुधाकणैः ॥४९॥
स्थाप्यात्मानं ततः कुर्याद्विशुद्धाध्वमयं वपुः । तत्रादौ शान्त्यतीतां तु व्यापिकां स्वाध्वनः कलाम् ॥५०॥
शुद्धामेव शिशोर्मूर्ध्नि न्यसेच्छान्तिमुखे तथा । विद्यां गलादिनाभ्यन्तं प्रतिष्ठां तदधः क्रमात् ॥५१॥
जान्वंतं तदधो न्यस्येन्निवृत्तिं चानुचिन्तयेत् । स्वबीजैस्सूत्रमन्त्रं च न्यस्यांगैस्तं शिवात्मकम् ॥५२॥
बुद्ध्वा तं हृदयांभोजे देवमावाह्य पूजयेत् । आशास्य नित्यसांनिध्यं शिवस्वात्म्यं शिशौ गुरुः ॥५३॥
शिवतेजोमयस्यास्य शिशोरापादयेद्गुणान् । अणिमादीन्प्रसीदेति प्रदद्यादाहुतित्रयम् ॥५४॥
तथैव तु गुणानेव पुनरस्योपपादयेत् । सर्वज्ञातां तथा तृप्तिं बोधं चाद्यन्तवर्जितम् ॥५५॥
अलुप्तशक्तिं स्वातन्त्र्यमनन्तां शक्तिमेव च । ततो देवमनुज्ञाप्य सद्यादिकलशैस्तु तम् ॥५६॥
अभिषिंचेत देवेशं ध्यायन्हृदि यथाक्रमम् । अथोपवेश्य तं शिष्यं शिवमभ्यर्च्य पूर्ववत् ॥५७॥
लब्धानुज्ञः शिवाच्छैवीं विद्यामस्मै समादिशेत् । ओंकारपूर्विकां तत्र संपुटान्तु नमोऽन्तगाम् ॥५८॥
शिवशक्तियुताञ्चैव शक्तिविद्यां च तादृशीम् । ऋषिं छन्दश्च देवं च शिवतां शिवयोस्तथा ॥५९॥
पूजां सावरणां शम्भोरासनानि च सन्दिशेत् । पुनः संपूज्य देवेशं यन्मया समनुष्ठितम् ॥६०॥
सुकृतं कुरु तत्सर्वमिति विज्ञापयेच्छिवम् । सहशिष्यो गुरुर्देवं दण्डवत्क्षितिमण्डले ॥६१॥
प्रणम्योद्वासयेत्तस्मान्मण्डलात्पावकादपि । ततः सदसिकाः सर्वे पूज्याः पूजार्हकाः क्रमात् ॥६२॥
सेव्या वित्तानुसारेण सदस्याश्च सहर्त्विजः । वित्तशाठ्यं न कुर्वीत यदीच्छेच्छिवमात्मनः ॥६३॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे षडध्वशुद्ध्यादिकथनं नामाष्टादशोऽध्यायः ॥१८॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,८०५+६३=२२,८६८



## ॥ अथैकोनविंशोऽध्यायः ॥

उपमन्युरुवाच ॥

अतः परं प्रवक्ष्यामि साधकं नाम नामतः । संस्कारमन्त्रमाहात्म्यं कथने सूचितं मया ॥१॥
संपूज्य मण्डले देवं स्थाप्य कुम्भे च पूर्ववत् । हुत्वा शिष्यमनुष्णीषं प्रापयेद्भुवि मण्डले ॥२॥
पूर्वान्तं पूर्ववत्कृत्वा हुत्वाहुतिशतं तथा । सन्तर्प्य मूलमन्त्रेण कलशैर्देशिकोत्तमः ॥३॥
सन्दीप्य च यथापूर्वं कृत्वा पूर्वोदितं क्रमात् । अभिषिच्य यथापूर्वं प्रदद्यान्मन्त्रमुत्तमम् ॥४॥
तत्र विद्योपदेशान्तं कृत्वा विस्तरशः क्रमात् । पुष्पाम्बुना शिशोः पाणौ विद्यां शैवीं समर्पयेत् ॥५॥
तवैहिकामुष्मिकयोः सर्वसिद्धिफलप्रदः । भवत्येव महामन्त्रः प्रसादात्परमेष्ठिनः ॥६॥
इत्युत्वा देवमभ्यर्च्य लब्धानुज्ञः शिवाद्गुरुः । साधनं शिवयोगं च साधकाय समादिशेत् ॥७॥
तच्छ्रुत्वा गुरुसंदेशं क्रमशो मन्त्रसाधकः । पुरतो विनियोगस्य मन्त्रसाधनमाचरेत् ॥८॥
साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते । पुरतश्चरणीयत्वाद्विनियोगाख्यकर्मणः ॥९॥
नात्यन्तं करणीयन्तु मुमुक्षोर्मन्त्रसाधनम् । कृतन्तु तदिहान्यत्र तास्यापि शुभदं भवेत् ॥१०॥
शुभेऽहनि शुभे देशे काले वा दोषवर्जिते । शुक्लदन्तनखः स्नातः कृतपूर्वाह्णिकक्रियः ॥११॥
अलंकृत्य यथा लब्धैर्गंधमाल्यविभूषणैः । सोष्णीषः सोत्तरासंगः सर्वशुक्लसमाहितः ॥१२॥
देवालये गृहेऽन्यस्मिन्देशे वा सुमनोहरे । सुखेनाभ्यस्तपूर्वेण त्वासनेन कृतासनः ॥१३॥
तनुं कृत्वात्मनः शैवीं शिवशास्त्रोक्तवर्त्मना । संपूज्य देवदेवेशं नकुलीश्वरमीश्वरम् ॥१४॥
निवेद्य पायसं तस्मै समप्याराधनं क्रमात् । प्रणिपत्य च तं देवं प्राप्तानुज्ञश्च तन्मुखात् ॥१५॥
कोटिवारं तदर्धं वा तदर्धं वा जपेच्छिवम् । लक्षविंशतिकं वापि दशलक्षमथापि वा ॥१६॥
ततश्च पायसाक्षारलवणैकमिताशनः । अहिंसकः क्षमी शान्तो दान्तश्चैव सदा भवेत् ॥१७॥
अलाभे पायसस्याश्नन्फलमूलादिकानि वा । विहितानि शिवेनैव विशिष्टान्युत्तरोत्तरम् ॥१८॥
चरुं भक्ष्यमथो सक्तुकणान्यावकमेव च । शाकं पयो दधि घृतं मूलं फलमथोदकम् ॥१९॥
अभिमंत्र्य च मन्त्रेण भक्ष्यभोज्यादिकानि च । साधनेऽस्मिन्विशेषेण नित्यं भुञ्जीत वाग्यतः ॥२०॥

मन्त्राष्टशतपूतेन जलेन शुचिना व्रती । स्नायान्नदीनदोत्थेन प्रोक्षयेद्वाथ शक्तितः ॥२१॥
तर्पयेच्च तथा नित्यं जुहुयाच्च शिवानले । सप्तभिः पञ्चभिर्द्रव्यैस्त्रिभिर्वाथ घृतेन वा ॥२२॥
इत्थं भक्त्या शिवं शैवो यः साधयति साधकः । तस्येहामुत्र दुष्प्रापं न किञ्चिदपि विद्यते ॥२३॥
अथवाऽहरहर्मंत्रं जपेदेकाग्रमानसः । अनश्नन्नेव साहस्रं विना मन्त्रस्य साधनम् ॥२४॥
न तस्य दुर्लभं किञ्चिन्न तस्यास्त्यशुभं क्वचित् । इह विद्यां श्रियं सौख्यं लब्ध्वा मुक्तिं च विंदति ॥२५॥
साधने विनियोगे च नित्ये नैमित्तिके तथा । जपेज्जलैर्भस्मना च स्नात्वा मन्त्रेण च क्रमात् ॥२६॥
शुचिर्बद्धशिखस्सूत्री सपवित्रकरस्तथा । धृतत्रिपुण्ड्ररुद्राक्षो विद्यां पञ्चाक्षरीं जपेत् ॥२७॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे साधकसंस्कारमन्त्रमाहात्म्यं नामैकोनविंशोऽध्यायः ॥१९॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,८६८+२७=२२,८९५



## ॥ अथ विंशोऽध्यायः ॥

उपमन्युरुवाच ॥

अथैवं संस्कृतं शिष्यं कृतपाशुपतव्रतम् । आचार्यत्वेऽभिषिंचेत तद्योगत्वेन चान्यथा ॥१॥
मण्डलं पूर्ववत्कृत्त्वा संपूज्य परमेश्वरम् । स्थापयत्पञ्चकलशान्दिक्षु मध्ये च पूर्ववत् ॥२॥
निवृत्तिं पुरतो न्यस्य प्रतिष्ठां पश्चिमे घटे । विद्यां दक्षिणतः शान्तिमुत्तरे मध्यतः पराम् ॥३॥
कृत्वा रक्षादिकं तत्र बद्ध्वा मुद्रां च धैनवीम् । अभिमंत्र्य घटान्हुत्वा पूर्णान्तं च यथा पुरा ॥४॥
प्रवेश्य मण्डले शिष्यमनुष्णीषं च देशिकः । तर्पणाद्यं तु मन्त्राणां कुर्यात्पूर्वावसानकम् ॥५॥
ततः संपूज्य देवेशमनुज्ञाप्य च पूर्ववत् । अभिषेकाय तं शिष्यमासनं त्वधिरोहयेत् ॥६॥
सकलीकृत्य तं पश्चात्कलापञ्चकरूपिणम् । न्यस्तमन्त्रतनुं बद्ध्वा शिवं शिष्यं समर्पयेत् ॥७॥
ततो निवृत्तिकुम्भादिघटानुद्धृत्य वै क्रमात् । मध्यमान्ताच्छिवेनैव शिष्यं तमभिषेचयत् ॥८॥
शिवहस्तं समर्प्याथ शिशोः शिरसि देशिकः । शिवभावसमापन्नः शिवाचार्यं तमादिशेत् ॥९॥
अथालंकृत्य तं देवमाराध्य शिवमण्डले । शतमष्टोत्तरं हुत्वा दद्यात्पूर्णाहुतिं ततः ॥१०॥
पुनः सम्पूज्य देवेशं प्रणम्य भुवि दण्डवत् । शिरस्यंजलिमाधाय शिवं विज्ञापयेद्गुरुः ॥११॥
भगवंस्त्वत्प्रसादेन देशिको.यं मया कृतः । अनुगृह्य त्वया देव दिव्याज्ञास्मै प्रदीयताम् ॥१२॥
एवं विज्ञाप्य शिष्येण सह भूयः प्रणम्य च । शिवं शिवागमं दिव्यं पूजयेच्छिववद्गुरुः ॥१३॥
पुनः शिवमनुज्ञाप्य शिवज्ञानस्य पुस्तकम् । उभाभ्यामथ पाणिभ्यां दद्याच्छिष्याय देशिकः ॥१४॥
स ताम्मूर्ध्नि समाधाय विद्यां विद्यासनोपरि । अधिरोप्य यथान्यायमभिवंद्य समर्चयेत् ॥१५॥
अथ तस्मै गुरुर्दद्याद्राजोपकरणान्यपि । आचार्यपदवीं प्राप्तो राज्यं चापि यतोऽर्हति ॥१६॥
अथानुशासनं कुर्यात्पूर्वैराचरितं यथा । यथा च शिवशास्त्रोक्तं यथा लोकेषु पूज्यते ॥१७॥
शिष्यान्परिक्ष्य यत्नेन शिवशास्त्रोक्तलक्षणैः । संस्कृत्य च शिवज्ञानं तेभ्यो दद्याच्च देशिकः ॥१८॥
एवं सर्वमनायासं शौचं क्षांतिं दयां तथा । अस्पृहामप्यसूयां च यत्नेन च विभावयेत् ॥१९॥
इत्थमादिश्य तं शिष्यं शिवमुद्वास्य मण्डलात् । शिवकुम्भानलादींश्च सदस्यानपि पूजयेत् ॥२०॥
युगपद्वाथ संस्कारान्कुर्वीत सगणो गुरुः । तत्र यत्र द्वयं वापि प्रयोगस्योपदिश्यते ॥२१॥
तदादावेव कलशान्कल्पयेदध्वशुद्धिवत् । कृत्वा समयसंस्कारमभिषेकं विनाखिलम् ॥२२॥
समभ्यर्च्य शिवं भूयः कृत्वा चाध्वविशोधनम् । तस्मिन्परिसमाप्ते तु पुनर्देवं प्रपूजयेत् ॥२३॥
हुत्वा मन्त्रन्तु सन्तर्प्य संदीप्याशास्य चेश्वरम् । समर्प्य मन्त्रं शिष्यस्य पाणौ शेषं समापयेत् ॥२४॥
अथवा मन्त्रसंस्कारमनुचिन्त्याखिलं क्रमात् । अध्वशुद्धिं गुरुः कुर्यादभिषेकावसानिकम् ॥२५॥
तत्र यः शान्त्यतीतादिकलासु विहितो विधिः । स सर्वोऽपि विधातव्यस्तत्त्वत्रयविशोधने ॥२६॥
शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमुदाहृतम् । शक्तौ शिवस्ततो विद्यात्तस्यास्त्वात्मा समुद्बभौ ॥२७॥

शिवेन शान्त्यतीताध्वा व्याप्तस्तदपरः परः । विद्यया परिशिष्टोऽध्वा ह्यात्मना निखिलः क्रमात् ॥२८॥
दुर्लभं शाम्भवं मत्वा मन्त्रमूलं मनीषिणः । शाक्तं शंसीत संस्कारं शिवशास्त्रार्थपारगाः ॥२९॥
इति ते सर्वमाख्यातं संस्काराख्यस्य कर्मणः । चातुर्विध्यमिदं कृष्ण किं भूय श्रोतुमिच्छसि ॥३०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे विशेषादिसंस्कृतिर्नाम विंशोऽध्यायः ॥२०॥
आदितः श्लोकानां समष्ट्यङ्काः-२२,८९५+३०=२२,९२५



## ॥ अथैकविंशोऽध्यायः ॥

कृष्ण उवाच ॥

भगवञ्छ्रोतुमिच्छामि शिवाश्रमनिषेविणाम् । शिवशास्त्रोदितं कर्म नित्यनैमित्तिकं तथा ॥१॥

उपमन्युरुवाच ॥

प्रातरुत्थाय शयनाद्ध्यात्वा देवं सहाम्बया । विचार्य कार्यं निर्गच्छेद्गृहादभ्युदितेऽरुणे ॥२॥
अबाधे विजने देशे कुर्यादावश्यकं ततः । कृत्वा शौचं विधानेन दंतधावनमाचरेत् ॥३॥
अलाभे दंतकाष्ठानामष्टम्यादिदिनेषु च । अपां द्वादशगण्डूषैः कुर्यादास्यविशोधनम् ॥४॥
आचम्य विधिवत्पश्चाद्वारुणं स्नानमाचरेत् । नद्यां वा देवखाते वा ह्रदे वाथ गृहेऽपि वा ॥५॥
स्नानद्रव्याणि तत्तीरे स्थापयित्वा बहिर्मलम् । व्यापो ह्य मृदमालिप्य स्नात्वा गोमयमालिपेत् ॥६॥
स्नात्वा पुनः पुनर्वस्त्रं त्यक्त्वावाथ विशोध्य च । सुस्नातो नृपवद्भूयः शुद्धं वासो वसीत च ॥७॥
मलस्नानं सुगन्धाद्यैः स्नानं दन्तविशोधनम् । न कुर्याद्ब्रह्मचारी च तपस्वी विधवा तथा ॥८॥
सोपवीतश्शिखां बद्ध्वा प्रविश्य च जलान्तरम् । अवगाह्य समाचान्तो जले न्यस्येत्त्रिमण्डलम् ॥९॥
सौम्ये मग्नः पुनर्मन्त्रं जपेच्छक्त्या शिवं स्मरेत् । उत्थायाचम्य तेनैव स्वात्मानमभिषेचयेत् ॥१०॥
गोशृंगेण सदर्भेण पालाशेन दलेन वा । पाद्मेन वाथ पाणिभ्यां पञ्चकृत्वस्त्रिरेव वा ॥११॥
उद्यानादौ गृहे चैव वर्धन्या कलशेन वा । अवगाहनकालेऽद्भिर्मन्त्रितैरभिषेचयेत् ॥१२॥
अथ चेद्वारुणं कर्तुमशक्तः शुद्धवाससा । आर्द्रेण शोधयेद्देहमापादतलमस्तकम् ॥१३॥
आग्नेयं वाथ वा मांत्रं कुर्यात्स्नानं शिवेन वा । शिवचिन्तापरं स्नानं युक्तस्यात्मीयमुच्यते ॥१४॥
स्वसूत्रोक्तविधानेन मन्त्राचमनपूर्वकम् । आचरेद्ब्रह्मयज्ञान्तं कृत्वा देवादितर्पणम् ॥१५॥
मण्डलस्थं महादेवं ध्यात्वाभ्यर्च्य यथाविधि । दद्यादर्घ्यं ततस्तस्मै शिवायादित्यरूपिणे ॥१६॥
अथ वैतत्स्वसूत्रोक्तं कृत्वा हस्तौ विशोधयेत् । करन्यासं ततः कृत्वा सकलीकृतविग्रहः ॥१७॥
वामहस्तगतांभोभिर्गंधसिद्धार्थकान्वितैः । कुशपुञ्जेन वाभ्युक्ष्य मूलमन्त्रसमन्वितैः ॥१८॥
आपोहिष्ठादिभिर्मन्त्रैः शेषमाघ्राय वै जलम् । वामनासापुटेनैव देवं संभावयेत्सितम् ॥१९॥
अर्घमादाय देहस्थं सव्यनासापुटेन च । कृष्णवर्णेन बाह्यस्थं भावयेच्च शिलागतम् ॥२०॥
तर्पयेदथ देवेभ्य ऋषिभिश्च विशेषतः । भूतेभ्यश्च पितृभ्यश्च दद्यादर्घ्यं यथाविधि ॥२१॥
रक्तचंदनतोयेन हस्तमात्रेण मण्डलम् । सुवृत्तं कल्पयेद्भूमौ रक्तचूर्णाद्यलंकृतम् ॥२२॥
तत्र संपूजयेद्भानुं स्वकीयावरणैः सह । स्वखोल्कायेति मन्त्रेण साङ्गतस्सुखसिद्धये ॥२३॥
पुनश्च मण्डलं कृत्वा तदंगैः परिपूज्य च । तत्र स्थाप्य हेमपात्रं मागधप्रस्थसंमितम् ॥२४॥
पूरयेद्गंधतोयेन रक्तचंदनयोगिना । रक्तपुष्पैस्तिलैश्चैव कुशाक्षतसमन्वितैः ॥२५॥
दूर्वापामार्गगव्यैश्च केवलेन जलेन वा । जानुभ्यां धरणीं गत्वा नत्वा देवं च मण्डले ॥२६॥
कृत्वा शिरसि तत्पात्रं दद्यादर्घ्यं शिवाय तत् । अथवांजलिना तोयं सदर्भं मूलविद्यया ॥२७॥
उत्क्षिपेदम्बरस्थाय शिवायादित्यमूर्तये । कृत्वा पुनः करन्यासं करशोधनपूर्वकम् ॥२८॥
बुद्ध्वेशानादिसद्यान्तं पञ्चब्रह्ममयं शिवम् । गृहीत्वा भसितं मन्त्रैर्विमृज्याङ्गानि संस्पृशेत् ॥२९॥
या दिनान्तैश्शिरोवक्त्रहृद्गुह्यचरणान्क्रमात् । ततो मूलेन सर्वाङ्गमालभ्य वसनान्तरम् ॥३०॥
परिधाय द्विराचम्य प्रोक्ष्यैकादशमन्त्रितैः । जलैराच्छाद्य वासोऽयदद्विराचम्य शिवं स्मरेत् ॥३१॥

पुनर्न्यस्तकरो मन्त्री त्रिपुण्ड्रं भस्मना लिखेत् । अवक्रमाय तं व्यक्तं ललाटे गन्धवारिणा ॥३२॥
वृत्तं वा चतुरस्रं वा बिन्दुमर्धेन्दुमेव वा । ललाटे यादृशं पुण्ड्रं लिखितं भस्मना पुनः ॥३३॥
तादृशं भुजयोर्मूर्ध्नि स्तनयोरन्तरे लिखेत् । सर्वाङ्गोद्धूलनं चैव न समानं त्रिपुण्ड्रकैः ॥३४॥
तस्मात्त्रिपुण्ड्रमेवैकं लिखेदुद्धूलनं विना । रुद्राक्षान्धारयेमूर्ध्नि कण्ठे श्रोते करे तथा ॥३५॥
सुवर्णवर्णमच्छिन्नं शुभं नान्यैर्धृतं शुभम् । विप्रादीनां क्रमाच्छ्रेष्ठं पीतं रक्तमथासितम् ॥३६॥
तदलाभे यथालाभं धारणीयमदूषितम् । तत्रापि नोत्तरं नीचैर्धार्यं नीचमथोत्तरैः ॥३७॥
नाशुचिर्धारयेदक्षं सदा कालेषु धारयेत् । इत्थं त्रिसंध्यमथवा द्विसंध्यं सकृदेव वा ॥३८॥
कृत्वा स्नानादिकं शक्त्या पूजयेत्परमेश्वरम् । प्रजास्थानं समासाद्य बद्ध् वा रुचिरमासनम् ॥३९॥
ध्यायेद्देवं च देवीं च प्राङ्मुखो वाप्युदङ्मुखः । श्वेतादीन्नकुलीशान्तांस्तच्छिष्यान्प्रणमेद्गुरुम् ॥४०॥
पुनर्देवं शिवं नत्वा ततो नामाष्टकं जपेत् । शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ॥४१॥
संसारवैद्यस्सर्वज्ञः परमात्मेति चाष्टकम् । अथवा शिवमेवैकं जपित्वैकादशाधिकम् ॥४२॥
जिह्वाग्रे तेजसो राशिं ध्यात्वाव्याध्यादिशान्तये । प्रक्षाल्य चरणौ कृत्वा करौ चंदनचर्चितौ ॥
प्रकुर्वीत करन्यासं करशोधनपूर्वकम् ॥४३॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नित्यनैमित्तिककर्मवर्णनं नामैकविंशोऽध्यायः ॥२१॥

आदितः श्लोकानां समष्ट्यङ्काः-२२,९२५+४३=२२,९६८



## ॥ अथ द्वाविंशोऽध्यायः ॥

उपमन्युरुवाच ॥

न्यासस्तु त्रिविधः प्रोक्तः स्थित्युत्पत्तिलयक्रमात् । स्थितिर्न्यासो गृहस्थानामुत्पत्तिर्ब्रह्मचारिणाम् ॥१॥
यतीनां सं हृतिन्यासो वनस्थानां तथैव च । स एव भर्तृहीनायाः कुटुम्बिन्याः स्थितिर्भवेत् ॥२॥
कन्यायाः पुनरुत्पत्तिं वक्ष्ये न्यासस्य लक्षणम् । अङ्गुष्ठादिकनिष्ठान्तं स्थितिन्यास उदाहृतः ॥३॥
दक्षिणाङ्गुष्ठमारभ्य वामाङ्गुष्ठान्तमेव च । उत्पत्तिन्यास आख्यातो विपरीतस्तु सं हृतिः ॥४॥
सबिंदुकान्नकारादीन्वर्णान्न्यस्येदनुक्रमात् । अङ्गुलीषु शिवं न्यस्येत्तलयोरप्यनामयोः ॥५॥
अस्त्रन्यासं ततः कृत्वा दशादिक्ष्वस्त्रमन्त्रतः । निवृत्त्यादिकलाः पञ्च पञ्चभूतस्वरूपिणीः ॥६॥
पञ्चभूताधिपैस्सार्धं ततच्चिह्नसमन्विताः । हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रसमाश्रयाः ॥७॥
तद्तद्बीजेन संग्रंथीस्तद्तद्बीजेषु भावयेत् । तासां विशोधनार्थाय विद्यां पञ्चाक्षरीं जपेत् ॥८॥
निरुद्ध्वा प्राणवायुं च गुणसंख्यानुसारतः । भूतग्रंथिं ततश्छिद्यादस्त्रेणैवास्त्रमुद्रया ॥९॥
नाड्या सुषुम्नयात्मानं प्रेरितं प्राणवायुना । निर्गतं ब्रह्मरन्ध्रेण योजयेच्छिवतेजसा ॥१०॥
विशोष्य वायुना पश्चाद्देहं कालाग्निना दहेत् । ततश्चोपरिभावेन कलास्सं हृत्य वायुना ॥११॥
देहं सं हृत्य वै दग्धं कलास्स्पृष्ट्वा सहाब्धिना । प्लावयित्वामृतैर्देहं यथास्थानं निवेशयेत् ॥१२॥
अथ सं हृत्य वै दग्धः कलासर्गं विनैव तु । अमृतप्लावनं कुर्याद्भस्मीभूतस्य वै ततः ॥१३॥
ततो विद्यामये तस्मिन्देहे दीपशिखाकृतिम् । शिवान्निर्गतमात्मानं ब्रह्मरन्ध्रेण योजयेत् ॥१४॥
देहस्यान्तः प्रविष्टं तं ध्यात्वा हृदयपंकजे । पुनश्चामृतवर्षेण सिञ्चेद्विद्यामयं वपुः ॥१५॥
ततः कुर्यात्करन्यासं करशोधनपूर्वकम् । देहन्यासं ततः पश्चान्महत्या मुद्रया चरेत् ॥१६॥
अङ्गन्यासं ततः कृत्वा शिवोक्तेन तु वर्त्मना । वर्णन्यासं ततः कुर्याद्धस्तपादादिसंधिषु ॥१७॥
षडंगानि ततो न्यस्य जातिषट्कयुतानि च । दिग्बन्धमाचरेत्पश्चादाग्नेयादि यथाक्रमम् ॥१८॥
यद्वा मूर्धादिपञ्चाङ्गं न्यासमेव समाचरेत् । तथा षडङ्गन्यासं च भूतशुद्ध्यादिकं विना ॥१९॥
एवं समासरूपेण कृत्वा देहात्मशोधनम् । शिवभावमुपागम्य पूजयेत्परमेश्वरम् ॥२०॥
अथ यस्यास्त्यवसरो नास्ति वा मतिविभ्रमः । स विस्तीर्णेन कल्पेन न्यासकर्म समाचरेत् ॥२१॥

तत्राद्यो मातृकान्यासो ब्रह्मन्यासस्ततः परः । तृतीयः प्रणवन्यासो हंसन्यासस्तदुत्तरः ॥२२॥
पञ्चमः कथ्यते सद्भिर्न्यासः पञ्चाक्षरात्मकः । एतेष्वेकमनेकं वा कुर्यात्पूजादि कर्मसु ॥२३॥
अकारं मूर्ध्नि विन्यस्य आकारं च ललाटके । इं ईं च नेत्रयोस्तद्वतुं ऊं श्रवणयोस्तथा ॥२४॥
ऋं ॠं कपोलयोश्चैव लृं ॡं नासापुटद्वये । एमेमोष्ठद्वयोरोमौं दंतपंक्तिद्वयोः क्रमात् ॥२५॥
अं जिह्वायामथो तालुन्यः प्रयोज्यो यथाक्रमम् । कवर्गं दक्षिणे हस्ते न्यसेत्पञ्चसु संधिषु ॥२६॥
चवर्गं च तथा वामहस्तसंधिषु विन्यसेत् । टवर्गं च तवर्गं च पादयोरुभयोरपि ॥२७॥
पफौ तु पार्श्वयोः पृष्ठे नाभौ चापि बभौ ततः । न्यसेन्मकारं हृदये त्वगादिषु यथाक्रमम् ॥२८॥
यकरादिसकारान्तान्न्यसेत्सप्तसु धातुषु । हङ्कारं हृदयस्यान्तः क्षकारं भ्रूयुगान्तरे ॥२९॥
एवं वर्णान्प्रविन्यस्य पञ्चाशदुद्वर्त्मना । अङ्गवक्त्रकलाभेदात्पञ्च ब्रह्माणि विन्यसेत् ॥३०॥
करन्यासाद्यमपि तैः कृत्वा वाथ न वा क्रमात् । शिरोवदनहृद्गुह्यपादेष्वेतानि कल्पयेत् ॥३१॥
ततश्चोर्ध्वादिवक्त्राणि पश्चिमान्तानि कल्पयेत् । ईशानस्य कलाः पञ्च पञ्चस्वेतेषु च क्रमात् ॥३२॥
ततश्चतुर्षु वक्त्रेषु पुरुषस्य कला अपि । चतस्रः प्रणिधातव्याः पूर्वादिक्रमयोगतः ॥३३॥
हृत्कण्ठांसेषु नाभौ च कुक्षौ पृष्ठे च वक्षसि । अघोरस्य कलाश्चाष्टौ पादयोरपि हस्तयोः ॥३४॥
पश्चात्त्रयोःदशकलाः पायुमेढ्रोरुजानुषु । जंघास्फिक्कटिपार्श्वेषु वामदेवस्य भावयेत् ॥३५॥
घ्राणे शिरसि बाह्वोश्च कल्पयेत्कल्पवित्तमः । अष्टत्रिंशत्कलान्यासमेवं कृत्वानुपूर्वशः ॥३६॥
पश्चात्प्रणवविद्धीमान्प्रणवन्यासमाचरेत् । बाहुद्वये कूर्परयोस्तथा च मणिबन्धयोः ॥३७॥
पार्श्वोदरोरुजंघेषु पादयोः पृष्ठतस्तथा । इत्थं प्रणवविन्यासं कृत्वा न्यासविचक्षणः ॥३८॥
हंसन्यासं प्रकुर्वीत शिवशास्त्रे यथोदितम् । बीजं विभज्य हंसस्य नेत्रयोर्घ्राणयोरपि ॥३९॥
विभज्य बाहुनेत्रास्यल्लाटे घ्राणयोरपि । कक्षयोः स्कन्धयोश्चैव पार्श्वयोस्तनयोस्तथा ॥४०॥
कठचोः पाण्योर्गुल्फयोश्च यद्वा पञ्चाङ्गवर्त्मना । हंसन्यासमिमं कृत्वा न्यसेत्पञ्चाक्षरीं ततः ॥४१॥
यथा पूर्वोक्तमार्गेण शिवत्वं येन जायते । ना शिवः शिवमभ्यस्येन्ना शिवः शिवमर्चयेत् ॥४२॥
ना शिवस्तु शिवं ध्यायेन्ना शिवम्प्राप्नुयाच्छिवम् । तस्माच्छैवीं तनुं कृत्वा त्यक्त्वा च पशुभावनाम् ॥
शिवोऽहमिति संचिन्त्य शैवं कर्म समाचरेत् ॥४३॥
कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः । ध्यानयज्ञो ज्ञानयज्ञः पञ्च यज्ञाः प्रकीर्तिताः ॥४४॥
कर्मयज्ञरताः केचित्तपोयज्ञरताः परे । जपयज्ञरताश्चान्ये ध्यानयज्ञरतास्तथा ॥४५॥
ज्ञानयज्ञरताश्चान्ये विशिष्टाश्चोत्तरोत्तरम् । कर्मयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः ॥४६॥
कामान्कामी ततो भुक्त्वा कामासक्तः पुनर्भवेत् । अकामे रुद्रभवने भोगान्भुक्त्वा ततश्च्युतः ॥४७॥
तपोयज्ञरतो भूत्वा जायते नात्र संशयः । तपस्वी च पुनस्तस्मिन्भोगान् भुक्त्वा ततश्च्युतः ॥४८॥
जपध्यानरतो भूत्वा जायते भुवि मानवः । जपध्यानरतो मर्त्यस्तद्वैशिष्ट्यवशादिह ॥४९॥
ज्ञानं लब्ध्वाचिरादेव शिवसायुज्यमाप्नुयात् । तस्मान्मुक्तो शिवाज्ञप्तः कर्मयज्ञोऽपि देहिनाम् ॥५०॥
अकामः कामसंयुक्तो बन्धायैव भविष्यति । तस्मात्पञ्चसु यज्ञेषु ध्यानज्ञानपरो भवेत् ॥५१॥
ध्यानं ज्ञानं च यस्यास्ति तीर्णस्तेन भवार्णवः । हिंसादिदोषनिर्मुक्तो विशुद्धश्चित्तसाधनः ॥५२॥
ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः । बहिः कर्मकरा यद्वन्नातीव फलभागिनः ॥५३॥
दृष्ट्वा नरेन्द्रभवने तद्वदत्रापि कर्मिणः । ध्यानिनां हि वपुः सूक्ष्मं भवेत्प्रत्यक्षमैश्वरम् ॥५४॥
यथेह कर्मणां स्थूलं मृत्काष्ठाद्यैः प्रकल्पितम् । ध्यानयज्ञरतास्तस्माद्देवान्पाषाणमृण्मयान् ॥५५॥
नात्यन्तं प्रतिपद्यंते शिवयाथात्म्यवेदनात् । आत्मस्थं यः शिवं त्यक्त्वा बहिरभ्यर्चयेन्नरः ॥५६॥
हस्तस्थं फलमुत्सृज्य लिहेत्कूर्परमात्मनः । ज्ञानाद्ध्यानं भवेद्ध्यानाज्ज्ञानं भूयः प्रवर्तते ॥५७॥
तदुभाभ्यां भवेन्मुक्तिस्तस्माद्ध्यानरतो भवेत् । द्वादशान्ते तथा मूर्ध्नि ललाटे भ्रूयुगान्तरे ॥५८॥
नासाग्रे वा तथास्ये वा कन्धरे हृदये तथा । नाभौ वा शाश्वतस्थाने श्रद्धाविद्धेन चेतसा ॥५९॥
बहिर्यागोपचारेण देवं देवीं च पूजयेत् । अथवा पूजयेन्नित्यं लिङ्गे वा कृतकेपि वा ॥६०॥
वह्नौ वा स्थण्डिले वाथ भक्त्या वित्तानुसारतः । अथवान्तर्बहिश्चैव पूजयेत्परमेश्वरम् ॥

अंतर्यागरतः पूजां बहिः कुर्वीत वा न वा ॥६१॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवशास्त्रोक्तनित्यनैमित्तिककर्मवर्णनं नाम द्वाविंशोऽध्यायः ॥२२॥
आदितः श्लोकानां समष्टयङ्काः-२२,९६८+६१=२३,०२९



## ॥ अथ त्रयोविंशोऽध्यायः ॥

उपमन्युरुवाच ॥
व्याख्यां पूजाविधानस्य प्रवदामि समासतः । शिवशास्त्रे शिवेनैव शिवायै कथितस्य तु ॥१॥
अङ्गमभ्यन्तरं यागमग्निकार्यावसानकम् । विधाय वा न वा पश्चाद्बहिर्यागं समाचरेत् ॥२॥
तत्र द्रव्याणि मनसा कल्पयित्वा विशोध्य च । ध्यात्वा विनायकं देवं पूजयित्वा विधानतः ॥३॥
दक्षिणे चोत्तरे चैव नंदीशं सुयशं तथा । आराध्य मनसा सम्यगासनं कल्पयेद्बुधः ॥४॥
आराधनादिकैर्युक्तस्सिंहयोगासनादिकम् । पद्मासनं वा विमलं तत्त्वत्रयसमन्वितम् ॥५॥
तस्योपरि शिवं ध्यायेत्सांबं सर्वमनोहरम् । सर्वलक्षणसंपन्नं सर्वावयवशोभनम् ॥६॥
सर्वातिशयसंयुक्तं सर्वाभरणभूषितम् । रक्तास्यपाणिचरणं कुंदचंद्रस्मिताननम् ॥७॥
शुद्धस्फटिकसंकाशं फुल्लपद्मत्रिलोचनम् । चतुर्भुजमुदाराङ्गं चारुचंद्रकलाधरम् ॥८॥
वरदाभयहस्तं च मृगटंकधरं हरम् । भुजंगहारवलयं चारुनीलगलान्तरम् ॥९॥
सर्वोपमानरहितं सानुगं सपरिच्छदम् । ततः संचिन्तयेत्तस्य वामभागे महेश्वरीम् ॥१०॥
प्रफुल्लोत्पलपत्राभां विस्तीर्णायतलोचनाम् । पूर्णचंद्राभवदनां नीलकुंचितमूर्धजाम् ॥११॥
नीलोत्पलदलप्रख्यां चन्द्रार्धकृतशेखराम् । अतिवृत्तघनोत्तुंगस्निग्धपीनपयोधराम् ॥१२॥
तनुमध्यां पृथुश्रोणीं पीतसूक्ष्मवराम्बराम् । सर्वाभरणसंपन्नां ललाटतिलकोज्वलाम् ॥१३॥
विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम् । सर्वतोऽनुगुणाकारां किञ्चिल्लज्जानताननाम् ॥१४॥
हेमारविंदं विलसद्धानां दक्षिणे करे । दण्डवच्चापरं हस्ते न्यस्यासीनां महासने ॥१५॥
पाशविच्छेदिकां साक्षात्सच्चिदानन्दरूपिणीम् । एवं देवं च देवीं च ध्यात्वासनवरे शुभे ॥१६॥
सर्वोपचारवद्भक्त्या भावपुष्पैस्समर्चयेत् । अथवा परिकल्प्यैवं मूर्तिमन्यतमां विभोः ॥१७॥
शैवीं सदा शिवाख्यां वा तथा माहेश्वरीं पराम् । षड्विंशकाभिधानां वा श्रीकण्ठाख्यामथापि वा ॥१८॥
मन्त्रन्यासादिकां चापि कृत्वा स्वस्यां तनौ यथा । अस्यां मूर्तौ मूर्तिमंतं शिवं सदसतः परम् ॥१९॥
ध्यात्वा बाह्यक्रमेणैव पूजां निर्वर्तयेद्धिया । समिदाज्यादिभिः पश्चान्नाभौ होमं च भावयेत् ॥२०॥
भ्रूमध्ये च शिवं ध्यायेच्छुद्धदीपशिखाकृतिम् । इत्थमङ्गे स्वतंत्रे वा योगे ध्यानमये शुभे ॥२१॥
अग्निकार्यावसानं च सर्वत्रैव समो विधिः । अथ चिन्तामयं सर्वं समाप्याराधनक्रमम् ॥
लिङ्गे च पूजयेद्देवं स्थण्डिले वानलेऽपि वा ॥२२॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पूजाविधानव्याख्यानवर्णनं नाम त्रयोविंशोऽध्यायः ॥२३॥
आदितः श्लोकानां समष्टयङ्काः-२३,०२९+२२=२३,०५१



## ॥ अथ चतुर्विंशोऽध्यायः ॥

उपमन्युरुवाच ॥
प्रोक्षयेन्मूलमन्त्रेण पूजास्थानं विशुद्धये । गन्धचन्दनतोयेन पुष्पं तत्र विनिक्षिपेत् ॥१॥
अस्त्रेणोत्सार्य वै विघ्नानवगुण्ठ्य च वर्मणा । अस्त्रं दिक्षु प्रविन्यस्य कल्पयेदर्चनाभुवम् ॥२॥
तत्र दर्भान्परिस्तीर्य क्षालयेत्प्रोक्षणादिभिः। संशोध्य सर्वपात्राणि द्रव्यशुद्धिं समाचरेत् ॥३॥
प्रोक्षणीमर्घ्यपात्रं च पाद्यपात्रमतः परम् । तथैवाचमनीयस्य पात्रं चेति चतुष्टयम् ॥४॥

प्रक्षाल्य प्रोक्ष्य वीक्ष्याथ क्षिपेत्तेषु जलं शिवम् । पुण्यद्रव्याणि सर्वाणि यथालाभं विनिक्षिपेत् ॥५॥
रत्नानि रजतं हेम गन्धपुष्पाक्षतादयः । फलपल्लवदर्भाश्च पुण्यद्रव्याण्यनेकधा ॥६॥
स्नानोदके सुगन्धादि पानीये च विशेषतः । शीतलानि मनोज्ञानी कुसुमादीनि निक्षिपेत् ॥७॥
उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत् । जातिकंकोलकर्पूरबहुमूलतमालकान् ॥८॥
क्षिपेदाचमनीये च चूर्णयित्वा विशेषतः । एलां पात्रेषु सर्वेषु कर्पूरं चन्दनं तथा ॥९॥
कुशाग्राण्यक्षतांश्चैव यवव्रीहितिलानपि । आज्यसिद्धार्थपुष्पाणि भसितञ्चार्घ्यपात्रके ॥१०॥
कुशपुष्पयवव्रीहिबहुमूलतमालकान् । प्रक्षिपेत्प्रोक्षणीपात्रे भसितं च यथाक्रमम् ॥११॥
सर्वत्र मन्त्रं विन्यस्य वर्मणावेष्ट्य बाह्यतः । पश्चादस्त्रेण संरक्ष्य धेनुमुद्रां प्रदर्शयेत् ॥१२॥
पूजाद्रव्याणि सर्वाणि प्रोक्षणीपात्रवारिणा । सम्प्रोक्ष्य मूलमन्त्रेण शोधयेद्विधिवत्ततः ॥१३॥
पात्राणां प्रोक्षणीमेकामलाभे सर्वकर्मसु । साधयेदर्घ्यमद्भिस्तत्सामान्यं साधकोत्तमः ॥१४॥
ततो विनायकं देवं भक्ष्यभोज्यादिभिः क्रमात् । पूजयित्वा विधानेन द्वारपार्श्वेऽथ दक्षिणे ॥१५॥
अन्तःपुराधिपं साक्षान्नन्दिनं सम्यगर्चयेत् । चामीकराचलप्रख्यं सर्वाभरणभूषितम् ॥१६॥
बालेन्दुमुकुटं सौम्यं त्रिनेत्रं च चतुर्भुजम् । दीप्तशूलमृगीटंकतिग्मवेत्रधरं प्रभुम् ॥१७॥
चन्द्रबिम्बाभवदनं हरिवक्त्रमथापि वा । उत्तरे द्वारपार्श्वस्य भार्यां च मरुतां सुताम् ॥१८॥
सुयशां सुव्रतामम्बां पादमण्डनतत्पराम् । पूजयित्वा प्रविश्यान्तर्भवनं परमेष्ठिनः ॥१९॥
संपूज्य लिङ्गं तैर्द्रव्यैर्निर्माल्यमपनोदयेत् । प्रक्षाल्य पुष्पं शिरसि न्यसेत्तस्य विशुद्धये ॥२०॥
पुष्पहस्तो जपेच्छक्त्या मन्त्रं मन्त्रविशुद्धये । ऐशान्यां चन्द्रमाराध्य निर्माल्यं तस्य दापयेत् ॥२१॥
कल्पयेदासनं पश्चादाधारादि यथाक्रमम् । आधारशक्तिं कल्याणीं श्यामां ध्यायेदधो भुवि ॥२२॥
तस्याः पुरस्तादुत्कण्ठमनन्तं कुण्डलाकृतिम् । धवलं पञ्चफणिनं लेलिहानमिवाम्बरम् ॥२३॥
तस्योपर्यासनं भद्रं कण्ठीरवचतुष्पदम् । धर्मो ज्ञानं च वैराग्यमैश्वर्यञ्च पदानि वै ॥२४॥
आग्नेयादिश्वेतरक्तपीतश्यामानि वर्णतः । अधर्मादीनि पूर्वादीन्युत्तरान्तान्यनुक्रमात् ॥२५॥
राजावर्तमणिप्रख्यान्यस्य गात्राणि भावयेत् । अस्योर्ध्वच्छादनं पद्ममासनं विमलं सितम् ॥२६॥
अष्टपत्राणि तस्याहुरणिमादिगुणाष्टकम् । केसराणि च वामाद्या रुद्रावामादिशक्तिभिः ॥२७॥
बीजान्यपि च ता एव शक्तयोंतर्मनोन्मनीः । कर्णिकापरवैराग्यं नालं ज्ञानं शिवात्मकम् ॥२८॥
कन्दश्च शिवधर्मात्मा कर्णिकान्ते त्रिमण्डले । त्रिमण्डलोपर्यात्मादि तत्त्वत्रितयमासनम् ॥२९॥
सर्वासनोपरि सुखं विचित्रास्तरणास्तृतम् । आसनं कल्पयेद्दिव्यं शुद्धविद्यासमुज्ज्वलम् ॥३०॥
आवाहनं स्थापनं च सन्निरोधं निरीक्षणम् । नमस्कारं च कुर्वीत बध्वा मुद्राः पृथक्पृथक् ॥३१॥
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं ततः परम् । धूपं दीपं च तांबूलं दत्त्वाथ स्वापयेच्छिवौ ॥३२॥
अथवा परिकल्प्यैवमासनं मूर्तिमेव च । सकलीकृत्य मूलेन ब्रह्माभिश्चापरैस्तथा ॥३३॥
आवाह्येत्ततो देव्या शिवं परमकारणम् । शुद्धस्फटिकसंकाशं देवं निश्चलमक्षरम् ॥३४॥
कारणं सर्वलोकानां सर्वलोकमयं परम् । अंतर्बहिःस्थितं व्याप्य ह्यणोरणु महत्तरम् ॥३५॥
भक्तानामप्रयत्नेन दृश्यमीश्वरमव्ययम् । ब्रह्मेंद्रविष्णुरुद्राद्यैरपि देवैरगोचरम् ॥३६॥
देवसारं च विद्वद्भिरगोचरमिति श्रुतम् । आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ॥३७॥
शिवतत्त्वमिति ख्यातं शिवार्थं जगति स्थिरम् । पञ्चोपचारवद्भक्त्या पूजयेल्लिंगमुत्तमम् ॥३८॥
लिङ्गमूर्तिर्महेशस्य शिवस्य परमात्मनः । स्नानकाले प्रकुर्वीत जयशब्दादिमङ्गलम् ॥३९॥
पञ्चगव्यघृतक्षीरदधिमध्वादिपूर्वकैः । मूलैः फलानां सारैश्च तिलसर्षपसक्तुभिः ॥४०॥
बीजैर्यवादिभिश्शस्तैश्चूर्णैर्माषादिसंभवैः । संस्नाप्यालिप्य पिष्टाद्यैः स्नापयेदुष्णवारिभिः ॥४१॥
घर्षयेद्बिल्वपत्राद्यैर्लेपगन्धापनुत्तये । पुनः संस्नाप्य सलिलैश्चक्रवर्त्युपचारतः ॥४२॥
सुगन्धामलकं दद्याद्धरिद्रां च यथाक्रमम् । ततः संशोध्य सलिलैर्लिंगं बेरमथापि वा ॥४३॥
स्नापयेद्गंधतोयेन कुशपुष्पोदकेन च । हिरण्यरत्नतोयैश्च मन्त्रसिद्धैर्यथाक्रमम् ॥४४॥
असंभवे तु द्रव्याणां यथासंभवसंभृतैः । केवलैर्मंत्रतोयैर्वा स्नापयेच्छ्रद्धया शिवम् ॥४५॥

कलशेनाथ शंखेन वर्धन्या पाणिना तथा । सकुशेन सपुष्पेण स्नापयेन्मन्त्रपूर्वकम् ॥४६॥
पवमानेन रुद्रेण नीलेन त्वरितेन च । लिङ्गसूक्तादिसूक्तैश्च शिरसाथर्वणेन च ॥४७॥
ऋग्भिश्च सामभिः शैवैर्ब्रह्मभिश्चापि पञ्चभिः । स्नापयेद्देवदेवेशं शिवेन प्रणवेन च ॥४८॥
यथा देवस्य देव्याश्च कुर्यात्स्नानादिकं तथा । न तु कश्चिद्विशेषोऽस्ति तत्र तौ सदृशौ यतः ॥४९॥
प्रथमं देवमुद्दिश्य कृत्वा स्नानादिकाः क्रियाः । देव्यैः प्रश्चात्प्रकुर्वीत देवदेवस्य शासनात् ॥५०॥
अर्धनारीश्वरे पूज्ये पौर्वापर्यं न विद्यते । तत्र तत्रोपचाराणां लिङ्गे वान्यत्र वा क्वचित् ॥५१॥
कृत्वाऽभिषेकं लिङ्गस्य शुचिना च सुगन्धिना । संमृज्य वाससा दद्यादंबरं चोपवीतकम् ॥५२॥
पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च भूषणम् । धूपं दीपं च नैवेद्यं पानीयं मुखशोधनम् ॥५३॥
पुनश्चाचमनीयं च मुखवासं ततः परम् । मुकुटं च शुभं भद्रं सर्वरत्नैरलंकृतम् ॥५४॥
भूषणानि पवित्राणि माल्यानि विविधानि च । व्यजने चामरे छत्रं तालवृंतं च दर्पणम् ॥५५॥
दत्त्वा नीराजनं कुर्यात्सर्वमङ्गलनिस्वनैः । गीतनृत्यादिभिश्चैव जयशब्दसमन्वितः ॥५६॥
हैमे च राजते ताम्रे पात्रे वा मृन्मये शुभे । पद्मकैश्शोभितैः पुष्पैर्बीजैर्दध्यक्षतादिभिः ॥५७॥
त्रिशूलशंखयुग्माब्जनन्द्यावर्तैः करीषजैः । श्रीवत्सस्वस्तिकादर्शवज्रैर्वह्न्यादिचिह्नितैः ॥५८॥
अष्टौ प्रदपान्परितो विधायैकं तु मध्यमे । तेषु वामादिकाश्चिन्त्याः पूज्याश्च नव शक्तयः ॥५९॥
कवचेन समाच्छाद्य संरक्ष्यास्त्रेण सर्वतः । धेनुमुद्रां च संदर्श्य पाणिभ्यां पात्रमुद्धरेत् ॥६०॥
अथवारोपयेत्पात्रे पञ्चदीपान्यथाक्रमम् । विदिक्ष्वपि च मध्ये च दीपमेकमथापि वा ॥६१॥
ततस्तत्पात्रमुद्धृत्य लिङ्गादेरुपरि क्रमात् । त्रिः प्रदक्षिणयोगेन भ्रामयेन्मूलविद्यया ॥६२॥
दद्यादर्घ्यं ततो मूर्ध्नि भसितं च सुगन्धितम् । कृत्वा पुष्पांजलिं पश्चादुपहारान्निवेदयेत् ॥६३॥
पानीयं च ततो दद्याद्दत्त्वा वाचमनं पुनः । पञ्चसौगन्धिकोपेतं ताम्बूलं च निवेदयेत् ॥६४॥
प्रोक्षयेत्प्रोक्षणीयानि गाननाट्यानि कारयेत् । लिङ्गादौ शिवयोश्चिन्तां कृत्वा शक्त्यजपेच्छिवम् ॥६५॥
प्रदक्षिणं प्रणामं च स्तवं चात्मसमर्पणम् । विज्ञापनं च कार्याणां कुर्याद्विनयपूर्वकम् ॥६६॥
अर्घ्यं पुष्पांजलिं दत्त्वा बद्ध्वा मुद्रां यथाविधि । पश्चात्क्षमापयेद्देवमुद्वास्यात्मनि चिन्तयेत् ॥६७॥
पाद्यादिमुखवासान्तमर्घ्याद्यं चातिसंकटे । पुष्पविक्षेपमात्रं वा कुर्याद्भावपुरस्सरम् ॥६८॥
तावतैव परो धर्मो भावने सुकृतो भवेत् । असंपूज्य न भुञ्जीत शिवमाप्राणसञ्चरात् ॥६९॥
यदि पापस्तु भुंजीत स्वैरं तस्य न निष्कृतिः । प्रमादेन तु भुंक्ते चेत्तदुद्गीर्य प्रयत्नतः ॥७०॥
स्नात्वा द्विगुणमभ्यर्च्य देवं देवीमुपोष्य च । शिवस्यायुतमभ्यस्येद्ब्रह्मचर्यपुरस्सरम् ॥७१॥
परेद्युश्शक्तितो दत्त्वा सुवर्णाद्यं शिवाय च । शिवभक्ताय वा कृत्वा महापूजां शुचिर्भवेत् ॥७२॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शास्त्रोक्त शिवपूजनवर्णनं नाम चतुर्विंशोऽध्यायः ॥२४॥

आदितः श्लोकानां समष्ट्यङ्काः-२३,०५१+७२=२३,१२३



## ॥ अथ पञ्चविंशोऽध्यायः ॥

उपमन्युरुवाच ॥

अनुक्तं चात्र पूजायाः कमलोपभयादिव । यत्तदन्यत्प्रवक्ष्यामि समासान्न तु विस्तरात् ॥१॥
हविर्निवेदनात्पूर्वं दीपदानादनन्तरम् । कुर्यादावरणाभ्यर्चां प्राप्ते नीराजनेऽथ वा ॥२॥
तत्रेशानादिसद्यान्तं रुद्राद्यस्त्रान्तमेव च । शिवस्य वा शिवायाश्च प्रथमावरणे जपेत् ॥३॥
ऐशान्यां पूर्वभागे च दक्षिणे चोत्तरे तथा । पश्चिमे च तथाग्ने य्यामैशान्यां नैर्ऋते तथा ॥४॥
वायव्यां पुनरैशान्यां चतुर्दिक्षु ततः परम् । गर्भावरणमाख्यातं मन्त्रसंघातमेव वा ॥५॥
हृदयाद्यस्त्रपर्यंतमथवापि समर्चयेत् । तद्बहिः पूर्वतः शक्रं यमं दक्षिणतो यजेत् ॥६॥
वरुणं वारुणे भागे धनदं चोत्तरे बुधः । ईशमैशेऽनलं स्वीये नैर्ऋते निर्ऋतिं यजेत् ॥७॥

मारुते मारुतं विष्णुं नैर्ऋते विधिमैश्वरे । बहिःपद्मस्य वज्राद्यान्यब्जान्तान्यायुधान्यपि ॥८॥
प्रसिद्धरूपाण्याशासु लोकेशानां क्रमाद्यजेत् । देवं देवीं च संप्रेक्ष्य सर्वावरणदेवताः ॥९॥
बद्धांजलिपुटा ध्येयाः समासीना यथासुखम् । सर्वावरणदेवानां स्वाभिधानैर्नमोयुतैः ॥१०॥
पुष्पैः संपूजनं कुर्यान्नत्वा सर्वान्यथाक्रमम् । गर्भावरणमेवापि यजेत्स्वावरणेन वा ॥११॥
योगे ध्याने जपे होमे वाह्ये वाभ्यन्तरेऽपि वा । हविश्च षड्विधं देयं शुद्धं मुद्गान्नमेव च ॥१२॥
पायसं दधिसंमिश्रं गौडं च मधुनाप्लुतम् । एतेष्वेकमनेकं वा नानाव्यञ्जनसंयुतम् ॥१३॥
गुडखण्डन्वितं दद्यान्मथितं दधि चोत्तमम् । भक्ष्याण्यपूपमुख्यानि स्वादुमंति फलानि च ॥१४॥
रक्तचन्दनपुष्पाढ्यं पानीयं चातिशीतलम् । मृदु एलारसाक्तं च खण्डं पूगफलस्य च ॥१५॥
दलानि नागवल्ल्याश्च युक्तानि खदिरादिभिः । गौराणि स्वर्णवर्णानि विहितानि शिवानि च ॥१६॥
शैलमेव सितं चूर्णं नातिरूक्षं न दूषितम् । कर्पूरं चाथ कंकोलं जात्यादि च नवं शुभम् ॥१७॥
आलेपनं चन्दनं स्यान्मूलकाष्ठंरजोमयम् । कस्तूरिका कुंकुमं च रसो मृगमदात्मकः ॥१८॥
पुष्पाणि सुरभीण्येव पवित्राणि शुभानि च । निर्गंधान्युग्रगन्धानि दूषितान्युषितानि च ॥१९॥
स्वयमेव विशीर्णानि न देयानि शिवार्चने । वासांसि च मृदून्येव तपनीयमयानि च ॥२०॥
विद्युद्वलयकल्पानि भूषणानि विशेषतः । सर्वाण्येतानि कर्पूरनिर्यासागुरुचन्दनैः ॥२१॥
आधूपितानि पुष्पौघैर्वासितानि समंततः । चन्दनागुरुकर्पूरकाष्ठगुग्गुलुचूर्णिकैः ॥२२॥
घृतेन मधुना चैव सिद्धो धूफ प्रशस्यते । कपिलासम्भवेनैव घृतेनातिसुगन्धिना ॥२३॥
नित्यं प्रदीपिता दीपाः शस्ताः कर्पूरसंयुताः । पञ्चगव्यं च मधुरं पयो दधि घृतं तथा ॥२४॥
कपिलासम्भवं शम्भोरिष्टं स्नाने च पानके । आसनानि च भद्राणि गजदंतमयानि च ॥२५॥
सुवर्णरत्नयुक्तानि चित्राण्यास्तरणानि च । मृदूपधानयुक्तानि सूक्ष्मतूलमयानि च ॥२६॥
उच्चावचानि रम्याणि शयनानि सुखानि च । नद्यस्समुद्रगामिन्या नटाद्वाम्भः समाहृतम् ॥२७॥
शीतञ्च वस्त्रपूतं तद्विशिष्टं स्नानपानयोः । छत्रं शशिनिभं चारु मुक्तादामविराजितम् ॥२८॥
नवरत्नचितं दिव्यं हेमदण्डमनोहरम् । चामरे च सिते सूक्ष्मे चामीकरपरिष्कृते ॥२९॥
राजहंसद्वयाकारे रत्नदण्डोपशोभिते । दर्पणं चापि सुस्निग्धं दिव्यगन्धानुलेपनम् ॥३०॥
समंताद्रत्नसञ्छन्नं स्रग्वैरैश्चापि भूषितम् । गम्भीरनिनदः शंखो हंसकुंदेन्दुसन्निभः ॥३१॥
आस्वपृष्ठादिदेशेषु रत्नचामीकराचितः । काहलानि च रम्याणि नानानादकराणि च ॥३२॥
सुवर्णनिर्मितान्येव मौक्तिकालंकृतानि च । भेरीमृदंगमुरजतिमिच्छपटहादयः ॥३३॥
समुद्रकल्पसन्नादाः कल्पनीयाः प्रयत्नतः । भाण्डान्यपि च रम्याणि पत्राण्यपि च कृत्स्नशः ॥३४॥
तदाधाराणि सर्वाणि सौवर्णान्येव साधयेत् । आलयं च महेशस्य शिवस्य परमात्मनः ॥३५॥
राजावसथवत्कल्प्यं शिल्पशास्त्रोक्तलक्षणम् । उच्चप्राकारसंभिन्नं भूधराकारगोपुरम् ॥३६॥
अनेकरत्नसंछन्नं हेमद्वारकपाटकम् । तप्तजांबूनदमयं रत्नस्तम्भशतावृतम् ॥३७॥
मुक्तादामवितानाढ्यं विद्रुमद्वारतोरणम् । चामीकरमयैर्दिव्यैर्मुकुटैः कुम्भलक्षणैः ॥३८॥
अलंकृतशिरोभागमस्त्र आजेन चिह्नितम् । राजन्यार्हनिवासैश्च राजवीथ्यादिशोभितैः ॥३९॥
प्रोच्छितप्रांशुशिखरैः प्रासादैश्च समंततः । आस्थानस्थानवर्यैश्च स्थितैर्दिक्षु विदिक्षु च ॥४०॥
अत्यन्तालंकृतप्रान्तमंतरावरणैरिव । उत्तमस्त्रीसहस्रैश्च नृत्यगेयविशारदैः ॥४१॥
वेणुवीणाविदग्धैश्च पुरुषैर्बहुभिर्युतम् । रक्षितं रक्षिभिर्वीरैर्गजवाजिरथान्वितैः ॥४२॥
अनेकपुष्पवाटीभिरनेकैश्च सरोवरैः । दीर्घिकाभिरनेकाभिर्दिग्विदिक्षु विराजितम् ॥४३॥
वेदवेदान्ततत्त्वज्ञैश्शिवशास्त्रपरायणैः । शिवाश्रमरतैर्भक्तैः शिवशास्त्रोक्तलक्षणैः ॥४४॥
शान्तैः स्मितमुखैः स्फीतैः सदाचारपरायणैः । शैवैर्महिश्वरैश्चैव श्रीमद्भिस्सेवितद्विजैः ॥४५॥
एवमंतर्बहिर्वाथयथाशक्तिविनिर्मितैः । स्थाने शिलामये दान्ते दारवे चेष्टकामये ॥४६॥
केवलं मृन्मये वापि पुण्यारण्येऽथ वा गिरौ । नद्यां देवालयेऽन्यत्र देशे वाथ गृहे शुभे ॥४७॥
आढ्यो वाथ दरिद्रो वा स्वकां शक्तिमवंचयन् । द्रव्यैर्न्यायार्जितैरेव भक्त्या देवं समर्चयेत् ॥४८॥

अथान्यायार्जितैश्चापि भक्त्या चेच्छिवमर्चयेत् । न तस्य प्रत्यवायोऽस्ति भाववश्यो यतः प्रभुः ॥४९॥
न्यायार्जितैरपि द्रव्यैरभक्त्या पूजयेद्यदि । न तत्फलमवाप्नोति भक्तिरेवात्र कारणम् ॥५०॥
भक्त्या वित्तानुसारेण शिवमुद्दिश्य यत्कृतम् । अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥५१॥
भक्त्या प्रचोदितः कुर्यादल्पवित्तोपि मानवः । महाविभवसारोपि न कुर्याद्भक्तिवर्जितः ॥५२॥
सर्वस्वमपि यो दद्याच्छिवे भक्तिविवर्जितः । न तेन फलभाक्स स्याद्भक्तिरेवात्र कारणम् ॥५३॥
न तत्तपोभिरत्युग्रैर्न च सर्वैर्महामखैः । गच्छेच्छिवपुरं दिव्यं मुक्त्वा भक्तिं शिवात्मकम् ॥५४॥
गुह्याद्गुह्यतरं कृष्ण सर्वत्र परमेश्वरे । शिवे भक्तिर्न संदेहस्तया भक्तो विमुच्यते ॥५५॥
शिवमन्त्रजपो ध्यानं होमो यज्ञस्तपश्श्रुतम् । दानमध्ययनं सर्वं भावार्थं नात्र संशयः ॥५६॥
भावहीनो नरस्सर्वं कृत्वापि न विमुच्यते । भावयुक्तः पुनस्सर्वमकृत्वापि विमुच्यते ॥५७॥
चांद्रायणसहस्रैश्च प्राजापत्यशतैस्तथा । मासोपवासैश्चान्यैश्च शिवभक्तस्य किं पुनः ॥५८॥
अभक्ता मानवाश्चास्मिंल्लोके गिरिगुहासु च । तपंति चाल्पभोगार्थं भक्तो भावेन मुच्यते ॥५९॥
सात्त्विकं मुक्तिदं कर्म सत्त्वे वै योगिनः स्थिताः । राजसं सिद्धिदं कुर्युः कर्मिणो रजसावृताः ॥६०॥
असुरा राक्षसाश्चैव तमोगुणसमन्विताः । ऐहिकार्थं यजन्तीशं नराश्चान्येऽपि तादृशाः ॥६१॥
तामसं राजसं वापि सात्त्विकं भावमेव च । आश्रित्य भक्त्या पूजाद्यं कुर्वन्भद्रं समश्नुते ॥६२॥
यतः पापार्णवात्त्रातुं भक्तिर्नौरिव निर्मिता । तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम् ॥६३॥
अन्त्यजो वाधमो वापि मूर्खो वा पतितोऽपि वा । शिवं प्रपन्नश्चेत्कृष्ण पूज्यस्सर्वसुरासुरैः ॥६४॥
तस्मात्सर्वप्रयत्नेन भक्त्यैव शिवमर्चयेत् । अभक्तानां क्वचिदपि फलं नास्ति यतस्ततः ॥६५॥
वक्ष्याम्यतिरहस्यं ते शृणु कृष्ण वचो मम । वेदैश्शास्त्रैर्वेदविद्भिर्विचार्य सुविनिश्चितम् ॥६६॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवशास्त्रोक्तपूजनवर्णनं नाम पञ्चविंशोऽध्यायः ॥२५॥

आदितः श्लोकानां समष्ट्यङ्काः-२३,१२३+६६=२३,१८९



## ॥ अथ षड्विंशोऽध्यायः ॥

उपमन्युरुवाच ॥

ब्रह्मघ्नो वा सुरापो वा स्तेयीवा गुरुतल्पगः । मातृहा पितृहा वापि वीरहा भ्रूणहापि वा ॥१॥
संपूज्यामन्त्रकं भक्त्या शिवं परमकारणम् । तैस्तैः पापैः प्रमुच्येत वर्षैर्द्वादशभिः क्रमात् ॥२॥
तस्मात्सर्वप्रयत्नेन पतितोऽपि यजेच्छिवम् । भक्तश्चेन्नापरः कश्चिद्भिक्षाहारो जितेन्द्रियः ॥३॥
कृत्वापि सुमहत्पापं भक्त्या पञ्चाक्षरेण तु । पूजयेद्यदि देवेशं तस्मात्पापात्प्रमुच्यते ॥४॥
अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः । तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ॥५॥
भक्त्या पञ्चाक्षरेणैव यः शिवं सकृदर्चयेत् । सोपि गच्छेच्छिवस्थानं शिवमन्त्रस्य गौरवात् ॥६॥
तस्मात्तपांसि यज्ञांश्च सर्वे सर्वस्वदक्षिणाः । शिवमूर्त्यर्चनस्यैते कोट्यंशेनापि नो समाः ॥७॥
बद्धो वाप्यथ मुक्तो वा पश्चात्पञ्चाक्षरेण चेत् । पूजयन्मुच्यते भक्तो नात्र कार्या विचारणा ॥८॥
अरुद्रो वा सरुद्रो वा सूक्तेन शिवमर्चयेत् । यः सकृत्पतितो वापिमूढो वा मुच्यते नरः ॥९॥
षडक्षरेण वा देवं सूक्तमन्त्रेण पूजयेत् । शिवभक्तो जितक्रोधो ह्यलब्धो लब्ध एव च ॥१०॥
अलब्धाल्लब्ध एवात्र विशिष्टो नात्र संशयः । स ब्रह्माङ्गेन वा तेन सहंसेन विमुच्यते ॥११॥
तस्मान्नित्यं शिवं भक्त्या सूक्तमन्त्रेण पूजयेत् । एककालं द्विकालं वा त्रिकालं नित्यमेव वा ॥१२॥
येऽर्चयन्ति महादेवं विज्ञेयास्ते महेश्वराः । ज्ञानेनात्मसहायेन नार्चितो भगवाञ्छिवः ॥१३॥
स चिरं संसरत्यस्मिन्संसारे दुःखसागरे । दुर्लभं प्राप्य मानुष्यं मूढो नार्चयते शिवम् ॥१४॥
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः । दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति पिनाकिनम् ॥१५॥
तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः । भवभक्तिपरा ये च भवप्रणतचेतसः ॥१६॥

भवसंस्मरणोद्युक्ता न ते दुःखस्य भागिनः । भवनानि मनोज्ञानि विभ्रमाभरणाः स्त्रियः ॥१७॥
धनं चातृप्तिपर्यन्तं शिवपूजाविधेः फलम् । ये वाञ्छन्ति महाभोगान्राज्यं च त्रिदशालये ॥१८॥
ते वाञ्छन्ति सदाकालं हरस्य चरणाम्बुजम् । सौभाग्यं कान्तिमद्रूपं सत्त्वं त्यागार्द्रभावता ॥१९॥
शौर्यं वै जगति ख्यातिश्शिवमर्चयतो भवेत् । तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः ॥२०॥
शिवपूजाविधिं कुर्याद्यदीच्छेच्छिवमात्मनः । त्वरितं जीवितं याति त्वरितं याति यौवनम् ॥२१॥
त्वरितं व्याधिरभ्येति तस्मात्पूज्यः पिनाकधृक् । यावन्नायाति मरणं यावन्नाक्रमते जरा ॥२२॥
यावन्नेन्द्रियवैकल्यं तावत्पूजय शंकरम् । न शिवार्चनतुल्योऽस्ति धर्मोऽन्यो भुवनत्रये ॥२३॥
इति विज्ञाय यत्नेन पूजनीयस्सदा शिवः । द्वारयागं जवनिकां परिवारबलिक्रियाम् ॥२४॥
नित्योत्सवं च कुर्वीत प्रसादे यदि पूजयेत् । हविर्निवेदनादूर्ध्वं स्वयं चानुचरोऽपि वा ॥२५॥
प्रसादपरिवारेभ्यो बलिं दद्याद्यथाक्रमम् । निर्गम्य सह वादित्रैस्तदाशाभिमुखः स्थितः ॥२६॥
पुष्पं धूपं च दीपञ्च दद्यादन्नं जलैः सह । ततो दद्यान्महापीठे तिष्ठन्बलिमुदङ्मुखः ॥२७॥
ततो निवेदितं देवे यत्तदन्नादिकं पुरा । तत्सर्वं सावशेषं वा चण्डाय विनिवेदयेत् ॥२८॥
हुत्वा च विधिवत्पश्चात्पूजाशेषं समापयेत् । कृत्वा प्रयोगं विधिवद्यावन्मन्त्रं जपं ततः ॥२९॥
नित्योत्सवं प्रकुर्वीत यथोक्तं शिवशासने । विपुले तैजसे पात्रे रक्तपद्मोपशोभिते ॥३०॥
अस्त्रं पाशुपतं दिव्यं तत्रावाह्य समर्चयेत् । शिवस्यारोप्यः तत्पात्रं द्विजस्यालंकृतस्य च ॥३१॥
न्यस्तास्त्रवपुषा तेन दीप्तयष्टिधरस्य च । प्रासादपरिवारेभ्यो बहिर्मंगलनिःस्वनैः ॥३२॥
नृत्यगेयादिभिश्चैव सह दीपध्वजादिभिः । प्रदक्षिणत्रयं कृत्वा न द्रुतं चाविलम्बितम् ॥३३॥
महापीठं समावृत्य त्रिःप्रदक्षिणयोगतः । पुनः प्रविष्टो द्वारस्थो यजमानः कृताञ्जलिः ॥३४॥
आदायाभ्यन्तरं नीत्वा ह्यस्त्रमुद्वासयेत्ततः । प्रदक्षिणादिकं कृत्वा यथापूर्वोदितं क्रमात् ॥
आदाय चाष्टपुष्पाणि पूजामथ समापयेत् ॥३५॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे साङ्गोपाङ्गपूजाविधानवर्णनं नाम षड्विंशोऽध्यायः ॥२६॥

आदितः श्लोकानां समष्ट्यङ्काः-२३,१८९+३५=२३,२२४



## ॥ अथ सप्तविंशोऽध्यायः ॥

उपमन्युरुवाच ॥
अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थण्डिलेऽपि वा । वेद्यां वा ह्यायसे पात्रे मृन्मये वा नवे शुभे ॥१॥
आधायाग्निं विधानेन संस्कृत्य च ततः परम् । तत्राराध्य महादेवं होमकर्म समाचरेत् ॥२॥
कुण्डं द्विहस्तमानं वा हस्तमात्रमथापि वा । वृत्तं वा चतुरस्रं वा कुर्याद्वेदिं च मण्डलम् ॥३॥
कुण्डं विस्तारवन्निम्नं तन्मध्येऽष्टदलाम्बुजम् । चतुरङ्गुलमुत्सेधं तस्य द्व्यंगुलमेव वा ॥४॥
वितस्तिद्विगुणोन्नत्या नाभिमन्तः प्रचक्षते । मध्यं च मध्यमाङ्गुल्या मध्यमोत्तमपर्वणोः ॥५॥
अङ्गुलैः कथ्यते सद्भिश्चतुर्विंशतिभिः करः । मेखलानां त्रयं वापि द्वयमेकमथापि वा ॥६॥
यथाशोभं प्रकुर्वीत श्लक्ष्णमिष्टं मृदा स्थिरम् । अश्वत्थपत्रवद्योनिं गजाधारवदेव वा ॥७॥
मेखलामध्यतः कुर्यात्पश्चिमे दक्षिणेऽपि वा । शोभनामग्रितः किञ्चिन्निम्नामुन्मीलिकां शनैः ॥८॥
अग्रेण कुण्डाभिमुखीं किञ्चिदुत्सृज्य मेखलाम् । नोत्सेधनियमो वेद्याः सा मार्दी वाथ सैकती ॥९॥
मण्डलं गोशकृत्तोयैर्मानं पात्रस्य नोदितम् । कुण्डं च मृन्मयं वेदिमालिपेद्गोमयांबुना ॥१०॥
प्रक्षाल्य तापयेत्पात्रं प्रोक्षयेदन्यदंभसा । स्वसूत्रोक्तप्रकारेण कुण्डादौ विल्लिखेत्ततः ॥११॥
संप्रोक्ष्य कल्पयेद्दर्भैः पुष्पैर्वा वह्निविष्टरम् । अर्चनार्थं च होमार्थं सर्वद्रव्याणि साधयेत् ॥१२॥
प्रक्षाल्यक्षालनीयानि प्रोक्षण्या प्रोक्ष्य शोधयेत् । मणिजं काष्ठजं वाथ श्रोत्रियागारसम्भवम् ॥१३॥
अन्यं वाभ्यर्हितं वह्निं ततः साधारमानयेत् । त्रिः प्रदक्षिणमावृत्य कुण्डादेरुपरि क्रमात् ॥१४॥

वह्निबीजं समुच्चार्य त्वादधीताग्निमासने । योनिमार्गेण वा तद्वदात्मनः संमुखेन वा ॥१५॥
नियोगः प्रदेश सर्वं कुण्डं कुर्याद्विचक्षणः । स्वनाभ्यन्तःस्थितं वह्निं तद्रंध्राद्विस्फुलिङ्गवद् ॥१६॥
निर्गम्य पावके बह्ये लीनं बिंबाकृति स्मरेत् । आज्यसंस्कारपर्यंतमन्वाधानपुरस्सरम् ॥१७॥
स्वसूत्रोक्तक्रमात्कुर्यान्मूलमन्त्रेण मन्त्रवित् । शिवमूर्तिं समभ्यर्च्य ततो दक्षिणपार्श्वतः ॥१८॥
न्यस्य मन्त्रं घृते मुद्रां दर्शयेद्धेनुसंज्ञिताम् । स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ ॥१९॥
यज्ञदारुमयौ वापि स्मार्तौ वा शिल्पसम्मतौ । पर्णे वा ब्रह्मवृक्षादेरच्छिद्रे मध्य उत्थिते ॥२०॥
संसृज्य दर्भैस्तौ वह्नौ सन्ताप्य प्रोक्षयेत्पुनः । पारार्षच्चर्यस्वसूत्रोक्तक्रमेण शिवपूर्वकैः ॥२१॥
जुहुयादष्टभिर्बीजैरग्निसंस्कारसिद्धये । भ्रुंस्तुंब्रुश्रुं क्रमेणैव पुण्ड्रूंद्रमित्यतः परम् ॥२२॥
बीजानि सप्त सप्तानां जिह्वानामनुपूर्वशः । त्रिशिखा मध्यमा जिह्वा बहुरूपसमाह्वया ॥२३॥
रक्ताग्नेयी नैर्ऋती च कृष्णान्या सुप्रभा मता । अतिरिक्ता मरुज्जिह्वा स्वनामानुगुणप्रभा ॥२४॥
स्वबिजान्नतरं वाच्या स्वाहान्तश्च यथाक्रमम् । जिह्वामन्त्रैस्तु तैर्हुत्वाज्यं जिह्वास्त्वेकैकश क्रमात् ॥२५॥
रं वह्नयेति स्वाहेति मध्ये हुत्वाहुतित्रयम् । सर्पिषा वा समिद्भिर्वा परिषेचनमाचरेत् ॥२६॥
एवं कृते शिवाग्निः स्यात्स्मरेत्तत्र शिवासनम् । तत्रावाह्य यजेद्देवमर्धनारीश्वरं शिवम् ॥२७॥
दीपान्तं परिषिच्याथ समिद्धोमं समाचरेत् । ताः पालाश्यः परा वापि याज्ञिया द्वादशाङ्गुलाः ॥२८॥
अवक्रा न स्वयं शुष्कास्सत्वचो निर्व्रणाः समाः । दशाङ्गुला वा विहिताः कनिष्ठाङ्गुलिसंमिताः ॥२९॥
प्रादेशमात्रा वालाभे होतव्याः सकला अपि । दूर्वापत्रसमाकारां चतुरङ्गुलमायताम् ॥३०॥
दद्यादाज्याहुतिं पश्चादन्नमक्षप्रमाणतः । लाजांस्तथा सर्षपांश्च यवांश्चैव तिलांस्तथा ॥३१॥
सर्पिषाक्तानि भक्ष्याणि लेह्यचोष्याणि सम्भवे । दशैवाहुतयस्तत्र पञ्च वा त्रितयं च वा ॥३२॥
होतव्याः शक्तितो दद्यादेकमेवाथ वाहुतिम् । श्रुवेणाज्यं समित्याद्यास्रुचाशेषात्करेण वा ॥३३॥
तत्र दिव्येन होतव्यं तीर्थेनार्षेण वा तथा । द्रव्येणैकेन वाऽलाभे जुहुयाच्छ्रद्धया पुनः ॥३४॥
प्रायश्चित्ताय जुहुयान्मन्त्रयित्वाहुतित्रयम् । ततो होमविशिष्टेन घृतेनापूर्य वै स्रुचम् ॥३५॥
निधाय पुष्पं तस्याग्रे श्रुवेणाधोमुखेन ताम् । सदर्भेन समाच्छाद्य मूलेनांजलिनोत्थितः ॥३६॥
वौषडंतेन जुहुयाद्धारां तु यवसंमिताम् । इत्थं पूर्णाहुतिं कृत्वा परिषिंचेच्च पूर्ववत् ॥३७॥
तत उद्वास्य देवेशं गोपयेत्तु हुताशनम् । तमप्युद्वास्य वा नाभौ यजेत्संधाय नित्यशः ॥३८॥
अथवा वह्निमानीय शिवशास्त्रोक्तवर्त्मना । वागीशीगर्भसंभूतं संस्कृत्य विधिवद्यजेत् ॥३९॥
अन्वाधानं पुनः कृत्वा परिधीन् परिधाय च । पात्राणि द्वन्द्वरूपेण निक्षिप्येष्ट्वा शिवं ततः ॥४०॥
संशोध्य प्रोक्षणीपात्रं प्रोक्ष्यतानि तदंभसा । प्रणीतापात्रमैशान्यां विन्यस्या पूरितं जलैः ॥४१॥
आज्यसंस्कारपर्यंतं कृत्वा संशोध्य स्रक्स्रुवौ । गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ॥४२॥
कृत्वा पृथक्पृथग्घुत्वा जातमग्निं विचिन्तयेत् । त्रिपादं सप्तहस्तं च चतुःशृंगं द्विशीर्षकम् ॥४३॥
मधुपिंगं त्रिनयनं सकपर्देन्दुशेखरम् । रक्तं रक्ताम्बरालेपं माल्यभूषनभूषितम् ॥४४॥
सर्वलक्षणसंपन्नं सोपवीतं त्रिमेखलम् । शक्तिमन्तं स्रुक्स्रुवौ च दधानं दक्षिणे करे ॥४५॥
तोमरं तालवृंतं च घृतपात्रं तथेतरैः । जातं ध्यात्वैवमाकारं जातकर्म समाचरेत् ॥४६॥
नालापनयनं कृत्वा ततः संशोध्य सूतकम् । शिवाग्निरुचिनामास्य कृत्वाहुतिपुरस्सरम् ॥४७॥
पित्रोर्विसर्जनं कृत्वा चौलोपनयनादिकम् । अप्तोर्यामावसानान्तं कृत्वा संस्कारमस्य तु ॥४८॥
आज्यधारादिहोमं च कृत्वा स्विष्टकृतं ततः । रमित्यनेन बीजेन परिषिंचेत्ततः परम् ॥४९॥
ब्रह्मविष्णु शिवेशानां लोकेशानां तथैव च । तदस्त्राणां च परितः कृत्वा पूजां यथाक्रमम् ॥५०॥
धूपदीपादिसिद्ध्यर्थं वह्निमुद्धृत्य कृत्यवित् । साधयित्वाज्यपूर्वाणि द्रव्याणि पुनरेव च ॥५१॥
कल्पयित्वासनं वह्नौ तत्रावाह्य यथापुरा । संपूज्य देवं देवीं च ततः पूर्णांतमाचरेत् ॥५२॥
अथ वा स्वाश्रमोक्तं तु वह्निकर्म शिवार्पणम् । बुद्ध्वा शिवाश्रमी कुर्यान्न च तत्रापरो विधिः ॥५३॥
शिवाग्नेर्भस्मसंग्राह्यमग्निहोत्रोद्भवं तु वा । वैवाहोग्निभवं वापि पक्वं शुचि सुगन्धि च ॥५४॥
कपिलायाः शकृच्छस्तं गृहीतं गगने पतत् । न क्लिन्नं नातिकठिनं न दुर्गन्धं न शोषितम् ॥५५॥

उपर्यधः परित्यज्य गृह्णीयात्पतितं यदि । पिंडीकृत्य शिवाग्न्यादौ तत्क्षिपेन्मूलमन्त्रतः ॥५६॥
अपक्वमतिपाक्वं च सन्त्यज्य भसितं सितम् । आदाय वा समालोड्य भस्माधारे विनिक्षिपेत् ॥५७॥
तैजसं दारवं वापि मृन्मयं शैलमेव च । अन्यद्वा शोभनं शुद्धं भस्माधारं प्रकल्पयेत् ॥५८॥
समे देशे शुभे शुद्धे धनवद्भस्म निक्षिपेत् । न चायुक्तकरे दद्यान्नैवाशुचितले क्षिपेत् ॥५९॥
न संस्पृशेच्च नीचाङ्गैर्नोपेक्षेत न लंघयेत् । तस्माद्भसितमादाय विनियुंजीत मन्त्रतः ॥६०॥
कालेषूक्तेषु नान्यत्र नायोग्येभ्यः प्रदापयेत् । भस्मसंग्रहणं कुर्याद्देवेऽनुद्वासिते सति ॥६१॥
उद्वासने कृते यस्माच्चण्डभस्म प्रजापते । अग्निकार्ये कृते पश्चाच्छिवशास्त्रोक्तमार्गतः ॥६२॥
स्वसूत्रोक्तप्रकाराद्वा बलिकर्म समाचरेत् । अथ विद्यासनं न्यस्य सुप्रलिप्ते तु मण्डले ॥६३॥
विद्याकोशं प्रतिष्ठाप्य यजेत्पुष्पादिभिः क्रमात् । विद्यायाः पुरतः कृत्वा गुरोरपि च मण्डलम् ॥६४॥
तत्रासनवरं कृत्वा पुष्पाद्यै गुरुमर्चयेत् । ततोनुपूजयेत्पूज्यान् भोजयेच्च बुभुक्षितान् ॥६५॥
ततस्स्वयं च भुंजीत शुद्धमन्नं यथासुखम् । निवेदितं च वा देवे तच्छेषं चात्मशुद्धये ॥६६॥
श्रद्दधानो न लोभेन न चण्डाय समर्पितम् । गन्धमाल्यादि यच्चान्यत्तत्राप्येष समो विधिः ॥६७॥
न तु तत्र शिवोस्मीति बुद्धिं कुर्याद्विचक्षणः । भुक्त्वाचम्य शिवं ध्यात्वा हृदये मूलमुच्चरेत् ॥६८॥
कालशेषं नयेद्योग्यैः शिवशास्त्रकथादिभिः । रात्रौ व्यतीते पूर्वांशे कृत्वा पूजां मनोहराम् ॥६९॥
शिवयोः शयनं त्वेकं कल्पयेदतिशोभनम् । भक्ष्यभोज्यांबरालेपपुष्पमालादिकं तथा ॥७०॥
मनसा कर्मणा वापि कृत्वा सर्वं मनोहरम् । ततो देवस्य देव्याश्च पादमूले शुचिस्स्वपेत् ॥७१॥
गृहस्थो भार्यया सार्धं तदन्येऽपि तु केवलाः । प्रत्यूषसमयं बुद्ध्वा मात्रामाद्यामुदीरयेत् ॥७२॥
प्रणम्य मनसां देवं सांबं सगणमव्ययम् । देशकालोचितं कृत्वा शौचाद्यमपि शक्तितः ॥७३॥
शंखादिनिनदैर्दिव्यैर्देवं देवीं च बोधयेत् । ततस्तत्समयोनिन्द्रैः पुष्पैरतिसुगन्धिभिः ॥
निर्वर्त्य शिवयोः पूजां प्रारभेत पुरोदितम् ॥७४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे अग्निकार्यवर्णनं नाम सप्तविंशोऽध्यायः ॥२७॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,२२४+७४=२३,२९८



## ॥ अथाष्टाविंशोऽध्यायः ॥

उपमन्युरुवाच ॥

अतः परं प्रवक्ष्यामि शिवाश्रमनिषेविणाम् । शिवशास्त्रोक्तमार्गेण नैमित्तिकविधिक्रमम् ॥१॥
सर्वेष्वपि च मासेषु पक्षयोरुभयोरपि । अष्टाम्यां च चतुर्दश्यां तथा पर्वाणि च क्रमात् ॥२॥
अयने विषुवे चैव ग्रहणेषु विशेषतः । कर्तव्या महती पूजा ह्यधिका वापि शक्तितः ॥३॥
मासिमासि यथान्यायं ब्रह्मकूर्चं प्रसाध्य तु । स्नापयित्वा शिवं तेन पिबेच्छेषमुपोषितः ॥४॥
ब्रह्महत्यादिदोषाणामतीव महतामपि । निष्कृतिर्ब्रह्मकूर्चस्य पानान्नान्या विशिष्यते ॥५॥
पौषे तु पुष्यनक्षत्रे कुर्यान्नीराजनं विभोः । माघे मघाख्ये नक्षत्रे प्रदद्याघृतकंबलम् ॥६॥
फाल्गुने चोत्तरान्ते वै प्रारभेत महोत्सवम् । चैत्रे चित्रापौर्णमास्यां दोलां कुर्याद्यथाविधि ॥७॥
वैशाख्यां तु विशाखायां कुर्यात्पुष्पमहालयम् । ज्येष्ठे मूलाख्यनक्षत्रे शीतकुम्भं प्रदापयेत् ॥८॥
आषाढे चोत्तराषाढे पवित्रारोपणं तथा । श्रावणे प्राकृतान्यापि मण्डलानि प्रकल्पयेत् ॥९॥
श्रविष्ठाख्ये तु नक्षत्रे प्रौष्ठपद्यां ततः परम् । प्रोक्षयेच्च जलक्रीडां पूर्वाषाढाश्रये दिने ॥१०॥
आश्वयुज्यां ततो दद्यात्पायसं च नवोदनम् । अग्निकार्यं च तेनैव कुर्याच्छतभिषग्दिने ॥११॥
कार्तिक्यां कृतिकायोगे दद्याद्दीपसहस्रकम् । मार्गशीर्षे तथार्द्रायां घृतेन स्नापयेच्छिवम् ॥१२॥
अशक्तस्तेषु कालेषु कुर्यादुत्सवमेव वा । आस्थानं वा महापूजामधिकं वा समर्चनम् ॥१३॥
आवृत्तेऽपि च कल्याणे प्रशस्तेष्वपि कर्मसु । दौर्मनस्ये दुराचारे दुःस्वप्ने दुष्टदर्शने ॥१४॥
उत्पाते वाशुभेन्यस्मिन्रोगे वा प्रबलेऽथ वा । स्नानपूजाजपध्यानहोमदानादिकाः क्रियः ॥१५॥

निर्मितानुगुणाः कार्याः पुरश्चरणपूर्विकाः । शिवानले च विहते पुनस्सन्धानमाचरेत् ॥१६॥
य एवं शर्वधर्मिष्ठो वर्तते नित्यमुद्यतः । तस्यैकजन्मना मुक्तिं प्रयच्छति महेश्वरः ॥१७॥
एतद्यथोत्तरं कुर्यान्नित्यनैमित्तिकेषु यः । दिव्यं श्रीकण्ठनाथस्य स्थानमाद्यं स गच्छति ॥१८॥
तत्र भुक्त्वा महाभोगान्कल्पकोटिशतन्नरः । कालान्तरेच्युतस्तस्मादौमं कौमारमेव च ॥१९॥
संप्राप्य वैष्णवं ब्राह्मं रुद्रलोकं विशेषतः । तत्रोषित्वा चिरं कालं भुक्त्वा भोगान्यथोदितान् ॥२०॥
पुनश्चोर्ध्वं गतस्तस्मादतीत्य स्थानपञ्चकम् । श्रीकण्ठाज्ज्ञानमासाद्य तस्माच्छैवपुरं व्रजेत् ॥२१॥
अर्धचर्यारतश्चापि द्विरावृत्त्यैवमेव तु । पश्चाज्ज्ञानं समासाद्य शिवसायुज्यमाप्नुयात् ॥२२॥
अर्धार्धचरितो यस्तु देही देहक्षयात्परम् । अंडान्तं वोर्ध्वमव्यक्तमतीत्य भुवनद्वयम् ॥२३॥
संप्राप्य पौरुषं रौद्रस्थानमद्रीन्द्रजापतेः । अनेकयुगसाहस्रं भुक्त्वा भोगाननेकधा ॥२४॥
पुण्यक्षये क्षितिं प्राप्य कुले महति जायते । तत्रापि पूर्वसंस्कारवशेन स महाद्युतिः ॥२५॥
पशुधर्मान्परित्यज्य शिवधर्मरतो भवेत् । तद्धर्मगौरवादेव ध्यात्वा शिवपुरं व्रजेत् ॥२६॥
भोगांश्च विविधान्भुक्त्वा विद्येश्वरपदं व्रजेत् । तत्र विद्येश्वरैस्सार्धं भुक्त्वा भोगान्बहून्क्रमात् ॥२७॥
अण्डस्यान्तर्बहिर्वाथ सकृदावर्तते पुनः । ततो लब्ध्वा शिवज्ञानं परां भक्तिमवाप्य च ॥२८॥
शिवसाधर्म्यमासाद्य न भूयो विनिवर्तते । यश्चातीव शिवे भक्तो विषयासक्तचित्तवत् ॥२९॥
शिवदर्मानसो कुर्वन्नकुर्वन्वापि मुच्यते । एकावृत्तो द्विरावृत्तस्त्रिरावृत्तो निवर्तकः ॥३०॥
न पुनश्चक्रवर्ती स्याच्छिवधर्माधिकारवान् । तस्माच्छिवाश्रितो भूत्वा येन केनापि हेतुना ॥३१॥
शिवधर्मे मतिं कुर्याच्छ्रेयसे चेत्कृतोद्यमः । नात्र निर्बंधयिष्यामो वयं केचन केनचित् ॥३२॥
निर्बन्धेभ्योऽतिवादेभ्यः प्रकृत्यैतन्न रोचते । रोचते वा परेभ्यस्तु पुण्यसंस्कारगौरवात् ॥३३॥
संसारकारणं येषां न प्ररोढुमलं भवेत् । प्रकृत्यनुगुणं तस्माद्विमृश्यैतदशेषतः ॥
शिवधर्मेऽधिकुर्वीत यदीच्छेच्छिवमात्मनः ॥३४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नित्यनैमित्तिकविधिवर्णनं नामाष्टाविंशोऽध्यायः ॥२८॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,२९८+३४=२३,३३२



## ॥ अथैकोनत्रिंशोऽध्यायः ॥

श्रीकृष्ण उवाच ॥
भगवंस्त्वन्मुखादेव श्रुतं श्रुतिसमं मया । स्वाश्रितानां शिवप्रोक्तं नित्यनैमित्तिकं तथा ॥१॥
इदानीं श्रोतुमिच्छामिशिवधर्माधिकारिणाम् । काम्यमप्यस्ति चेत्कर्म वक्तुमर्हसि साम्प्रतम् ॥२॥
उपमन्युरुवाच ॥
अस्त्यैहिकफलं किञ्चिदामुष्मिकफलं तथा । ऐहिकामुष्मिकञ्चापि तच्च पञ्चविधं पुनः ॥३॥
किञ्चित्क्रियामयं कर्म किञ्चित्कर्म तपो मयम् । जपध्यानमयं किञ्चित्किंचित्सर्वमयं तथा ॥४॥
क्रियामयं तथा भिन्नं होमदानार्चनक्रमात् । सर्वशक्तिमतामेव नान्येषां सफलं भवेत् ॥५॥
शक्तिश्चाज्ञामदेशस्य शिवस्य परमात्मनः । तस्मात्काम्यानि कर्माणि कुर्यादाज्ञाधरोद्विजः ॥६॥
अथ वक्ष्यामि काम्यं हि चेहामुत्र फलप्रदम् । शैवैर्माहेश्वरैश्चैव कार्यमंतर्बहिः क्रमात् ॥७॥
शिवो महेश्वरश्चेति नात्यन्तमिह भिद्यते । यथा तथा न भिद्यंते शैवा माहेश्वरा अपि ॥८॥
शिवाश्रिता हि ते शैवा ज्ञानयज्ञरता नराः । माहेश्वरास्समाख्याता कर्मयज्ञरता भुवि ॥९॥
तस्मादाभ्यन्तरे कुर्युः शैवा माहेश्वरा वहिः । न तु प्रयोगो भिद्येत वक्ष्यमाणस्य कर्मणः ॥१०॥
परीक्ष्य भूमिं विधिवद्गंधवर्णरसादिभिः । मनोभिलषिते तत्र वितानविततांबरे ॥११॥
सुप्रलिप्ते महीपृष्ठे दर्पणोदरसंनिभे । प्राचीमुत्पादयेत्पूर्वं शास्त्रदृष्टेन वर्त्मना ॥१२॥
एकहस्तं द्विहस्तं वा मण्डलं परिकल्पयेत् । आलिखेद्विमलं पद्ममष्टपत्रं सकर्णिकम् ॥१३॥

रत्नहेमादिभिश्चूर्णैर्यथासंभवसंभृतैः । पञ्चावरणसंयुक्तं बहुशोभासमन्वितम् ॥१४॥
दलेषु सिद्धयः कल्प्याः केसरेषु सशक्तिकाः । रुद्रा वामादयस्त्वष्टौ पूर्वादिदलतः क्रमात् ॥१५॥
कर्णिकायां च वैराग्यं बीजेषु नव शक्तयः । स्कन्दे शिवात्मको धर्मो नाले ज्ञानं शिवाश्रयम् ॥१६॥
कर्णिकोपरि चाग्नेयं मण्डलं सौरमैन्दवम् । शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमतः परम् ॥१७॥
सर्वासनोपरि सुखं विचित्रकुसुमान्वितम् । पञ्चावरणसंयुक्तं पूजयेदंबया सह ॥१८॥
शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् । विद्युद्वलयसंकाशजटामुकुटभूषितम् ॥१९॥
शार्दूलचर्मवसनं किञ्चित्स्मितमुखांबुजम् । रक्तपद्मदलप्रख्यपादपाणितलाधरम् ॥२०॥
सर्वलक्षणसंपन्नं सर्वाभरणभूषितम् । दिव्यायुधवरैर्युक्तं दिव्यगन्धानुलेपनम् ॥२१॥
पञ्चवक्त्रं दशभुजं चन्द्रखण्डशिखामणिम् । अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ॥२२॥
त्रिलोचनारविंदाढ्यं कृतबालेंदुशेखरम् । दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ॥२३॥
भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् । दंष्ट्राकरालं दुर्धर्षं स्फुरिताधरपल्लवम् ॥२४॥
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् । सविलासं त्रिनयनं चन्द्राभरणशेखरम् ॥२५॥
पश्चिमं पूर्णचन्द्राभं लोचनत्रितयोज्ज्वलम् । चन्द्ररेखाधरं सौम्यं मंदस्मितमनोहरम् ॥२६॥
पञ्चमं स्फटिकप्रख्यमिंदुरेखासमुज्ज्वलम् । अतीव सौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम् ॥२७॥
दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम् । सव्ये च नागनाराचघण्टापाशाङ्कुशोज्ज्वलम् ॥२८॥
निवृत्त्याजानुसंबद्धमानाभेश्च प्रतिष्ठया । आकण्ठं विद्यया तद्वदाललाटं तु शान्तया ॥२९॥
तदूर्ध्वं शान्तयतीताख्यकलया परया तथा । पञ्चाध्वव्यापिनं साक्षात्कलापञ्चकविग्रहम् ॥३०॥
ईशानमुकुटं देवं पुरुषाख्यं पुरातनम् । अघोर हृदयं तद्वद्वामगुह्यं महेश्वरम् ॥३१॥
सद्यपादं च तन्मूर्तिमष्टत्रिंशत्कलामयम् । मातृकामयमीशानं पञ्चब्रह्ममयं तथा ॥३२॥
ओंकाराख्यमयं चैव हंसशक्त्या समन्वितम् । तथेच्छात्मिकया शक्त्या समारूढाङ्कमण्डलम् ॥३३॥
ज्ञानाख्यया दक्षिणतो वामतश्च क्रियाख्यया । तत्त्वत्रयमयं साक्षाद्विद्यामूर्तिं सदाशिवम् ॥३४॥
मूर्तिमूलेन संकल्प्य सकलीकृत्य च क्रमात् । संपूज्य च यथान्यायमर्घान्तं मूलविद्यया ॥३५॥
मूर्तिमन्तं शिवं साक्षाच्छक्त्या परमया सह । तत्रावाह्य महादेवं सदसद्व्यक्तिवर्जितम् ॥३६॥
पञ्चोपकरणं कृत्वा पूजयेत्परमेश्वरम् । ब्रह्मभिश्च षडङ्गैश्च ततो मातृकया सह ॥३७॥
प्रणवेन शिवेनैव शक्तियुक्तेन च क्रमात् । शान्तेन वा तथान्यैश्च वेदमन्त्रैश्च कृत्स्नशः ॥३८॥
पूजयेत्परमं देवं केवलेन शिवेन वा । पाद्यादिमुखवासान्तं कृत्वा प्रस्थापनं विना ॥
पञ्चावरणपूजां तु ह्यारभेत यथाक्रमम् ॥३९॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे काम्यकर्मवर्णनं नामैकोनत्रिंशत्तमोऽध्यायः ॥२९॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,३३२+३९=२३,३७१



## ॥ अथ त्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥
तत्रादौ शिवयोः पार्श्वे दक्षिणे वामतः क्रमात् । गन्धाद्यैरर्चयेत्पूर्वं देवौ हेरंबषण्मुखौ ॥१॥
ततो ब्रह्माणि परित ईशानादि यथाक्रमम् । सशक्तिकानि सद्यान्तं प्रथमावरणे यजेत् ॥२॥
षडंगान्यपि तत्रैव हृदयादीन्यनुक्रमात् । शिवस्य च शिवायाश्च वाह्नेयादि समर्चयेत् ॥३॥
तत्र वामादिकान्रुद्रानष्टौ वामादिशक्तिभिः । अर्चयेद्वा न वा पश्चात्पूर्वादिपरितः क्रमात् ॥४॥
प्रथमावरणं प्रोक्तं मया ते यदुनंदन । द्वितीयावरणं प्रीत्या प्रोच्यते श्रद्धया शृणु ॥५॥
अनन्तं पूर्वादिक्पत्रे तच्छक्तिं तस्य वामतः । सूक्ष्मं दक्षिणदिक्पत्रे सह शक्त्या समर्चयेत् ॥६॥
ततः पश्चिमदिक्पत्रे सह शक्त्या शिवोत्तमम् । तथैवोत्तरदिक्पत्रे चैकनेत्रं समर्चयेत् ॥७॥
एकरुद्रं च तच्छक्तिं पश्चादीशदलेऽर्चयेत् । त्रिमूर्तिं तस्य शक्तिं च पूजयेदग्निदिग्दले ॥८॥

श्रीकण्ठं नैर्ऋते पत्रे तच्छक्तिं तस्य वामतः । तथैव मारुते पत्रे शिखण्डीशं समर्चयेत्॥९॥
द्वितीयावरणे चेज्यास्सर्वर्तश्चक्रवर्तिनः । तृतीयावरणे पूज्याः शक्तिभिश्चाष्टमूर्तयः ॥१०॥
अष्टसु क्रमशो दिक्षु पूर्वादिपरितः क्रमात् । भवः शर्वस्तथेशानो रुद्रः पशुपतिस्ततः ॥११॥
उग्रो भीमो महादेव इत्यष्टौ मूर्तयः क्रमात् । अनन्तरं ततश्चैव महादेवादयः क्रमात्॥१२॥
शक्तिभिस्सह संपूज्यास्तत्रैकादशमूर्तयः । महादेवः शिवो रुद्रः शंकरो नीललोहितः ॥१३॥
ईशानो विजयो भीमो देवदेवो भवोद्भवः । कपर्दीशश्च कथ्यन्ते तथैकादशशक्तयः ॥१४॥
तत्राष्टौ प्रथमं पूज्याः वाह्नेयादि यथाक्रमम् । देवदेवः पूर्वपत्रे ईशानं चाग्निगोचरे ॥१५॥
भवोद्भवस्तयोर्मध्ये कपालीशस्ततः परम् । तस्मिन्नावरणे भूयो वृषेन्द्रं पुरतो यजेत् ॥१६॥
नन्दिनं दक्षिणे तस्य महाकालं तथोत्तरे । शास्तारं वह्निदिक्पत्रे मातृर्दक्षिणदिग्दले ॥१७॥
गजास्यं नैर्ऋते पत्रे षण्मुखं वारुणे पुनः । ज्येष्ठां वायुदले गौरीमुत्तरे चण्डमैश्वरे ॥१८॥
शास्तृनन्दीशयोर्मध्ये मुनीन्द्रं वृषभं यजेत् । महाकालस्योत्तरतः पिंगलं तु समर्चयेत्॥१९॥
शास्तृमातृसमूहस्य मध्ये भृंगीश्वरं ततः । मातृविघ्नेशमध्ये तु वीरभद्रं समर्चयेत्॥२०॥
स्कन्दविघ्नेशयोर्मध्ये यजेद्देवीं सरस्वतीम् । ज्येष्ठाकुमारयोर्मध्ये श्रियं शिवपदार्चिताम्॥२१॥
ज्येष्ठागणाम्बयोर्मध्ये महामोटीं समर्चयेत् । गणाम्बाचण्डयोर्मध्ये देवीं दुर्गां प्रपूजयेत्॥२२॥
अत्रैवावरणे भूयः शिवानुचरसंहतिम् । रुद्रप्रथमभूताख्यां विविधां च सशक्तिकाम्॥२३॥
शिवायाश्च सखीवर्गं जपेद्ध्यात्वा समाहितः । एवं तृतीयावरणे वितते पूजिते सति ॥२४॥
चतुर्थावरणं ध्यात्वा बहिस्तस्य समर्चयेत् । भानुः पूर्वदले पूज्यो दक्षिणे चतुराननः ॥२५॥
रुद्रो वरुणदिक्पत्रे विष्णुरुत्तरदिग्दले । चतुर्णामपि देवानां पृथगावरणान्यथ ॥२६॥
तस्याङ्गानि षडेवादौ दीप्ताद्याभिश्च शक्तिभिः । दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ॥२७॥
अमोघा विद्युता चैव पूर्वादि परितः स्थिताः । द्वितीयावरणे पूज्याश्चतस्रो मूर्तयः क्रमात्॥२८॥
पूर्वाद्युत्तरपर्यंताः शक्तयश्च ततः परम् । आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ॥२९॥
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चैते विवस्वतः । विस्तारा पूर्वदिग्भागे सुतरां दक्षिणे स्थिताः ॥३०॥
बोधनी पश्चिमे भागे आप्यायिन्युत्तरे पुनः । उषां प्रभां तथा प्राज्ञां सन्ध्यामपि ततः परम्॥३१॥
ऐशानादिषु विन्यस्य द्वितीयावरणे यजेत् । सोममङ्गारकं चैव बुधं बुद्धिमतां वरम्॥३२॥
बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् । शनैश्चरं तथा राहुं केतुं धूम्रं भयङ्करम्॥३३॥
समंततो यजेदेतांस्तृतीयावरणे क्रमात् । अथवा द्वादशादित्या द्वितीयावरणे यजेत्॥३४॥
तृतीयावरणे चैव राशीन्द्वादश पूजयेत् । सप्तसप्त गणांश्चैव बहिस्तस्य समंततः ॥३५॥
ऋषीन्देवांश्च गन्धर्वान्पन्नगानप्सरोगणान् । ग्रामण्यश्च तथा यक्षान्यातुधानांस्तथा हयान्॥३६॥
सप्तच्छंदोमयांश्चैव वालखिल्यांश्च पूजयेत् । एवं तृतीयावरणे समभ्यर्च्य दिवाकरम्॥३७॥
ब्रह्माणमर्चयेत्पश्चात्त्रिभिरावरणैः सहः । हिरण्यगर्भं पूर्वस्यां विराजं दक्षिणे ततः ॥३८॥
कालं पश्चिमदिग्भागे पुरुषं चोत्तरे यजेत् । हिरण्यगर्भः प्रथमो ब्रह्मा कमलसन्निभः ॥३९॥
कालो जात्यंजनप्रख्यः पुरुषः स्फटिकोपमः । त्रिगुणो राजसश्चैव तामसः सात्त्विकस्तथा ॥४०॥
चत्वार एते क्रमशः प्रथमावरणे स्थिताः । द्वितीयावरणे पूज्याः पूर्वादिपरितः क्रमात्॥४१॥
सनत्कुमारः सनकः सनंदश्च सनातनः । तृतीयावरणे पश्चादर्चयेच्च प्रजापतीन्॥४२॥
अष्टौ पूर्वांश्च पूर्वादौ त्रीन्प्राक्पश्चादनुक्रमात् । दक्षो रुचिर्भृगुश्चैव मरीचिश्च तथांगिराः ॥४३॥
पुलस्त्यः पुलहश्चैव क्रतुरत्रिश्च कश्यफ । वसिष्ठश्चेति विख्याताः प्रजानां पतयस्त्विमे ॥४४॥
तेषां भार्याश्च तैस्सार्धं पूजनीया यथाक्रमम् । प्रसूतिश्च तथाष्टकूतिः ख्यातिः सम्भूतिरेव च ॥४५॥
धृतिः स्मृतिः क्षमा चैव सन्नतिश्चानसूयका । देवमातारुन्धती च सर्वाः खलु पतिव्रताः ॥४६॥
शिवार्चनरतो नित्यं श्रीमत्यः प्रियदर्शनाः । प्रथमावरणे वेदांश्चतुरो वा प्रपूजयेत्॥४७॥
इतिहासपुराणानि द्वितीयावरणे पुनः । तृतीयावरणे पश्चाद्धर्मशास्त्रपुरस्सराः ॥४८॥
वैदिक्यो निखिला विद्याः पूज्या एव समंततः । पूर्वादिपुरतो वेदास्तदन्ये तु यथारुचि ॥४९॥

अष्टधा वा चतुर्धा वा कृत्वा पूजां समंततः । एवं ब्रह्माणमभ्यर्च्य त्रिभिरावरणैर्युतम् ॥५०॥
दक्षिणे पश्चिमे पश्चादुदं सावरणं यजेत् । तस्य ब्रह्मषडंगानि प्रथमावरणं स्मृतम् ॥५१॥
द्वितीयावरणे चैव विद्येश्वरमयं तथा । तृतीयावरणे भेदो विद्यते स तु कथ्यते ॥५२॥
चतस्रो मूर्तयस्तस्य पूज्याः पूर्वादितः क्रमात् । त्रिगुणास्सकलो देवः पुरस्ताच्छिवसंज्ञकः ॥५३॥
राजसो दक्षिणे ब्रह्मा सृष्टिकृत्पूज्यते भवः । तामसः पश्चिमे चाग्निः पूज्यस्संहारको हरः ॥५४॥
सात्त्विकस्सुखकृत्सौम्ये विष्णुर्विश्वपतिर्मृडः । एवं पश्चिमदिग्भागे शम्भोः षड्विंशकं शिवम् ॥५५॥
समभ्यर्च्योत्तरे पार्श्वे ततो वैकुण्ठमर्चयेत् । वासुदेवं पुरस्कृत्वा प्रथमावरणे यजेत् ॥५६॥
अनिरुद्धं दक्षिणतः प्रद्युम्नं पश्चिमे ततः । सौम्ये संकर्षणं पश्चाद्व्यत्यस्तौ वा यजेदिमौ ॥५७॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शुभम् । मत्स्यः कूर्मो वराहश्च नरसिंहोथ वामनः ॥५८॥
रामश्चान्यतमः कृष्णो भवानश्वमुखोपि च । तृतीयावरणे चक्रः पूर्वभागे समर्चयेत् ॥५९॥
नारायणाख्यां याम्येस्त्रं क्वचिदव्याहतं यजेत् । पश्चिमे पांचजन्यं च शार्ङ्गन्धनुरथोत्तरे ॥६०॥
एवं त्र्यावरणैः साक्षाद्विश्वाख्यां परमं हरिम् । महाविष्णुं सदाविष्णुं मूर्तीकृत्य समर्चयेत् ॥६१॥
इत्थं विष्णोश्चतुर्व्यूहक्रमान्मूर्तिचतुष्टयम् । पूजयित्वा च तच्छक्तीश्चतस्रः पुजयेत्क्रमात् ॥६२॥
प्रभामाग्नेयदिग्भागे नैर्ऋते तु सरस्वतीम् । गणांबिका च वायव्ये लक्ष्मीं रौद्रे समर्चयेत् ॥६३॥
एवं भान्वादिमूर्तीनां तच्छक्तीनामनन्तरम् । पूजां विधाय लोकेशांस्तत्रैवावरणे यजेत् ॥६४॥
इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । वायुं सोमं कुबेरं च पश्चादीशानमर्चयेत् ॥६५॥
एवं चतुर्थावरणं पूजयित्वा विधानतः । आयुधानि महेशस्य पश्चाद्बांह्यं समर्चयेत् ॥६६॥
श्रीमन्त्रिशूलमैशाने वज्रं माहेन्द्रदिङ्मुखे । परशुं वह्निदिग्भागे याम्ये सायकमर्चयेत् ॥६७॥
नैर्ऋते तु यजेत्खड्गं पाशं वारुणगोचरे । अंकुशं मारुते भागे पिनाकं चोत्तरे यजेत् ॥६८॥
पश्चिमाभिमुखं रौद्रं क्षेत्रपालं समर्चयेत् । पञ्चमावरणं चैव सम्पूज्यानन्तरं बहिः ॥६९॥
सर्वावरणदेवानां बहिर्वा पञ्चमेऽथवा । पञ्चमे मातृभिस्सार्धं महोक्ष पुरतो यजेत् ॥७०॥
ततः समंततः पूज्यास्सर्वा वै देवयोनयः । खेचरा ऋषयस्सिद्धा दैत्या यक्षाश्च राक्षसाः ॥७१॥
अनन्ताद्याश्च नागेंद्रा नागैस्तत्तत्कुलोद्भवैः । डाकिनीभूतवेतालप्रेतभैरवनायकाः ॥७२॥
पातालवासिनश्चान्ये नानायोनिसमुद्भवाः । नद्यस्समुद्रा गिरयः काननानि सरांसि च ॥७३॥
पशवः पक्षिणो वृक्षाः कीटाद्याः क्षुद्रयोनयः । नराश्च विविधाकारा मृगाश्च क्षुद्रयोनयः ॥७४॥
भुवनान्यन्तरण्डस्य ततो ब्रह्माण्डकोटयः । बहिरंडान्यसंख्यानि भुवनानि सहाधिपैः ॥७५॥
ब्रह्मांडाधारका रुद्रा दशदिक्षु व्यवस्थिताः । यद्गौड यच्च मामेयं यद्वा शाक्तं ततः परम् ॥७६॥
यत्किञ्चिदस्ति शब्दस्य वाच्यं चिदचिदात्मकम् । तत्सर्वं शिवयोः पार्श्वे बुद्ध्वा सामान्यतो यजेत् ॥७७॥
कृताञ्जलिपुटाः सर्वेऽचिन्तयाः स्मितमुखास्तथा । प्रीत्या संप्रेक्षमाणाश्च देवं देवीं च सर्वदा ॥७८॥
इत्थमावरणाभ्यर्चां कृत्वाविक्षेपशान्तये । पुनरभ्यर्च्य देवेशं पक्त्वाक्षरमुदीरयेत् ॥७९॥
निवेदयेत्ततः पश्चाच्छिवयोरमृतोपमम् । सुव्यञ्जनसमायुक्तं शुद्धं चारु महाचरुम् ॥८०॥
द्वात्रिंशदाढकैर्मुख्यमधमं त्वाढकावरम् । साधयित्वा यथासंपच्छ्रद्धया विनिवेदयेत् ॥८१॥
ततो निवेद्य पानीयं तांबूलं चोपदंशकैः । नीराजनादिकं कृत्वा पूजाशेषं समापयेत् ॥८२॥
भोगोपयोग्यद्रव्याणि विशिष्टान्येव साधयेत् । वित्तशाठ्यं न कुर्वीत भक्तिमान्विभवे सति ॥८३॥
शठस्योपेक्षकस्यापि व्यंग्यं चैवानुतिष्ठतः । न फलंत्येव कर्माणि काम्यानीति सतां कथा ॥८४॥
तस्मात्सम्यगुपेक्षां च त्यक्त्वा सर्वाङ्गयोगतः । कुर्यात्काम्यानि कर्माणि फलसिद्धिं यदीच्छति ॥८५॥
इत्थं पूजां समाप्याथ देवं देवीं प्रणम्य च । भक्त्या मनस्समाधाय पश्चात्स्तोत्रमुदीरयेत् ॥८६॥
ततः स्तोत्रमुपास्यान्ते त्वष्टोत्तरशतावराम् । जपेत्पञ्चाक्षरीं विद्यां सहस्रोत्तरमुत्सुकः ॥८७॥
विद्यापूजां गुरोः पूजां कृत्वा पश्चाद्यथाक्रमम् । यथोदयं यथाश्राद्धं सदस्यानपि पूजयेत् ॥८८॥
ततः उद्वास्य देवेशं सर्वैरावरणैः सह । मण्डलं गुरवे दद्याद्यागोपकरणैस्सह ॥८९॥
शिवाश्रितेभ्यो वा दद्यात्सर्वमेवानुपूर्वशः । अथवा तच्छिवायैव शिवक्षेत्रे समर्पयेत् ॥९०॥

शिवाग्नौ वा यजेद्देवं होमद्रव्यैश्च सप्तभिः । समभ्यर्च्य यथान्यायं सर्वावरणदेवताः ॥९१॥
एष योगेश्वरो नाम त्रिषु लोकेषु विश्रुतः । न तस्मादधिकः कश्चिद्यागोऽस्ति भुवने क्वचित् ॥९२॥
न तदस्ति जगत्यस्मिन्नसध्यं यदनेन तु । ऐहिकं वा फलं किञ्चिदामुष्मिकफलं तु वा ॥९३॥
इदमस्य फलं नेदमिति नैव नियम्यते । श्रेयोरूपस्य कृत्स्नस्य तदिदं श्रेष्ठसाधनम् ॥९४॥
इदं न शक्यते वक्तुं पुरुषेण यदर्च्यते । चिन्तामणेरिवैतस्मात्तत्तेन प्राप्यते फलम् ॥९५॥
तथापि क्षुद्रमुद्दिश्य फलं नैतत्प्रयोजयेत् । लज्जवर्थी महतो यस्मात्स्वयं लघुतरो भवेत् ॥९६॥
महद्वा फलमल्पं वा कृतं चेत्कर्म सिध्यति । महादेवं समुद्दिश्य कृतं कर्म प्रयुज्यताम् ॥९७॥
तस्मादनन्यलभ्येषु शत्रुमृत्युञ्जयादिषु । फलेषु दृष्टादृष्टेषु कुर्यादितद्विचक्षणः ॥९८॥
महत्स्वपि च पातेषु महारागभयादिषु । दुर्भिक्षादिषु शान्त्यर्थं शान्तिं कुर्यादनेन तु ॥९९॥
बहुना किं प्रलापेन महाव्यापन्निवारकम् । आत्मीयमस्त्रं शैवानामिदमाह महेश्वरः ॥१००॥
तस्मादितः परं नास्ति परित्राणमिहात्मनः । इति मत्वा प्रयुंजानः कर्मेदं शुभमश्नुते ॥१०१॥
स्तोत्रमात्रं शुचिर्भूत्वा यः पठेत्सुसमाहितः । सोप्यभीष्टतमादर्थादष्टांशफलमाप्नुयात् ॥१०२॥
अर्थं तस्यानुसन्धाय पर्वण्यनशनः पठेत् । अष्टाभ्यां वा चतुर्दश्यां फलमर्धं समाप्नुयात् ॥१०३॥
यस्त्वर्थमनुसंधाय पर्वादिषु तथा व्रती । मासमेकं जपेत्स्तोत्रं स कृत्स्नं फलमाप्नुयात् ॥१०४॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शैवानां काम्यकवर्णनं नाम त्रिंशोऽध्यायः ॥३०॥
आदितः श्लोकानां समष्टयङ्काः-२३,३७१+१०४=२३,४७५



## ॥ अथैकत्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥
स्तोत्रं वक्ष्यामि ते कृष्ण पञ्चावरणमार्गतः । योगेश्वरमिदं पुण्यं कर्म येन समाप्यते ॥१॥
जय जय जगदेकनाथ शम्भो प्रकृतिमनोहर नित्यचित्स्वभाव । अतिगतकलुषप्रपञ्चवाचामपि मनसां पदवीमतीततत्त्वम् ॥२॥
स्वभावनिर्मलाभोग जय सुन्दरचेष्टित । स्वात्मतुल्यमहाशक्ते जय शुद्धगुणार्णव ॥३॥
अनन्तकांतिसंपन्न जयासदृशविग्रह । अतर्क्यमहिमाधार जयानाकुलमङ्गल ॥४॥
निरञ्जन निराधार जय निष्कारणोदय । निरन्तरपरानन्द जय निर्वृतिकारण ॥५॥
जयातिपरमैश्वर्य जयातिकरुणास्पद । जय स्वतंत्रसर्वस्व जयासदृशवैभव ॥६॥
जयावृतमहाविश्व जयानावृत केनचित् । जयोत्तर समस्तस्य जयात्यन्तनिरुत्तर ॥७॥
जयाद्भुत जयाक्षुद्र जयाक्षत जयाव्यय । जयामेय जयामाय जयाभाव जयामल ॥८॥
महाभुज महासार महागुण महाकथ । महाबल महामाय महारस महारथ ॥९॥
नमः परमदेवाय नमः परमहेतवे । नमश्शिवाय शान्ताय नमश्शिवतराय ते ॥१०॥
त्वदधीनमिदं कृत्स्नं जगद्धिससुरासुरम् । अतस्त्वद्विहितामाज्ञां क्षमते कोऽतिवर्तितुम् ॥११॥
अयं पुनर्जनो नित्यं भवदेकसमाश्रयः । भवानतोऽनुगृह्यास्मै प्रार्थितं संप्रयच्छतु ॥१२॥
जयांबिके जगन्मातर्जय सर्वजगन्मयि । जयानवधिकैश्वर्ये जयानुपमविग्रहे ॥१३॥
जय वाङ्मनसातीते जयाचिद्ध्वान्तभंजिके । जय जन्मजराहीने जय कालोत्तरोत्तरे ॥१४॥
जयानेकविधानस्थे जय विश्वेश्वरप्रिये । जय विश्वसुराराध्ये जय विश्वविजृंभिणि ॥१५॥
जय मङ्गलदिव्यांगि जय मङ्गलदीपिके । जय मङ्गलचारित्रे जय मङ्गलदायिनि ॥१६॥
नमः परमकल्याणगुणसञ्चयमूर्तये । त्वत्तः खलु समुत्पन्नं जगत्त्वय्येव लीयते ॥१७॥
त्वद्विनातः फलं दातुमीश्वरोपि न शक्नुयात् । जन्मप्रभृति देवेशि जनोयं त्वदुपाश्रितः ॥१८॥
अतोऽस्य तव भक्तस्य निर्वर्त्य मनोरथम् । पञ्चवक्त्रो दशभुजः शुद्धस्फटिकसन्निभः ॥१९॥
वर्णब्रह्मकलादेहो देवस्सकलनिष्कलः । शिवभक्तिसमारूढः शान्त्यतीतस्सदा शिवः ॥२०॥

भक्त्या मयार्चितो मह्यं प्रार्थितं शं प्रयच्छतु । सदा शिवाङ्कमारूढा शक्तिरिच्छा शिवाह्वया ॥२१॥
जननी सर्वलोकानां प्रयच्छतु मनोरथम् । शिवयोर्दयिता पुत्रौ देवौ हेरंबषण्मुखौ ॥२२॥
शिवानुभावौ सर्वज्ञौ शिवज्ञानामृताशिनौ । तृप्तौ परस्परं स्निग्धौ शिवाभ्यां नित्यसत्कृतौ ॥२३॥
सत्कृतौ च सदा देवौ ब्रह्माद्यैस्त्रिदशैरपि । सर्वलोकपरित्राणं कर्तुमभ्युदितौ सदा ॥२४॥
स्वेच्छावतारं कुर्वंतौ स्वांशभेदैरनेकशः । ताविमौ शिवयोः पार्श्वे नित्यमित्थं मयार्चितौ ॥२५॥
तयोराज्ञां पुरस्कृत्य प्रार्थितं मे प्रयच्छताम् । शुद्धस्फटिकसंकाशमीशानाख्यं सदा शिवम् ॥२६॥
मूर्धाभिमानिनी मूर्तिः शिवस्य परमात्मनः । शिवार्चनरतं शान्तं शान्त्यतीतं मखास्थितम् ॥२७॥
पञ्चाक्षरांतिमं बीजं कलाभिः पञ्चभिर्युतम् । प्रथमावरणे पूर्वं शक्त्या सह समर्चितम् ॥२८॥
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु । बालसूर्यप्रतीकाशं पुरुषाख्यं पुरातनम् ॥२९॥
पूर्ववक्त्राभिमानं च शिवस्य परमेष्ठिनः । शान्त्यात्मकं मरुत्संस्थं शम्भोः पादार्चने रतम् ॥३०॥
प्रथमं शिवबीजेषु कलासु च चतुष्कलम् । पूर्वभागे मया भक्त्या शक्त्या सह समर्चितम् ॥३१॥
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु । अञ्जनादिप्रतीकाशमघोरं घोरविग्रहम् ॥३२॥
देवस्य दक्षिणं वक्त्रं देवदेवपदार्चकम् । विद्यापादं समारूढं वह्निमण्डलमध्यगम् ॥३३॥
द्वितीयं शिवबीजेषु कलास्वष्टकलान्वितम् । शम्भोर्दक्षिणदिग्भागे शक्त्या सह समर्चितम् ॥३४॥
पवित्रं मध्यमं ब्रह्म प्रार्थितं मे प्रयच्छतु । कुंकुमक्षोदसंकाशं वामाख्यं वरवेषधृक् ॥३५॥
वक्त्रमुत्तरमीशस्य प्रतिष्ठायां प्रतिष्ठितम् । वारिमण्डलमध्यस्थं महादेवार्चने रतम् ॥३६॥
तुरीयं शिवबीजेषु त्रयोदशकलान्वितम् । देवस्योत्तरदिग्भागे शक्त्या सह समर्चितम् ॥३७॥
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु । शंखकुंदेंदुधवलं संध्याख्यं सौम्यलक्षणम् ॥३८॥
शिवस्य पश्चिमं वक्त्रं शिवपादार्चने रतम् । निवृत्तिपदनिष्ठं च पृथिव्यां समवस्थितम् ॥३९॥
तृतीयं शिवबीजेषु कलाभिश्चाष्टभिर्युतम् । देवस्य पश्चिमे भागे शक्त्या सह समर्चितम् ॥४०॥
पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु । शिवस्य तु शिवायाश्च हृन्मूर्ति शिवभाविते ॥४१॥
तयोराज्ञां पुरस्कृत्य ते मे कामं प्रयच्छताम् । शिवस्य च शिवायाश्च शिखामूर्ति शिवाश्रिते ॥४२॥
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् । शिवस्य च शिवायाश्च वर्मणा शिवभाविते ॥४३॥
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् । शिवस्य च शिवायाश्च नेत्रमूर्ति शिवाश्रिते ॥४४॥
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् । अस्त्रमूर्ती च शिवयोर्नित्यमर्चनतत्परे ॥४५॥
सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् । वामौ ज्येष्ठस्तथा रुद्रः कालो विकरणस्तथा ॥४६॥
बलो विकरणश्चैव बलप्रमथनः परः । सर्वभूतस्य दमनस्तादृशाश्चाष्टशक्तयः ॥४७॥
प्रार्थितं मे प्रयच्छंतु शिवयोरेव शासनात् । अथानन्तश्च सूक्ष्मश्च शिवश्चाप्येकनेत्रकः ॥४८॥
एक रुद्राख्यमूर्तिश्च श्रीकण्ठश्च शिखण्डकः । तथाष्टौ शक्तयस्तेषां द्वितीयावरणेऽर्चिताः ॥४९॥
ते मे कामं प्रयच्छंतु शिवयोरेव शासनात् । भवाद्या मूर्तयश्चाष्टौ तासामपि च शक्तयः ॥५०॥
महादेवादयश्चान्ये तथैकादशमूर्तयः । शक्तिभिस्सहितास्सर्वे तृतीयावरणे स्थिताः ॥५१॥
सत्कृत्य शिवयोराज्ञां दिशंतु फलमीप्सितम् । वृक्षराजो महातेजा महामेघसमस्वनः ॥५२॥
मेरुमंदरकैलासहिमाद्रिशिखरोपमः । सिताभ्रशिखराकारः ककुदा परिशोभितः ॥५३॥
महाभोगीन्द्रकल्पेन वालेन च विराजितः । रक्तास्यशृंगचरणौ रक्तप्रायविलोचनः ॥५४॥
पीवरोन्नतसर्वाङ्गस्सुचारुगमनोज्वलः । प्रशस्तलक्षणः श्रीमान्प्रज्वलन्मणिभूषणः ॥५५॥
शिवप्रियः शिवासक्तः शिवयोर्ध्वजवाहनः । तथा तच्चरणन्यासपावितापरविग्रहः ॥५६॥
गोराजपुरुषः श्रीमाञ्छ्रीमच्छूलवरायुधः । तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥५७॥
नन्दीश्वरो महातेजा नगेन्द्रतनयात्मजः । सनारायणकैर्देवैर्नित्यमभ्यर्च्य वंदितः ॥५८॥
शर्वस्यान्तःपुरद्वारि सार्धं परिजनैः स्थितः । सर्वेश्वरसमप्रख्यस्सर्वासुरविमर्दनः ॥५९॥
सर्वेषां शिवधर्माणामध्यक्षत्वेऽभिषेचितः । शिवप्रियश्शिवासक्तश्श्रीमच्छूलवरायुधः ॥६०॥
शिवाश्रितेषु संसक्तस्त्वनुरक्तश्च तैरपि । सत्कृत्य शिवयोराज्ञां स मे कामं प्रयच्छतु ॥६१॥

महाकालो महाबाहुर्महादेव इवापरः । महादेवाश्रितानां तु नित्यमेवाभिरक्षतु ॥६२॥
शिवप्रियः शिवासक्तश्शिवयोरर्चकस्सदा । सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥६३॥
सर्वशास्त्रार्थतत्त्वज्ञः शास्ता विष्णोः परा तनुः । महामोहात्मतनयो मधुमांसासवप्रियः ॥६४॥
तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु । ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ॥६५॥
वाराही चैव माहेंद्री चामुंडा चण्डविक्रमा । एता वै मातरः सप्त सर्वलोकस्य मातरः ॥६६॥
प्रार्थितं मे प्रयच्छंतु परमेश्वरशासनात् । मत्तमातंगवदनो गङ्गोमाशंकरात्मजः ॥६७॥
आकाशदेहो दिग्बाहुस्सोमसूर्याग्निलोचनः । ऐरावतादिभिर्दिव्यैर्दिग्गजैर्नित्यमर्चितः ॥६८॥
शिवज्ञानमदोद्भिन्नस्त्रिदशानामविघ्नकृत् । विघ्नकृच्चासुरादीनां विघ्नेशः शिवभावितः ॥६९॥
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् । षण्मुखश्शिवसम्भूतः शक्तिवज्रधरः प्रभुः ॥७०॥
अग्नेश्च तनयो देवो ह्यपर्णातनयः पुनः । गङ्गायाश्च गणांबायाः कृत्तिकानां तथैव च ॥७१॥
विशाखेन च शाखेन नैगमेयेन चावृतः । इंद्रजिच्चंद्रसेनानीस्तारकासुरजित्तथा ॥७२॥
शैलानां मेरुमुख्यानां वेधकश्च स्वतेजसा । तप्तचामीकरप्रख्यः शतपत्रदलेक्षणः ॥७३॥
कुमारस्सुकुमाराणां रूपोदाहरणं महत् । शिवप्रियः शिवासक्तः शिवपदार्चकस्सदा ॥७४॥
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् । ज्येष्ठा वरिष्ठा वरदा शिवयोर्यजनेरता ॥७५॥
तयोराज्ञां पुरस्कृत्य सा मे दिशतु कांक्षितम् । त्रैलोक्यवंदिता साक्षादुल्काकारा गणांबिका ॥७६॥
जगत्सृष्टिविवृद्ध्यर्थं ब्रह्मणाऽभ्यर्थिता शिवात् । शिवायाः प्रविभक्ताया भ्रुवोरन्तरनिस्सृताः ॥७७॥
दक्षायणी सती मेना तथा हैमवती ह्युमा । कौशिक्याश्चैव जननी भद्रकाल्यास्तथैव च ॥७८॥
अपर्णायाश्च जननी पाटलायास्तथैव च । शिवार्चनरता नित्यं रुद्राणी रुद्रवल्लभा ॥७९॥
सत्कृत्य शिवयोराज्ञां सा मे दिशतु कांक्षितम् । चण्डः सर्वगणेशानः शम्भोर्वदनसंभवः ॥८०॥
सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् । पिंगलो गणफ श्रीमाञ्छिवासक्तः शिवप्रियः ॥८१॥
आज्ञया शिवयोरेव स मे कामं प्रयच्छतु । भृंगीशो नाम गणफ शिवराधनतत्परः ॥८२॥
प्रयच्छतु स मे कामं पत्युराज्ञा पुरःसरम् । वीरभद्रो महातेजा हिमकुंदेंदुसन्निभः ॥८३॥
भद्रकालीप्रियो नित्यं मातृणां चाभिरक्षिता । यज्ञस्य च शिरोहर्ता दक्षस्य च दुरात्मनः ॥८४॥
उपेंद्रेंद्रयमादीनां देवानामङ्गतक्षकः । शिवस्यानुचरः श्रीमाञ्छिवशासनपालकः ॥८५॥
शिवयोः शासनादेव स मे दिशतु कांक्षितम् । सरस्वती महेशस्य वाक्सरोजसमुद्भवा ॥८६॥
शिवयोः पूजने सक्ता स मे दिशतु कांक्षितम् । विष्णोर्वक्षःस्थिता लक्ष्मीः शिवयोः पूजने रता ॥८७॥
शिवयोः शासनादेव सा मे दिशतु कांक्षितम् । महामोटी महादेव्याः पादपूजापरायणा ॥८८॥
तस्या एव नियोगेन सा मे दिशतु कांक्षितम् । कौशिकी सिंहमारूढा पार्वत्याः परमा सुता ॥८९॥
विष्णोर्निद्रामहामाया महामहिषमर्दिनी । निशम्भशुंभसंहत्री मधुमांसासवप्रिया ॥९०॥
सत्कृत्य शासनं मातुस्सा मे दिशतु कांक्षितम् । रुद्रा रुद्रसमप्रख्याः प्रथमाः प्रथितौजसः ॥९१॥
भूताख्याश्च महावीर्या महादेवसमप्रभाः । नित्यमुक्ता निरुपमा निर्द्वन्द्वा निरुपप्लवाः ॥९२॥
सशक्तयस्सानुचरास्सर्वलोकनमस्कृताः । सर्वेषामेव लोकानां सृष्टिसंहरणक्षमाः ॥९३॥
परस्परानुरक्ताश्च परस्परमनुव्रताः । परस्परमतिस्निग्धाः परस्परनमस्कृताः ॥९४॥
शिवप्रियतमा नित्यं शिवलक्षणलक्षिताः । सौम्याधारास्तथा मिश्राश्चान्तरालद्वयात्मिकाः ॥९५॥
विरूपाश्च सुरूपाश्च नानारूपधरास्तथा । सत्कृत्य शिवयोराज्ञां ते मे कामं दिशंतु वै ॥९६॥
देव्या प्रियसखीवर्गो देवीलक्षणलक्षितः । सहितो रुद्रकन्याभिः शक्तिभिश्चाप्यनेकशः ॥९७॥
तृतीयावरणे शम्भोर्भक्त्या नित्यं समर्चितः । सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ॥९८॥
दिवाकरो महेशस्य मूर्तिर्दीप्तिसुमण्डलः । निर्गुणो गुणसंकीर्णस्तथैव गुणकेवलः ॥९९॥
अविकारात्मकश्चाद्य एकस्सामान्यविक्रियः । असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ॥१००॥
एवं त्रिधा चतुर्धा च विभक्तः पञ्चधा पुनः । चतुर्थावरणे शम्भोः पूजितश्चानुगैः सह ॥१०१॥
शिवप्रियः शिवासक्तः शिवपादार्चने रतः । सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ॥१०२॥

दिवाकरषडंगानि दीप्ताद्याश्चाष्टशक्तयः । आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ॥१०३॥
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चादित्यमूर्तयः । विस्तरासुतराबोधिन्याप्यायिन्यपराः पुनः ॥१०४॥
उषा प्रभा तथा प्राज्ञा संध्या चेत्यपि शक्तयः । सोमादिकेतुपर्यं ता ग्रहाश्च शिवभाविताः ॥१०५॥
शिवयोराज्ञयानुन्ना मङ्गलं प्रदिशंतु मे । अथवा द्वादशादित्यास्तथा द्वादश शक्तयः ॥१०६॥
ऋषयो देवगन्धर्वाः पन्नगाप्सरसां गणाः । ग्रामण्यश्च तथा यक्षा राक्षसाश्चासुरास्तथा ॥१०७॥
सप्तसप्तगणाश्चैते सप्तच्छंदोमया हयाः । वालखिल्या दयश्चैव सर्वे शिवपदार्चकाः ॥१०८॥
सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशंतु मे । ब्रह्माथ देवदेवस्य मूर्तिर्भूमण्डलाधिफ ॥१०९॥
चतुःषष्टिगुणैश्वर्यो बुद्धितत्त्वे प्रतिष्ठितः । निर्गुणो गुणसंकीर्णस्तथैव गुणकेवलः ॥११०॥
अविकारात्मको देवस्ततस्साधारणः पुरः । असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ॥१११॥
भुवं त्रिधा चतुर्धा च विभक्तः पञ्चधा पुनः । चतुर्थावरणे शम्भो पूजितश्च सहानुगैः ॥११२॥
शिवप्रियः शिवासक्तश्शिवपादार्चने रतः । सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ॥११३॥
हिरण्यगर्भो लोकेशो विराट् कालश्च पूरुषः । सनत्कुमारः सनकः सनंदश्च सनातनः ॥११४॥
प्रजानां पतयश्चैव दक्षाद्या ब्रह्मसूनवः । एकादश सपत्नीका धर्मस्संकल्प एव च ॥११५॥
शिवार्चनरताश्चैते शिवभक्तिपरायणाः । शिवाज्ञावशगास्सर्वे दिशंतु मम मङ्गलम् ॥११६॥
चत्वारश्च तथा वेदास्सेतिहासपुराणकाः । धर्मशास्त्राणि विद्याभिर्वैदिकीभिस्समन्विताः ॥११७॥
परस्परविरुद्धार्थाः शिवप्रकृतिपादकाः । सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशंतु मे ॥११८॥
अथ रुद्रो महादेवः शम्भोर्मूर्तिर्गरीयसी । वाह्नेयमण्डलाधीशः पौरुषैश्वर्यवान्प्रभुः ॥११९॥
शिवाभिमानसंपन्नो निर्गुणस्त्रिगुणात्मकः । केवलं सात्त्विकश्चापि राजसश्चैव तामसः ॥१२०॥
अविकाररतः पूर्वं ततस्तु समविक्रियः । असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् ॥१२१॥
ब्रह्मणोपि शिरश्छेत्ता जनकस्तस्य तत्सुतः । जनकस्तनयश्चापि विष्णोरपि नियामकः ॥१२२॥
बोधकश्च तयोर्नित्यमनुग्रहकरः प्रभुः । अंडस्यान्तर्बहिर्वर्ती रुद्रो लोकद्वयाधिफ ॥१२३॥
शिवप्रियः शिवासक्तः शिवपादार्चने रतः । शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मङ्गलम् ॥१२४॥
तस्य ब्रह्म षडंगानि विद्येशान्तं तथाष्टकम् । चत्वारो मूर्तिभेदाश्च शिवपूर्वाः शिवार्चकाः ॥१२५॥
शिवो भवो हरश्चैव मृडश्चैव तथापरः । शिवस्याज्ञां पुरस्कृत्य मङ्गलं प्रदिशंतु मे ॥१२६॥
अथ विष्णुर्महेशस्य शिवस्यैव परा तनुः । वारितत्त्वाधिफ साक्षादव्यक्तपदसंस्थितः ॥१२७॥
निर्गुणस्सत्त्वबहुलस्तथैव गुणकेवलः । अविकाराभिमानी च त्रिसाधारणविक्रियः ॥१२८॥
असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् । दक्षिणाङ्गभवेनापि स्पर्धमानः स्वयंभुवा ॥१२९॥
आद्येन ब्रह्मणा साक्षात्सृष्टः स्रष्टा च तस्य तु । अंडस्यान्तर्बहिर्वर्ती विष्णुर्लोकद्वयाधिफ ॥१३०॥
असुरान्तकरश्चक्री शक्तस्यापि तथानुजः । प्रादुर्भूतश्च दशधा भृगुशापच्छलादिह ॥१३१॥
भूभारनिग्रहार्थाय स्वेच्छयावातरक्षितौ । अप्रमेयबलो मायी मायया मोहयञ्जगत् ॥१३२॥
मूर्तिं कृत्वा महाविष्णुं सदाशिष्णुमथापि वा । वैष्णवैः पूजितो नित्यं मूर्तित्रयमयासने ॥१३३॥
शिवप्रियः शिवासक्तः शिवपादार्चने रतः । शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मङ्गलम् ॥१३४॥
वासुदेवोऽनिरुद्धश्च प्रद्युम्नश्च ततः परः । संकर्षणस्समाख्याताश्चतस्रो मूर्तयो हरेः ॥१३५॥
मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः । रामत्रयं तथा कृष्णो विष्णुस्तुरगवक्त्रकः ॥१३६॥
चक्रं नारायणस्यास्त्रं पांचजन्यं च शार्ङ्गकम् । सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशंतु मे ॥१३७॥
प्रभा सरस्वती गौरी लक्ष्मीश्च शिवभाविता । शिवयोः शासनादेता मङ्गलं प्रदिशंतु मे ॥१३८॥
इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा । वायुः सोमः कुबेरश्च तथेशानस्त्रिशूलधृक् ॥१३९॥
सर्वे शिवार्चनरताः शिवसद्भावभाविताः । सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशंतु मे ॥१४०॥
त्रिशूलमथ वज्रं च तथा परशुसायकौ । खड्गपाशाङ्कुशाश्चैव पिनाकश्चायुधोत्तमः ॥१४१॥
दिव्यायुधानि देवस्य देव्याश्चैतानि नित्यशः । सत्कृत्य शिवयोराज्ञां रक्षां कुर्वंतु मे सदा ॥१४२॥
वृषरूपधरो देवः सौरभेयो महाबलः । वडवाख्यानलस्पर्धी पञ्चगोमातृभिर्वृतः ॥१४३॥

वाहनत्वमनुप्राप्तस्तपसा परमेशयोः । तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥१४४॥
नंदा सुनंदा सुरभिः सुशीला सुमनास्तथा । पञ्चगोमातरस्त्वेताश्शिवलोके व्यवस्थिताः ॥१४५॥
शिवभक्तिपरा नित्यं शिवार्चनपरायणाः । शिवयोः शासनादेव दिशंतु मम वांछितम् ॥१४६॥
क्षेत्रपालो महातेजा नील जीमूतसन्निभः । दंष्ट्राकरालवदनः स्फुरदक्ताधरोज्वलः ॥१४७॥
रक्तोर्ध्वमूर्धजः श्रीमान्भ्रुकुटीकुटिलेक्षणः । रक्तवृत्तत्रिनयनः शशिपन्नगभूषणः ॥१४८॥
नग्नस्त्रिशूलपाशासिकपालोद्यतपाणिकः । भैरवो भैरवैः सिद्धैर्योगिनीभिश्च संवृतः ॥१४९॥
क्षेत्रेक्षेत्रे समासीनः स्थितो यो रक्षकस्सताम् । शिवप्रणामपरमः शिवसद्भावभावितः ॥१५०॥
शिवश्रितान्विशेषेण रक्षन्पुत्रानिवौरसान् । सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ॥१५१॥
तालजङ्घादयस्तस्य प्रथमावरणेर्चिताः । सत्कृत्य शिवयोराज्ञां चत्वारः समवन्तु माम् ॥१५२॥
भैरवाद्याश्च ये चान्ये समंतात्तस्य वेष्टिताः । तेऽपि मामनुगृह्णन्तु शिवशासनगौरवात् ॥१५३॥
नारदाद्याश्च मुनयो दिव्या देवैश्च पूजिताः । साध्या मागाश्च ये देवा जनलोकनिवासिनः ॥१५४॥
विनिवृत्ताधिकाराश्च महर्लोकनिवासिनः । सप्तर्षयस्तथान्ये वै वैमानिकगुणैस्सह ॥१५५॥
सर्वे शिवार्चनरताः शिवाज्ञावशवर्तिनः । शिवयोराज्ञया मह्यं दिशंतु मम कांक्षितम् ॥१५६॥
गन्धर्वाद्याः पिशाचान्ताश्चतस्रो देवयोनयः । सिद्धा विद्याधराद्याश्च येऽपि चान्ये नभश्चराः ॥१५७॥
असुरा राक्षसाश्चैव पातालतलवासिनः । अनन्ताद्याश्च नागेन्द्रा वैनतेयादयो द्विजाः ॥१५८॥
कूष्मांडाः प्रेतवेताला ग्रहा भूतगणाः परे । डाकिन्यश्चापि योगिन्यः शाकिन्यश्चापि तादृशाः ॥१५९॥
क्षेत्रारामगृहादीनि तीर्थान्यायतनानि च । द्वीपाः समुद्रा नद्यश्च नदाश्चान्ये सरांसि च ॥१६०॥
गिरयश्च सुमेर्वाद्याः काननानि समंततः । पशवः पक्षिणो वृक्षाः कृमिकीटादयो मृगाः ॥१६१॥
भुवनान्यपि सर्वाणि भुवनानामधीश्वरः । अण्डान्यावरणैस्सार्धं मासाश्च दश दिग्गजाः ॥१६२॥
वर्णाः पदानि मन्त्राश्च तत्त्वान्यपि सहाधिपैः । ब्रह्मांडधारका रुद्रा रुद्राश्चान्ये सशक्तिकाः ॥१६३॥
यच्च किञ्चिज्जगत्यस्मिन्दृष्टं चानुमितं श्रुतम् । सर्वे कामं प्रयच्छन्तु शिवयोरेव शासनात् ॥१६४॥
अथ विद्या परा शैवी पशुपाशविमोचिनी । पञ्चार्थसंज्ञिता दिव्या पशुविद्याबहिष्कृता ॥१६५॥
शास्त्रं च शिवधर्माख्यं धर्माख्यं च तदुत्तरम् । शैवाख्यं शिवधर्माख्यं पुराणं श्रुतिसंमितम् ॥१६६॥
शैवागमाश्च ये चान्ये कामिकाद्याश्चतुर्विधाः । शिवाभ्यामविशेषेण सत्कृत्येह समर्चिताः ॥१६७॥
ताभ्यामेव समाज्ञाता ममाभिप्रेतसिद्धये । कर्मेदमनुमन्यन्तां सफलं साध्वनुष्ठितम् ॥१६८॥
श्वेताद्या नकुलीशान्ताः सशिष्याश्चापि देशिकाः । तत्सन्ततीया गुरवो विशेषाद्गुरवो मम ॥१६९॥
शैवा माहेश्वराश्चैव ज्ञानकर्मपरायणाः । कर्मेदमनुमन्यन्तां सफलं साध्वनुष्ठितम् ॥१७०॥
लौकिका ब्राह्मणास्सर्वे क्षत्रियाश्च विशः क्रमात् । वेदवेदाङ्गतत्त्वज्ञाः सर्वशास्त्रविशारदाः ॥१७१॥
सांख्या वैशेषिकाश्चैव यौगा नैयायिका नराः । सौरा ब्रह्मास्तथा रौद्रा वैष्णवाश्चापरे नराः ॥१७२॥
शिष्टाः सर्वे विशिष्टा च शिवशासनयन्त्रिताः । कर्मेदमनुमन्यन्तां ममाभिप्रेतसाधकम् ॥१७३॥
शैवाः सिद्धान्तमार्गस्थाः शैवाः पाशुपतास्तथा । शैवा महाव्रतधराः शैवाः कापालिकाः परे ॥१७४॥
शिवाज्ञापालकाः पूज्या ममापि शिवशासनात् । सर्वे ममानुगृह्णन्तु शंसन्तु सफलक्रियाम् ॥१७५॥
दक्षिणज्ञाननिष्ठाश्च दक्षिणोत्तरमार्गगाः । अविरोधेन वर्तंतां मन्त्रश्रेयोऽर्थिनो मम ॥१७६॥
नास्तिकाश्च शठाश्चैव कृतघ्नाश्चैव तामसाः । पाषंडाश्चातिपापाश्च वर्तंतां दूरतो मम ॥१७७॥
बहुभिः किं स्तुतैरत्र येऽपि केऽपि चिदास्तिकाः । सर्वे मामनुगृह्णन्तु सन्तः शंसन्तु मङ्गलम् ॥१७८॥
नमश्शिवाय सांबाय ससुतायादिहेतवे । पञ्चावरणरूपेण प्रपञ्चेनावृताय ते ॥१७९॥
इत्युक्त्वा दण्डवद्भूमौ प्रणिपत्य शिवं शिवाम् । जपेत्पञ्चाक्षरीं विद्यामष्टोत्तरशतावराम् ॥१८०॥
तथैव शक्तिविद्यां च जपित्वा तत्समर्पणम् । कृत्वा तं क्षमयित्वेशं पूजाशेषं समापयेत् ॥१८१॥
एतत्पुण्यतमं स्तोत्रं शिवयोर्हृदयंगमम् । सर्वाभीष्टप्रदं साक्षाद्भुक्तिमुक्त्यैकसाधनम् ॥१८२॥
य इदं कीर्तयेन्नित्यं शृणुयाद्वा समाहितः । स विधूयाशु पापानि शिवसायुज्यमाप्नुयात् ॥१८३॥
गोघ्नश्चैव कृतघ्नश्च वीरहा भ्रूणहापि वा । शरणागतघाती च मित्रविश्रंभघातकः ॥१८४॥

दुष्टपापसमाचारो मातृहा पितृहापि वा । स्तवेनानेन जप्तेन तत्तत्पापात्प्रमुच्यते ॥१८५॥
दुःस्वप्नादिमहानर्थसूचकेषु भयेषु च । यदि संकीर्तयेदेतन्न ततो नार्थभाग्भवेत् ॥१८६॥
आयुरारोग्यमैश्वर्यं यच्चान्यदपि वाञ्छितम् । स्तोत्रस्यास्य जपे तिष्ठंस्तत्सर्वं लभते नरः ॥१८७॥
असंपूज्य शिवस्तोत्रं जपात्फलमुदाहृतम् । संपूज्य च जपे तस्य फलं वक्तुं न शक्यते ॥१८८॥
आस्तामियं फलावाप्तिरस्मिन्संकीर्तिते सति । सार्धमंबिकया देवः श्रुत्यैवं दिवि तिष्ठति ॥१८९॥
तस्मान्नभसि संपूज्य देवं देवं सहोमया । कृताञ्जलिपुटस्तिष्ठंस्तोत्रमेतदुदीरयेत् ॥१९०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवमहास्तोत्रवर्णनं नामैकत्रिंशोऽध्यायः ॥३१॥
आदितः श्लोकानां समष्टयङ्काः-२३,४७५+१९०=२३,६६५



## ॥ अथ द्वात्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥

एतत्ते कथितं कृष्ण कर्मेहामुत्र सिद्धिदम् । क्रियातपोजपध्यानसमुच्चयमयं परम् ॥१॥
अथ वक्ष्यामि शैवानामिहैव फलदं नृणाम् । पूजाहोमजपध्यानतपोदानमयं महत् ॥२॥
तत्र संसाधयेत्पूर्वं मन्त्रं मन्त्रार्थवित्तमः । दृष्टसिद्धिकरं कर्म नान्यथा फलदं यतः ॥३॥
सिद्धमन्त्रोऽप्यदृष्टेन प्रबलेन तु केनचित् । प्रतिबन्धफलं कर्म न कुर्यात्सहसा बुधः ॥४॥
तस्य तु प्रतिबन्धस्य कर्तुं शक्येह निष्कृतिः । परीक्ष्य शकुनाद्यैस्तदादौ निष्कृतिमाचरेत् ॥५॥
योऽन्यथा कुरुते मोहात्कर्मैहिकफलं नरः । न तेन फलभाक्स स्यात्प्राप्नुयाच्चोपहास्यताम् ॥६॥
अविस्रब्धो न कुर्वीत कर्म दृष्टफलं क्वचित् । स खल्वश्रद्दधानः स्यान्नाश्रद्धः फलमृच्छति ॥७॥
नापराधोस्ति देवस्य कर्मण्यपि तु निष्फले । यथोक्तकारिणां पुंसामिहैव फलदर्शनात् ॥८॥
साधकः सिद्धमन्त्तश्च निरस्तप्रतिबन्धकः । विश्वस्तः श्रद्धधानश्च कुर्वन्नाप्नोति तत्फलम् ॥९॥
अथवा तत्फलावाप्त्यै ब्रह्मचर्यरतो भवेत् । रात्रौ हविष्यमश्नीयात्पायसं वा फलानि वा ॥१०॥
हिंसादि यन्निषिद्धं स्यान्न कुर्यान्मनसापि तत् । सदा भस्मानुलिप्तां गस्सुवेषश्च शुचिर्भवेत् ॥११॥
इत्थमाचारवान्भूत्वा स्वानुकूले शुभेऽहनि । पूर्वोक्तलक्षणे देशे पुष्पदामाद्यलंकृते ॥१२॥
आलिप्य शकृता भूमिं हस्तमानावरां यथा । विलिखेत्कमले भद्रे दीप्यमानं स्वतेजसा ॥१३॥
तप्तजांबूनदमयमष्टपत्रं सकेसरम् । मध्ये कर्णिकया युक्तं सर्वरत्नैरलंकृतम् ॥१४॥
स्वाकारसदृशेनैव नालेन च समन्वितम् । तादृशे स्वर्णनिर्माणे कंदे सम्यग्विधानतः ॥१५॥
तत्राणिमादिकं सर्वं संकल्प्य मनसा पुनः । रत्नजं वाथ सौवर्णं स्फटिकं वा सलक्षणम् ॥१६॥
लिङ्गं सवेदिकं चैव स्थापयित्वा विधानतः । तत्रावाह्य यजेद्देवं सांबं सगणमव्ययम् ॥१७॥
तत्र माहेश्वरी कल्प्या मूर्तिर्मूर्तिमतः प्रभोः । चतुर्भुजा चतुर्वक्त्रा सर्वाभरणभूषिता ॥१८॥
शार्दूलचर्मवसना किञ्चिद्विहसितानना । वरदाभयहस्ता च मृगटंकधरा तथा ॥१९॥
अथवाष्टभुजा चिन्त्या चिन्तकस्य यथारुचि । तदा त्रिशूलपरशुखड्गवज्राणि दक्षिणे ॥२०॥
वामे पाशाङ्कुशौ तद्वत्खेटं नागं च बिभ्रती । बालार्कसदृशप्रख्या प्रतिवक्त्रं त्रिलोचना ॥२१॥
तस्याः पूर्वमुखं सौम्यं स्वाकारसदृशप्रभम् । दक्षिणं नीलजीमूतसदृशं घोरदर्शनम् ॥२२॥
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् । पश्चिमं पूर्णचंद्राभं सौम्यमिंदुकलाधरम् ॥२३॥
तदंकमण्डलारूढा शक्तिर्माहेश्वरी परा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥२४॥
मूर्तिं कृत्वैवमाकारां सकलीकृत्य च क्रमात् । मूर्तिमंतमथावाह्य यजेत्परमकारणम् ॥२५॥
स्नानार्थं कल्पयेत्तत्र पञ्चगव्यं तु कापिलम् । पञ्चामृतं च पूर्णानि बीजानि च विशेषतः ॥२६॥
पुरस्तान्मण्डलं कृत्वा रत्नचूर्णाद्यलंकृतम् । कर्णिकायां प्रविन्यस्येदीशानकलशं पुनः ॥२७॥
सद्यादिकलशान्पश्चात्परितस्तस्य कल्पयेत् । ततो विद्येशकलशानष्टौ पूर्वादिवत्क्रमात् ॥२८॥
तीर्थाम्बुपूरितान्कृत्वा सूत्रेणावेष्ट्य पूर्ववत् । पुण्यद्रव्याणि निक्षिप्य समन्त्रं सविधानकम् ॥२९॥

दुकूलाद्येन वस्त्रेण समाच्छाद्य समंततः । सर्वत्र मन्त्रं विन्यस्य तत्तन्मन्त्रपुरस्सरम् ॥३०॥
स्नानकाले तु संप्राप्ते सर्वमङ्गलनिस्वनैः । पञ्चगव्यादिभिश्चैव स्नापयेत्परमेश्वरम् ॥३१॥
ततः कुशोदकाद्यानि स्वर्णरत्नोदकान्यपि । गन्धपुष्पादिसिद्धानि मन्त्रसिद्धानि च क्रमात् ॥३२॥
उद्धृत्योद्धृत्य मन्त्रेण तैस्तैस्स्नाप्य महेश्वरम् । गन्धं पुष्पादिदीपांश्च पूजाकर्म समाचरेत् ॥३३॥
पलावरः स्यादालेप एकादशपलोत्तरः । सुवर्णरत्नपुष्पाणि शुभानि सुरभीणि च ॥३४॥
नीलोत्पलाद्युत्पलानि बिल्वपत्राण्यनेकशः । कमलानि च रक्तानि श्वेतान्यपि च शम्भवे ॥३५॥
कृष्णागुरूद्भवो धूफ सकर्पूराज्यगुग्गुलः । कपिलाघृतसंसिद्धा दीपाः कर्पूरवर्तिजाः ॥३६॥
पञ्चब्रह्मषडंगानि पूज्यान्यावरणानि च । नैवेद्यः पयसा सिद्धः स गुडाज्यो महाचरुः ॥३७॥
पाटलोत्पलपद्माद्यैः पानीयं च सुगन्धितम् । पञ्चसौगन्धिकोपेतं तांबूलं च सुसंस्कृतम् ॥३८॥
सुवर्णरत्नसिद्धानि भूषणानि विशेषतः । वासांसि च विचित्राणि सूक्ष्माणि च नवानि च ॥३९॥
दर्शनीयानि देयानि गानवाद्यादिभिस्सह । जपश्च मूलमन्त्रस्य लक्षः परमसंख्यया ॥४०॥
एकावरा त्र्युत्तरा च पूजा फलवशादिह । दशसंख्यावरो होमः प्रतिद्रव्यं शतोत्तरः ॥४१॥
घोररूपश्शिवश्चिंत्यो मारणोच्चाटनादिषु । शिवलिङ्गे शिवाग्नौ च ह्यन्यासु प्रतिमासु च ॥४२॥
चिन्त्यस्सौम्यतनुश्शंभुः कार्ये शान्तिकपौष्टिके । आयसौ स्रुरुक्स्रुवौ कार्यौ मारणादिषु कर्मसु ॥४३॥
तदन्यत्र तु सौवर्णौ शान्तिकाद्येषु कृत्स्नशः । दूर्वया घृतगोक्षीरमिश्रया मधुना तथा ॥४४॥
चरुणा सघृतेनैव केवलं पयसापि वा । जुहुयान्मृत्युविजये तिलै रोगोपशान्तये ॥४५॥
घृतेन पयसा चैव कमलैर्वाथ केवलैः । समृद्धिकामो जुहुयान्महादारिद्र्यशान्तये ॥४६॥
जातीपुष्पेण वश्यार्थी जुहुयात्सघृतेन तु । घृतेन करवीरैश्च कुर्यादाकर्षणं द्विजः ॥४७॥
तैलेनोच्चाटनं कुर्यात्स्तम्भनं मधुना पुनः । स्तम्भनं सर्षपेणापि लशुनेन तु पातनम् ॥४८॥
ताडनं रुधिरेण स्यात्खरस्योष्ट्रस्य चोभयोः । मारणोच्चाटने कुर्याद्रोहिबीजैस्तिलान्वितैः ॥४९॥
विद्वेषणं च तैलेन कुर्याल्लाङ्गलकस्य तु । बन्धनं रोहिबीजेन सेनास्तम्भनमेव च ॥५०॥
रक्तसर्षपसंमिश्रैर्होमद्रव्यैरशेषतः । हस्तयंत्रोद्भवैस्तैलैर्जुहुयादाभिचारिके ॥५१॥
कटुकीतुषसंयुक्तैः कार्पासास्थिभिरेव च । सर्षपैस्तैलसंमिश्रैर्जुहुयादाभिचारिके ॥५२॥
ज्वरोपशान्तिदं क्षीरं सौभाग्यफलदं तथा । सर्वसिद्धिकरो होमः क्षौद्राज्यदधिभिर्युतैः ॥५३॥
क्षीरेण तंदुलैश्चैव चरुणा केवलेन वा । शान्तिकं पौष्टिकं वापि सप्तभिः समिदादिभिः ॥५४॥
द्रव्यैर्विशेषतो होमे वश्यमाकर्षणं तथा । वश्यमाकर्षणं चैव श्रीपदं च विशेषतः ॥५५॥
बिल्वपत्रैस्तु हवनं शत्रोर्विजयदं तथा । समिधः शान्तिकार्येषु पालाशखदिरादिकाः ॥५६॥
करवीरार्कजाः क्रौर्ये कण्टकिन्यश्च विग्रहे । प्रशान्तः शान्तिकं कुर्यात्पौष्टिकं च विशेषतः ॥५७॥
निर्घृणः क्रुद्धचित्तस्तु प्रकुर्यादाभिचारिकम् । अतीवदुरवस्थायां प्रतीकारान्तरं न चेत् ॥५८॥
आततायिनमुद्दिश्य प्रकुर्यादाभिचारिकम् । स्वराष्ट्रपतिमुद्दिश्य न कुर्यादाभिचारिकम् ॥५९॥
यद्यास्तिकस्सुधर्मिष्ठो मान्यो वा योऽपि कोपि वा । तमुद्दिश्यापि नो कुर्यादाततायिनमप्युत ॥६०॥
मनसा कर्मणा वाचा योऽपि कोपि शिवाश्रितः । स्वराष्ट्रपतिमुद्दिश्य शिवा श्रितमथापि वा ॥६१॥
कृत्वाभिचारिकं कर्म सद्यो विनिपतेन्नरः । स्वराष्ट्रपालकं तस्माच्छिवभक्तं च कञ्चन ॥६२॥
न हिंस्यादभिचाराद्यैर्यदीच्छेत्सुखमात्मनः । अन्यं कमपि चोद्दिश्य कृत्वा वै मारणादिकम् ॥६३॥
पश्चात्तापेन संयुक्तः प्रायश्चित्तं समाचरेत् । बाणलिङ्गेऽपि वा कुर्यान्निर्धनो धनवानपि ॥६४॥
स्वयंभूतेऽथ वा लिङ्गे आर्षके वैदिकेऽपि वा । अभावे हेमरत्नानामशक्तौ च तदर्जने ॥६५॥
मनसैवाचरेदेतद्द्रव्यैर्वा प्रतिरूपकैः । क्वचिदंशे तु यः शक्तस्त्वशक्तः क्वचिदंशके ॥६६॥
सोऽपि शक्त्यनुसारेण कुर्वंश्चेत्फलमृच्छति । कर्मण्यनुष्ठितेऽप्यस्मिन्फलं यत्र न दृश्यते ॥६७॥
द्विस्त्रिर्वावर्तयेत्तत्र सर्वथा दृश्यते फलम् । पूजोपयुक्तं यद्द्रव्यं हेमरत्नाद्यनुत्तमम् ॥६८॥
तत्सर्वं गुरवे दद्याद्दक्षिणां च ततः पृथक् । स चेन्नेच्छति तत्सर्वं शिवाय विनिवेदयेत् ॥६९॥
अथवा शिवभक्तेभ्यो नान्येभ्यस्तु प्रदीयते । यः स्वयं साधयेच्छक्त्या गुर्वादिनिरपेक्षया ॥७०॥

सोऽप्येवमाचरेदत्र न गृह्णीयात्स्वयं पुनः । स्वयं गृह्णाति यो लोभात्पूजाङ्गद्रव्यमुत्तमम् ॥७१॥
कांक्षितं न लभेन्मूढो नात्र कार्या विचारणा । अर्चितं यत्तु तल्लिंगं गृह्णीयाद्वा नवा स्वयम् ॥७२॥
गृह्णीयाद्यदि तन्नित्यं स्वयं वान्योऽपि वार्चयेत् । यथोक्तमेव कर्मैतदाचरेद्योऽनपायतः ॥७३॥
फलं व्यभिचरेन्नैवमित्यतः किं प्ररोचकम् । तथाप्युद्देशतो वक्ष्ये कर्मणः सिद्धिमुत्तमम् ॥७४॥
अपि शत्रुभिराक्रान्तो व्याधिभिर्वाप्यनेकशः । मृत्योरास्यगतश्चापि मुच्यते निरपायतः ॥७५॥
पूजायतेऽतिकृपणो रिक्तो वैश्रवणायते । कामायते विरूपोऽपि वृद्धोऽपि तरुणायते ॥७६॥
शत्रुर्मित्रायते सद्यो विरोधी किंकरायते । विषायते यदमृतं विषमप्यमृतायते ॥७७॥
स्थलायते समुद्रोऽपि स्थलमप्यर्णवायते । महीधरायते श्वभ्रं स च श्वभ्रायते गिरिः ॥७८॥
पद्माकरायते वह्निः सरो वैश्वानरायते । वनायते यदुद्यानं तदुद्यानायते वनम् ॥७९॥
सिंहायते मृगः क्षुद्रः सिंहः क्रीडामृगायते । स्त्रियोऽभिसारिकायन्ते लक्ष्मीः सुचरितायते ॥८०॥
स्वैरप्रेष्यायते वाणी कीर्तिस्तु गणिकायते । स्वैराचारायते मेधा वज्रसूचीयते मनः ॥८१॥
महावातायते शक्तिर्बलं मत्तगजायते । स्तम्भायते समुद्योगैः शत्रुपक्षे स्थिता क्रिया ॥८२॥
शत्रुपक्षायतेऽरीणां सर्व एव सुहृज्जनः । शत्रवः कुणपायन्ते जीवन्तोपि सबांधवाः ॥८३॥
आपन्नोऽपि गतारिष्टः स्वयं खल्वमृतायते । रसाय नायते नित्यमपथ्यमपि सेवितम् ॥८४॥
अनिशं क्रियमाणापि रतिस्त्वभिनवायते । अनागतादिकं सर्वं करस्थामलकायते ॥८५॥
यादृच्छिकफलायन्ते सिद्धयोऽप्यणिमादयः । बहुनात्र किमुक्तेन सर्वकामार्थसिद्धिषु ॥
अस्मिन्कर्मणि निर्वृत्ते त्वनवाप्यं न विद्यते ॥८६॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे ऐहिकसिद्धिकर्मवर्णनं नाम द्वात्रिंशोऽध्यायः ॥३२॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,६६५+८६=२३,७५१



## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥
अतः परं प्रवक्ष्यामि केवलामुष्मिकं विधिम् । नैतेन सदृशं किञ्चित्कर्मास्ति भुवनत्रये ॥१॥
पुण्यातिशयसंयुक्तः सर्वैर्देवैरनुष्ठितः । ब्रह्मणा विष्णुना चैव रुद्रेण च विशेषतः ॥२॥
इंद्रादिलोकपालैश्च सूर्याद्यैर्नवभिर्ग्रहैः । विश्वामित्रवसिष्ठाद्यैर्ब्रह्मविद्भिर्महर्षिभिः ॥३॥
श्वेतागस्त्यदधीचाद्यैरस्माभिश्च शिवाश्रितैः । नंदीश्वरमहाकालभृंगीशाद्यैर्गणेश्वरैः ॥४॥
पातालवासिभिर्दैत्यैः शेषाद्यैश्च महोरगैः । सिद्धैर्यक्षैश्च गन्धर्वै रक्षोभूतपिशाचकैः ॥५॥
स्वंस्वं पदमनुप्राप्तं सर्वैरयमनुष्ठितः । अनेन विधिना सर्वे देवा देवत्वमागताः ॥६॥
ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः । रुद्रो रुद्रत्वमापन्न इंद्रश्चेन्द्रत्वमागतः ॥७॥
गणेशश्च गणेशत्वमनेन विधिना गतः । सितचंदनतोयेन लिङ्गं स्नाप्य शिवं शिवाम् ॥८॥
श्वेतैर्विकसितैः पद्मैः संपूज्य प्रणिपत्य च । तत्र पद्मासनं रम्यं कृत्वा लक्षणसंयुतम् ॥९॥
विभवे सति हेमाद्यै रत्नाद्यैर्वा स्वशक्तितः । मध्ये केसरजालास्य स्थाप्य लिङ्गं कनीयसम् ॥१०॥
अङ्गुष्ठप्रतिमं रम्यं सर्वगन्धमयं शुभम् । दक्षिणे स्थापयित्वा तु बिल्वपत्रैः समर्चयेत् ॥११॥
अगुरुं दक्षिणे पार्श्वे पश्चिमे तु मनःशिलाम् । उत्तरे चंदनं दद्याद्धरितालं तु पूर्वतः ॥१२॥
सुगन्धैः कुसुमै रम्यैर्विचित्रैश्चापि पूजयेत् । धूपं कृष्णागुरुं दद्यात्सर्वतश्च सगुग्गुलम् ॥१३॥
वासांसि चातिसूक्ष्माणि विकाशानि निवेदयेत् । पायसं घृतसंमिश्रं घृतदीपांश्च दापयेत् ॥१४॥
सर्वं निवेद्य मन्त्रेण ततो गच्छेत्प्रदक्षिणाम् । प्रणम्य भक्त्या देवेशं स्तुत्वा चान्ते क्षमापयेत् ॥१५॥
सर्वोपहारसंमिश्रं ततो लिङ्गं निवेदयेत् । शिवाय शिवमन्त्रेण दक्षिणामूर्तिमाश्रितः ॥१६॥
एवं योऽर्चयते नित्यं पञ्चगन्धमयं शुभम् । सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥१७॥
एतद्व्रतोत्तमं गुह्यं शिवलिङ्गमहाव्रतम् । भक्तस्य ते समाख्यातं न देयं यस्य कस्यचित् ॥

देयं च शिवभक्तेभ्यः शिवेन कथितं पुरा ॥१८॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे आमुष्मिककर्मविधिवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,७५१+१८=२३,७६९



## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥
नित्यनैमित्तिकात्काम्याद्या सिद्धिरिह कीर्तिता । सा सर्वा लभ्येत सद्यो लिङ्गबेरप्रतिष्ठया ॥१॥
सर्वो लिङ्गमयो लोकस्सर्वं लिङ्गे प्रतिष्ठितम् । तस्मात्प्रतिष्ठिते लिङ्गे भवेत्सर्वं प्रतिष्ठितम् ॥२॥
ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केन वा । लिङ्गप्रतिष्ठामुत्सृज्य क्रियते स्वपदस्थितिः ॥३॥
किमन्यदिह वक्तव्यं प्रतिष्ठां प्रति कारणम् । प्रतिष्ठितं शिवेनापि लिङ्गं वैश्वेश्वरं यतः ॥४॥
तस्मात्सर्वप्रयत्नेन परत्रेह च शर्मणे । स्थापयेत्परमेशस्य लिङ्गं बेरमथापि वा ॥५॥
श्रीकृष्ण उवाच ॥
किमिदं लिङ्गमाख्यातं कथं लिङ्गी महेश्वरः । कथं च लिङ्गभावोऽस्य कस्मादस्मिञ्छिवोऽर्च्यते ॥६॥
उपमन्युरुवाच ॥
अव्यक्तं लिङ्गमाख्यातं त्रिगुणप्रभवाप्ययम् । अनाद्यनन्तं विश्वस्य यदुपादानकारणम् ॥७॥
तदेव मूलप्रकृतिर्माया च गगगनात्मिका । तत एव समुत्पन्नं जगदेतच्चराचरम् ॥८॥
अशुद्धं चैव शुद्धं यच्छुद्धाशुद्धं च तत्त्रिधा । ततः शिवो महेशश्च रुद्रो विष्णुः पितामहः ॥९॥
भूतानि चेन्द्रियैर्जाता लीयन्तेऽत्र शिवाज्ञया । अत एव शिवो लिङ्गो लिङ्गमाज्ञापयेद्यतः ॥१०॥
यतो न तदनाज्ञातं कार्याय प्रभवेत्स्वतः । ततो जातस्य विश्वस्य तत्रैव विलयो यतः ॥११॥
अनेन लिङ्गतां तस्य भवेन्नान्येन केनचित् । लिङ्गं च शिवयोर्देहस्ताभ्यां यस्मादधिष्ठितम् ॥१२॥
अतस्तत्र शिवः साम्बो नित्यमेव समर्चयेत् । लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः ॥१३॥
तयोः संपूजनादेव स च सा च समर्चितौ । न तयोर्लिंगदेहत्वं विद्यते परमार्थतः ॥१४॥
यतस्त्वेतौ विशुद्धौ तौ देहस्तदुपचारतः । तदेव परमा शक्तिः शिवस्य परमात्मनः ॥१५॥
शक्तिराज्ञां यदादत्ते प्रसूते तच्चराचरम् । न तस्य महिमा शक्यो वक्तुं वर्षशतैरपि ॥१६॥
येनादौ मोहितौ स्यातां ब्रह्मनारायणावपि । पुरा त्रिभुवनस्यास्य प्रलये समुपस्थिते ॥१७॥
वारिशय्यागतो विष्णुः सुष्वापानाकुलः सुखम् । यदृच्छया गतस्तत्र ब्रह्मा लोकपितामहः ॥१८॥
ददर्श पुण्डरीकाक्षं स्वपन्तं तमनाकुलम् । मायया मोहितः शम्भोर्विष्णुमाह पितामहः ॥१९॥
कस्त्वं वदेत्यमर्षेण प्रहृत्योत्थाप्य माधवम् । स तु हस्तप्रहारेण तीव्रेणाभिहतः क्षणात् ॥२०॥
प्रबुद्धोत्थाय शयनाद्ददर्श परमेष्ठिनम् । तमाह चान्तस्संक्रुद्धः स्वयमक्रुद्धवद्धरिः ॥२१॥
कुतस्त्वमागतो वत्स कस्मात्त्वं व्याकुलो वद । इति विष्णुवचः श्रुत्वा प्रभुत्वगुणसूचकम् ॥२२॥
रजसा बद्धवैरस्तं ब्रह्मा पुनरभाषत । वत्सेति मां कुतो ब्रूषे गुरुः शिष्यमिवात्मनः ॥२३॥
मां न जानासि किं नाथं प्रपञ्चो यस्य मे कृतिः । त्रिधात्मानं विभज्येदं सृष्ट्वाथ परिपाल्यते ॥२४॥
संहरामि नमे कश्चित्स्रष्टा जगति विद्यते । इत्युक्ते सति सोऽप्याह ब्रह्माणं विष्णुरव्ययः ॥२५॥
अहमेवादिकर्तास्य हर्ता च परिपालकः । भवानपि ममैवाङ्गादवतीर्णः पुराव्ययात् ॥२६॥
मन्नियोगात्त्वमात्मानं त्रिधा कृत्वा जगत्त्रयम् । सृजस्यवसि चान्ते तत्पुनः प्रतिसृजस्यपि ॥२७॥
विस्मृतोसि जगन्नाथं नारायणमनामयम् । तवापि जनकं साक्षान्मामेवमवमन्यसे ॥२८॥
तवापराधो नास्त्यत्र भ्रान्तोसि मम मायया । मत्प्रसादादियं भ्रांतिरपैष्यति तवाचिरात् ॥२९॥
शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्यहम् । कर्ता भर्ता च हर्ता च न मयास्ति समो विभुः ॥३०॥
एवमेव विवादोभूद्ब्रह्मविष्ण्वोः परस्परम् । अभवच्च महायुद्धं भैरवं रोमहर्षणम् ॥३१॥

मुष्टिभिर्निर्घ्नतोस्तीव्रं रजसा बद्धवैरयोः । तयोर्दर्पापहाराय प्रबोधाय च देवयोः ॥३२॥
मध्ये समाविरभवल्लिंगमैश्वरमद्भुतम् । ज्वालामालासहस्राढ्यमप्रमेयमनौपमम् ॥३३॥
क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् । तस्य ज्वालासहस्रेण ब्रह्मविष्णू विमोहितौ ॥३४॥
विसृज्य युद्धं किं त्वेतदित्यचिन्तयतां तदा । न तयोस्तस्य याथात्म्यं प्रबुद्धमभवद्यदा ॥३५॥
तदा समुद्यतौ स्यातां तस्याद्यंतं परीक्षितुम् । तत्र हंसाकृतिर्ब्रह्मा विश्वतः पक्षसंयुतः ॥३६॥
मनोनिलजवो भूत्वा गतस्तूर्ध्वं प्रयत्नतः । नारायणोपि विश्वात्मा लीलाञ्जनचयोपमम् ॥३७॥
वाराहममितं रूपमस्थाय गतवानधः । एवं वर्षसहस्रं तु त्वरन् विष्णुरधोगतः ॥३८॥
नापश्यदल्पमप्यस्य मूलं लिङ्गस्य सूकरः । तावत्कालं गतश्चोर्ध्वं तस्यान्तं ज्ञातुमिच्छया ॥३९॥
श्रान्तोत्यन्तमदृष्ट्वान्तं पापताधः पितामहः । तथैव भगवान् विष्णुः श्रान्तः संविग्नलोचनः ॥४०॥
क्लेशेन महता तूर्णमधस्तादुत्थितोऽभवत् । समागतावथान्योन्यं विस्मयस्मेरवीक्षणौ ॥४१॥
मायया मोहितौ शम्भोः कृत्याकृत्यं न जग्मतुः । पृष्ठतः पार्श्वतस्तस्य चाग्रतश्च स्थितावुभौ ॥
प्रणिपत्य किमात्मेदमित्यचिन्तयतां तदा ॥४२॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे हरिविधिमोहवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,७६९+४२=२३,८११



## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥

अथाविरभवत्तत्र सनादं शब्दलक्षणम् । ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकम् ॥१॥
तदप्यविदितं तावद्ब्रह्मणा विष्णुना तथा । रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतम् ॥२॥
तदा विभक्तमभवच्चतुर्धैकं तदक्षरम् । अ उ मेति त्रिमात्राभिः परस्ताच्चार्धमात्रया ॥३॥
तत्राकारः श्रितो भागे ज्वलल्लिंगस्य दक्षिणे । उकारश्चोत्तरे तद्वन्मकारस्तस्य मध्यतः ॥४॥
अर्धमात्रात्मको नादः श्रूयते लिङ्गमूर्धनि । विभक्तेऽपि तदा तस्मिन्प्रणवे परमाक्षरे ॥५॥
विभावार्थं च तौ देवौ न किञ्चिदवजग्मतुः । वेदात्मना तदाव्यक्तः प्रणवो विकृतिं गतः ॥६॥
तत्राकारो ऋगभवदुकारो यजुरव्ययः । मकारस्साम संजातो नादस्त्वाथर्वणी श्रुतिः ॥७॥
ऋगयं स्थापयामास समासात्त्वर्थमात्मनः । रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ॥८॥
सृष्टिं लोकेषु पृथिवीं तत्त्वेष्वात्मानमव्ययम् । कलाध्वनि निवृत्तिं च सद्यं ब्रह्मसु पञ्चसु ॥९॥
लिङ्गभागेष्वधोभागं बीजाख्यं कारणत्रये । चतुःषष्टिगुणैश्वर्यं बौद्धं यदणिमादिषु ॥१०॥
तदित्थमर्थैर्दशभिर्व्याप्तं विश्वमृचा जगत् । अथोपस्थापयामास स्वार्थं दशविधं यजुः ॥११॥
सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि । स्थितिं लोकेष्वंतरिक्षं विद्यां तत्त्वेषु च त्रिषु ॥१२॥
कलाध्वसु प्रतिष्ठां च वामं ब्रह्मसु पञ्चसु । मध्यं तु लिङ्गभागेषु योनिं च त्रिषु हेतुषु ॥१३॥
प्राकृतं च यथैश्वर्यं तस्माद्विश्वं यजुर्मयम् । ततोपस्थापयामास सामार्थं दशधात्मनः ॥१४॥
तमोगुणेष्वथो रुद्रं मूर्तिष्वाद्यं क्रियासु च । सं हृतिं त्रिषु लोकेषु तत्त्वेषु शिवमुत्तमम् ॥१५॥
विद्याकलास्वघोरं च तथा ब्रह्मसु पञ्चसु । लिङ्गभागेषु पीठोर्ध्वं बीजिनं कारणत्रये ॥१६॥
पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् । अथाथर्वाह नैर्गुण्यमर्थं प्रथममात्मनः ॥१७॥
ततो महेश्वरं साक्षान्मूर्तिष्वपि सदा शिवम् । क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ॥१८॥
भूतानुग्रहणं चैव मुच्यन्ते येन जन्तवः । लोकेष्वपि यतो वाचो निवृत्ता मनसा सह ॥१९॥
तदूर्ध्वमुन्मना लोकात्सोमलोकमलौकिकम् । सोमस्सहोमया यत्र नित्यं निवसतीश्वरः ॥२०॥
तदूर्ध्वमुन्मना लोकाद्यं प्राप्तो न निवर्तते । शान्तिं च शान्त्यतीतां च व्यापिकां चै कलास्वपि ॥२१॥
तत्पुरुषं तथेशानं ब्रह्म ब्रह्मसु पञ्चसु । मूर्धानमपि लिङ्गस्य नादभागेष्वनुत्तमम् ॥२२॥
यत्रावाह्य समाराध्यः केवलो निष्कलः शिवः । तत्तेष्वपि तदा बिंदोर्नादाच्छक्तेस्ततः परात् ॥२३॥

तत्त्वादपि परं तत्त्वमतत्त्वं परमार्थतः । कारणेषु त्रयातीतान्मायाविक्षोभकारणात् ॥२४॥
अनन्ताच्छुद्धविद्यायाः परस्ताच्च महेश्वरात् । सर्वविद्येश्वराधीशान्न पराच्च सदा शिवात् ॥२५॥
सर्वमन्त्रतनोर्देवाच्छक्तित्रयसमन्वितात् । पञ्चवक्त्राद्दशभुजात्साक्षात्सकलनिष्कलात् ॥२६॥
तस्मादपि परादृबिंदोरर्धेंदोश्च ततः परात् । ततः परान्निशाधीशान्नादाख्याच्च ततः परात् ॥२७॥
ततः परात्सुषुम्नेशाद्ब्रह्मरन्ध्रेश्वरादपि । ततः परस्माच्छक्तेश्च परस्ताच्छिवतत्त्वतः ॥२८॥
परमं कारणं साक्षात्स्वयं निष्कारणं शिवम् । कारणानां च धातारं ध्यातारां ध्येयमव्ययम् ॥२९॥
परमाकाशमध्यस्थं परमात्मोपरि स्थितं । सर्वैश्वर्येण संपन्नं सर्वेश्वरमनीश्वरम् ॥३०॥
ऐश्वर्याच्चापि मायेयादशुद्धान्मानुषादिकात् । अपराच्च परात्त्याज्यादधिशुद्धाध्वगोचरात् ॥३१॥
तत्पराच्छुद्धविद्याद्यादुन्मनान्तात्परात्परात् । परमं परमैश्वर्यमुन्मनाद्यमनादि च ॥३२॥
अपारमपराधीनं निरस्तातिशयं स्थिरम् । इत्थमर्थैर्दशविधैरियमाथर्वणी श्रुतिः ॥३३॥
यस्माद्गरीयसी तस्माद्विश्वं व्याप्तमथर्वणात् । ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते ॥३४॥
येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः । यजुर्वेदोऽवदत्तद्वत्स्वप्नावस्था मयोच्यते ॥३५॥
भोग्यात्मना परिणता विद्यावेद्या यतो मयि । साम चाह सुषुप्त्याख्यमेवं सर्वं मयोच्यते ॥३६॥
ममार्थेन शिवेनेदं तामसेनाभिधीयते । अथर्वाह तुरायाख्यं तुरीयातीतमेव च ॥३७॥
मयाभिधीयते तस्मादध्वातीतपदोस्म्यहम् । अध्वात्मकं तु त्रितयं शिवविद्यात्मसंज्ञितम् ॥३८॥
तत्त्रैगुण्यं त्रयीसाध्यं संशोध्यं च पदैषिणा । अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम् ॥३९॥
तदतीतं च नैर्गुण्यादध्वनोस्य विशोधकम् । द्वयोः प्रमापको नादो नदान्तश्च मदात्मकः ॥४०॥
तस्मान्ममार्थस्वातंत्र्यात्प्रधानः परमेश्वरः । यदस्ति वस्तु तत्सर्वं गुणप्रधान्ययोगतः ॥४१॥
समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते । सवार्थवाचकं तस्मादेकं ब्रह्मैतदक्षरम् ॥४२॥
तेनोमिति जगत्कृत्स्नं कुरुते प्रथमं शिवः । शिवो हि प्रणवो ह्येष प्रणवो हि शिवः स्मृतः ॥४३॥
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः । चिन्तया रहितो रुद्रो वाचोयन्मनसा सह ॥४४॥
अप्राप्य तन्निवर्तंते वाच्यस्त्वेकाक्षरेण सः । एकाक्षरादकाराख्यादात्मा ब्रह्माभिधीयते ॥४५॥
एकाक्षरादुकाराख्याद्द्विधा विष्णुरुदीर्यते । एकाक्षरान्मकाराख्याच्छिवो रुद्र उदाहृतः ॥४६॥
दक्षिणाङ्गान्महेशस्य जातो ब्रह्मात्मसंज्ञिकः । वामाङ्गादभवद्विष्णुस्ततो विद्येति संज्ञितः ॥४७॥
हृदयान्नीलरुद्रो भूच्छिवस्य शिवसंज्ञिकः । सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः ॥४८॥
संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः । तस्मात्त्रयस्ते कथ्यन्ते जगतः कारणानि च ॥४९॥
कारणत्रयहेतुश्च शिवः परमकारणम् । अर्थमेतमविज्ञाय रजसा बद्धवैरयोः ॥५०॥
युवयोः प्रतिबोधाय मध्ये लिङ्गमुपस्थितम् । एवमोमिति मां प्राहुर्यदिहोक्तमथर्वणा ॥५१॥
ऋचो यजूंषि सामानि शाखाश्चान्याः सहस्रशः । वेदेष्वेवं स्वयं वक्त्रैर्व्यक्तमित्यवदत्स्वपि ॥५२॥
स्वप्नानुभूतमिव तत्ताभ्यां नाध्यवसीयते । तयोस्तत्र प्रबोधाय तमोपनयनाय च ॥५३॥
लिङ्गेपि मुद्रितं सर्वं यथा वेदैरुदाहृतम् । तद्दृष्ट्वा मुदितं लिङ्गे प्रसादाल्लिंगिनस्तदा ॥५४॥
प्रशान्तमनसौ देवौ प्रबुद्धौ संबभूवतुः । उत्पत्तिं विलयं चैव यथात्म्यं च षडध्वनाम् ॥५५॥
ततः परतरं धाम धामवंतं च पूरुषम् । निरुत्तरतरं ब्रह्म निष्कलं शिवमीश्वरम् ॥५६॥
पशुपाशमयस्यास्य प्रपञ्चस्य सदा पतिम् । अकुतोभयमत्यन्तमवृद्धिक्षयमव्ययम् ॥५७॥
वाह्यमाभ्यन्तरं व्याप्तं वाह्याभ्यन्तरवर्जितम् । निरस्तातिशयं शश्वद्विश्वलोकविलक्षणम् ॥५८॥
अलक्षणमनिर्देश्यमवाङ्मनसगोचरम् । प्रकाशैकरसं शान्तं प्रसन्नं सततोदितम् ॥५९॥
सर्वकल्याणनिलयं शक्त्या तादृशयान्वितम् । ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा ॥६०॥
रचयित्वांजलिं मूर्ध्नि भीतौ तौ वाचमूचतुः ।

ब्रह्मोवाच ॥

अज्ञो वाह्यभिज्ञो वा त्वयादौ देव निर्मितः ॥६१॥
ईदृशीं भ्रांतिमापन्न इति कोऽत्रापराध्यति । आस्तां ममेदमज्ञानं त्वयि सन्निहिते प्रभो ॥६२॥

निर्भयः कोऽभिभाषेत कृत्यं स्वस्य परस्य वा । आवयोर्देवदेवस्य विवादोऽपि हि शोभनः ॥६३॥
पादप्रणामफलदो नाथस्य भवतो यतः ।
विष्णुरुवाच ॥
स्तोतुं देव न वागस्ति महिम्नः सदृशी तव ॥६४॥
प्रभोरग्रे विधेयानां तूष्णींभावो व्यतिक्रमः । किमत्र संघटेत्कृत्यमित्येवावसरोचितम् ॥६५॥
अजानन्नपि यत्किंचित्प्रलप्य त्वां नतोऽस्म्यहम् । कारणत्वं त्वया दत्तं विस्मृतं तव मायया ॥६६॥
मोहितोऽहङ्कृतश्चापि पुनरेवास्मि शासितः । विज्ञापितैः किं बहुभिर्भीतोस्मि भृशमीश्वर ॥६७॥
यतोऽहमपरिच्छेद्यं त्वां परिच्छेत्तुमुद्यतः । त्वामुशंति महादेवं भीतानामार्तिनाशनम् ॥६८॥
अतो व्यतिक्रमं मेऽद्य क्षन्तुमर्हसि शंकर । इति विज्ञापितस्ताभ्यामीश्वराभ्यां महेश्वरः ॥६९॥
प्रीतोऽनुगृह्य तौ देवौ स्मितपूर्वमभाषत ।
ईश्वर उवाच ॥
वत्सवत्स विधे विष्णो मायया मम मोहितौ ॥७०॥
युवां प्रभुत्वेऽहङ्कृत्य बुद्धवैरो परस्परम् । विवादं युद्धपर्यन्तं कृत्वा नोपरतौ किल ॥७१॥
ततश्छिन्ना प्रजासृष्टिर्जगत्कारणभूतयोः । अज्ञानमानप्रभवाद्वैमत्याद्युवयोरपि ॥७२॥
तन्निवर्तयितुं युष्मद्दर्पमोहौ मयैव तु । एवं निवारितावद्यलिङ्गाविर्भावलीलया ॥७३॥
तस्माद्भूयो विवादं च व्रीडां चोत्सृज्य कृत्स्नशः । यथास्वं कर्म कुर्यातां भवंतौ वीतमत्सरौ ॥७४॥
पुरा ममाज्ञया सार्धं समस्तज्ञानसंहिताः । युवाभ्यां हि मया दत्ता कारणत्वप्रसिद्धये ॥७५॥
मन्त्ररत्नं च सूत्राख्यं पञ्चाक्षरमयं परम् । मयोपदिष्टं सर्वं तद्युवयोरद्य विस्मृतम् ॥७६॥
ददामि च पुनः सर्वं यथापूर्वं ममाज्ञया । यतो विना युवां तेन न क्षमौ सृष्टिरक्षणे ॥७७॥
एवमुक्त्वा महादेवो नारायणपितामहौ । मन्त्रराजं ददौ ताभ्यां ज्ञानसंहितया सह ॥७८॥
तौ लब्ध्वा महतीं दिव्यामाज्ञां माहेश्वरीं पराम् । महार्थं मन्त्ररत्नं च तथैव सकलाः कलाः ॥७९॥
दण्डवत्प्रणतिं कृत्वा देवदेवस्य पादयोः । अतिष्ठतां वीतभयावानंदास्तिमितौ तदा ॥८०॥
एतस्मिन्नन्तरे चित्रमिंद्रजालवदैश्वरम् । लिङ्गं क्वापि तिरोभूतं न ताभ्यामुपलभ्यते ॥८१॥
ततो विलप्य हाहेति सद्यःप्रणयभंगतः । किमसत्यमिदं वृत्तमिति चोक्त्वा परस्परम् ॥८२॥
अचिन्त्यवैभवं शम्भोर्विचिन्त्य च गतव्यथौ । अभ्युपेत्य परां मैत्रीमालिङ्ग्य च परस्परम् ॥८३॥
जगद्व्यापारमुद्दिश्य जग्मतुर्देवपुंगवौ । ततः प्रभृति शक्राद्याः सर्व एव सुरासुराः ॥८४॥
ऋषयश्च नरा नागा नार्यश्चापि विधानतः । लिङ्गप्रतिष्ठा कुर्वन्ति लिङ्गे तं पूजयन्ति च ॥८५॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे हरिविधिमोहनिवारणं नाम पञ्चत्रिंशोऽध्यायः ॥३५॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,८११+८५=२३,८९६



## ॥ अथ षड्त्रिंशोऽध्यायः ॥

श्रीकृष्ण उवाच ॥
भगवञ्छ्रोतुमिच्छामि प्रतिष्ठाविधिमुत्तमम् । लिङ्गस्यापि च बेरस्य शिवेन विहितं यथा ॥१॥
उपमन्युरुवाच
अनात्मप्रतिकूले तु दिवसे शुक्लपक्षके । शिवशास्त्रोक्तमार्गेण कुर्याल्लिंगं प्रमाणवत् ॥२॥
स्वीकृत्याथ शुभस्थानं भूपरीक्षां विधाय च । दशोपचारान्कुर्वीत लक्षणोद्धारपूर्वकान् ॥३॥
तेषां दशोपचाराणां पूर्वं पूज्य विनायकम् । स्थानशुद्ध्यादिकं कृत्वालिङ्गं स्नानालयं नयेत् ॥४॥
शलाकया कांचनया कुंकुमादिरसाक्तया । लक्षितं लक्षणं शिल्पशास्त्रेण विलिखेत्ततः ॥५॥
अष्टमृत्सलिलैर्वाथ पञ्चमृत्सलिलैस्तथा । लिङ्गं पिंडिकया सार्धं पञ्चगव्यैश्च शोधयेत् ॥६॥

सवेदिकं समभ्यर्च्य दिव्याद्यं तु जलाशयम् । नीत्वाधिवासयेत्तत्र लिङ्गं पिंडिकया सह ॥७॥
अधिवासालये शुद्धे सर्वशोभासमन्विते । सतोरणे सावरणे दर्भमालासमावृते ॥८॥
दिग्गजाष्टकसंपन्ने दिक्पालाष्टघटान्विते । अष्टमङ्गलकैर्युक्ते कृतदिक्पालकार्चिते ॥९॥
तेजसं दारवं वापि कृत्वा पद्मासनांकितम् । विन्यसेन्मध्यतस्तत्र विपुलं पीठकालयम् ॥१०॥
द्वारपालान्समभ्यर्च्य भद्रादींश्चतुरःक्रमात् । समुद्रश्च विभद्रश्च सुनंदश्च विनंदकः ॥११॥
स्नापयित्वा समभ्यर्च्य लिङ्गं वेदिकया सह । सकूर्चाभ्यां तु वस्त्राभ्यां समावेष्ट्यं समंततः ॥१२॥
प्रापय्य शनकैस्तोयं पीठिकोपरि शाययेत् । प्राक्शिरस्कमधःसूत्रं पिंडिकां चास्य पश्चिमे ॥१३॥
सर्वमङ्गलसंयुक्तं लिङ्गं तत्राधिवासयेत् । पञ्चरात्रं त्रिरात्रं वाप्येकरात्रमथापि वा ॥१४॥
विसृज्य पूजितं तत्र शोधयित्वा च पूर्ववत् । संपूज्योत्सवमार्गेण शयनालयमानयेत् ॥१५॥
तत्रापि शयनस्थानं कुर्यान्मण्डलमध्यतः । शुद्धैर्जलैः स्नापयित्वा लिङ्गमभ्यर्चयेत्क्रमात् ॥१६॥
ऐशान्यां पद्ममालिख्य शुद्धलिप्ते महीतले । शिवकुम्भं शोधयित्वा तत्रावाह्य शिवं यजेत् ॥१७॥
वेदीमध्ये सितं पद्मं परिकल्प्य विधानतः । तस्य पश्चिमतश्चापि चंडिकापद्ममालिखेत् ॥१८॥
क्षौमाद्यैर्वाहतैर्वस्त्रैः पुष्पैर्दर्भैरथापि वा । प्रकल्प्य शयनं तस्मिन्हेमपुष्पं विनिक्षिपेत् ॥१९॥
तत्र लिङ्गं समानीय सर्वमङ्गलनिःस्वनैः । रक्तेन वस्त्रयुग्मेन सकूर्चेन समंततः ॥२०॥
सह पिंडिकयावेष्ट्य शाययेच्च यथा पुरा । पुरस्तात्पद्ममालिख्य तद्दलेषु यथाक्रमम् ॥२१॥
विद्येशकलशान्न्यस्येन्मध्ये शैवीं च वर्धनीम् । परीत्य पद्मत्रितयं जुहुयुर्द्विजसत्तमाः ॥२२॥
ते चाष्टमूर्तयः कल्प्याः पूर्वादिपरितः स्थिताः । चत्वारश्चाथ वा दिक्षु स्वध्येतारस्सजापकाः ॥२३॥
जुहुयुस्ते विरंच्याद्याश्चतस्रो मूर्तयः स्मृताः । दैशिकः प्रथमं तेषामैशान्यां पश्चिमेऽथ वा ॥२४॥
प्रधानहोमं कुर्वीत सप्तद्रव्यैर्यथाक्रमम् । आचार्यात्पादमर्धं वा जुहुयुश्चापरे द्विजाः ॥२५॥
प्रधानमेकमेवात्र जुहुयादथ वा गुरुः । पूर्वं पूर्णाहुतिं हुत्वा घृतेनाष्टोत्तरं शतम् ॥२६॥
मूर्ध्नि मूलेन लिङ्गस्य शिवहस्तं प्रविन्यसेत् । शतमर्धं तदर्धं वा क्रमाद्द्रव्यैश्च सप्तभिः ॥२७॥
हुत्वाहुत्वा स्पृशेल्लिंगं वेदिकां च पुनः पुनः । पूर्णाहुतिं ततो हुत्वा क्रमाद्द्याच्च दक्षिणाम् ॥२८॥
आचार्यात्पादमर्धं वा होतृणां स्थपतेरपि । तदर्धं देयमन्येभ्यः सदस्येभ्यश्च शक्तितः ॥२९॥
ततः श्वभ्रे वृषं हैमं कूर्चं वापि निवेश्य च । मृदंभसा पञ्चगव्यैः पुनः शुद्धजलेन च ॥३०॥
शोधितां चंदनालिप्तां श्वभ्रे ब्रह्मशिलां क्षिपेत् । करन्यासं ततः कृत्वा नवभिः शक्तिनामभिः ॥३१॥
हरितालादिधातूंश्च बीजगन्धौषधैरपि । शिवशास्त्रोक्तविधिना क्षिपेद्ब्रह्मशिलोपरि ॥३२॥
प्रतिलिङ्गं तु संस्थाप्य क्षीरं वृक्षसमुद्भवम् । स्थितं बुद्ध्वा तदुत्सृज्य लिङ्गं ब्रह्मशिलोपरि ॥३३॥
प्रागुदक्प्रवरां किञ्चित्स्थापयेन्मूलविद्यया । पिंडिकां चाथ संयोज्य शाक्तं मूलमनुस्मरन् ॥३४॥
बन्धनं बन्धकद्रव्यैः कृत्वा स्थानं विशोध्य च । दत्त्वा चार्घ्यं च पुष्पाणि कुर्युर्यवनिकां पुनः ॥३५॥
यथायोग्यं निषेकादि लिङ्गस्य पुरतस्तदा । आनीय शयनस्थानात्कलशान्विन्यसेत्क्रमात् ॥३६॥
महापूजामथारभ्य संपूज्य कलशान्दश । शिवमन्त्रमनुस्मृत्य शिवकुम्भजलान्तरे ॥३७॥
अङ्गुष्ठानामिकायोगादादाय तमुदीरयेत् । न्यसेदीशानभागस्य मध्ये लिङ्गस्य मन्त्रवित् ॥३८॥
शक्तिं न्यसेत्तथा विद्यां विद्येशांश्च यथाक्रमम् । लिङ्गमूले शिवजलैस्ततो लिङ्गं निषेचयेत् ॥३९॥
वर्धन्यां पिंडिकालिङ्गं विद्येशकलशैः पुनः । अभिषिच्यासनं पश्चादाधाराद्यं प्रकल्पयेत् ॥४०॥
कृत्वा पञ्चकलान्यासं दीप्तं लिङ्गमनुस्मरेत् । आवाह्येच्छिवौ साक्षात्प्राञ्जलिः प्रागुदङ्मुखः ॥४१॥
वृषाधिराजमारुह्य विमानं वा नभस्तलात् । अलंकृतं सहायान्तं देव्या देवमनुस्मरन् ॥४२॥
सर्वाभरणशोभाढ्यं सर्वमङ्गलनिस्वनैः । ब्रह्मविष्णुमहेशार्कशक्राद्यैर्देवदानवैः ॥४३॥
आनंदक्लिन्नसर्वाङ्गैर्विन्यस्ताञ्जलिमस्तकैः । स्तुवद्भिरेव नृत्यद्भिर्नामद्भिरभितो वृतम् ॥४४॥
ततः पञ्चोपचारांश्च कृत्वा पूजां समापयेत् । नातः परतरः कश्चिद्विधिः पञ्चोपचारकात् ॥४५॥
प्रतिष्ठां लिङ्गवत्कुर्यात्प्रतिमास्वपि सर्वतः । लक्षणोद्धारसमये कार्यं नयनमोचनम् ॥४६॥
जलाधिवासे शयने शाययेत्तान्त्वधोमुखीम् । कुम्भोदशायितां मन्त्रैर्हृदि तां सन्नियोजयेत् ॥४७॥

कृतालयां परामाहुः प्रतिष्ठामकृतालयात् । शक्तः कृतालयः पश्चात्प्रतिष्ठाविधिमाचरेत् ॥४८॥
अशक्तश्चेत्प्रतिष्ठाप्य लिङ्गं बेरमथापि वा । शक्तेरनुगुणं पश्चात्प्रकुर्वीत शिवालयम् ॥४९॥
गृहार्चां च पुनर्वक्ष्ये प्रतिष्ठाविधिमुत्तमम् । कृत्वा कनीयसंबेरं लिङ्गं वा लक्षणान्वितम् ॥५०॥
अयने चोत्तरे प्राप्ते शुक्लपक्षे शुभे दिने । दे वीं कृत्वा शुभे देशे तत्राब्जं पूर्ववल्लिखेत् ॥५१॥
विकीर्य पत्रपुष्पाद्यैर्मध्ये कुम्भं निधाय च । परितस्तस्य चतुरः कलशान् दिक्षु विन्यसेत् ॥५२॥
पञ्च ब्रह्माणि तद्बीजैस्तेषु पञ्चसु पञ्चभिः । न्यस्य संपूज्य मुद्रादि दर्शयित्वाभिरक्ष्य च ॥५३॥
विशोध्य लिङ्गं बेरं वा मृत्तोयाद्यैर्यथा पुरा । स्थापयेत्पुष्पसंछन्नमुत्तरस्थे वरासने ॥५४॥
निधाय पुष्पं शिरसि प्रोक्षयेत्प्रोक्षणीजलैः । समभ्यर्च्य पुनः पुष्पैर्जयशब्दादिपूर्वकम् ॥५५॥
कुम्भैरीशानविद्यान्तैः स्नापयेन्मूलविद्यया । ततः पञ्चकलान्यासं कृत्वा पूजां च पूर्ववत् ॥५६॥
नित्यमाराधयेत्तत्र देव्या देवं त्रिलोचनम् । एकमेवाथ वा कुम्भं मूर्तिमन्त्रसमन्वितम् ॥५७॥
न्यस्य पद्मान्तरे सर्वं शेषं पूर्ववदाचरेत् । अत्यन्तोपहतं लिङ्गं विशोध्य स्थापयेत्पुनः ॥५८॥
संप्रोक्षयेदुपहतमनागुपहतं यजेत् । लिङ्गानि बाणसंज्ञानि स्थापनीयानि वा न वा ॥५९॥
तानि पूर्वं शिवेनैव संस्कृतानि यतस्ततः । शेषाणि स्थापनीयानि यानि दृष्टानि बाणवत् ॥६०॥
स्वयमुद्भूतलिङ्गे च दिव्ये चार्षे तथैव च । अपीठे पीठमावेश्य कृत्वा संप्रोक्षणं विधिम् ॥६१॥
यजेत्तत्र शिवं तेषां प्रतिष्ठा न विधीयते । दग्धं श्लथं क्षताङ्गं च क्षिपेल्लिंगं जलाशये ॥६२॥
संधानयोग्यं संधाय प्रतिष्ठाविधिमाचरेत् । बेराद्वा विकलाल्लिंगाद्देवपूजापुरस्सरम् ॥६३॥
उद्वास्य हृदि संधानं त्यागं वा युक्तमाचरेत् । एकाहपूजाविहतौ कुर्याद्द्विगुणमर्चनम् ॥६४॥
द्विरात्रे च महापूजां संप्रोक्षणमतः परम् । मासादूर्ध्वमनेकाहं पूजा यदि विहन्यते ॥६५॥
प्रतिष्ठा प्रोच्यते कैश्चित्कैश्चित्संप्रोक्षणक्रमः । संप्रोक्षणे तु लिङ्गादेर्देवमुद्वास्य पूर्ववत् ॥६६॥
अष्टपञ्चक्रमेणैव स्नापयित्वा मृदंभसा । गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ॥६७॥
प्रोक्षयेत्प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् । सपुष्पं सकुशं पाणिं न्यस्य लिङ्गस्य मस्तके ॥६८॥
पञ्चवारं जपेन्मूलमष्टोत्तरशतं ततः । ततो मूलेन मूर्धादिपीठान्तं संस्पृशेदपि ॥६९॥
पूजां च महतीं कुर्याद्देवमावाह्य पूर्ववत् । अलब्धे स्थापिते लिङ्गे शिवस्थाने जलेऽथ वा ॥
वह्नौ रवौ तथा व्योम्नि भगवंतं शिवं यजेत् ॥७०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे प्रतिष्ठाविधिवर्णनं नाम षट्त्रिंशोऽध्यायः ॥३६॥
आदितः श्लोकानां समष्ट्यङ्काः-२३,८९६+७०=२३,९६६



## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

श्रीकृष्ण उवाच ॥
ज्ञाने क्रियायां चर्यायां सारमुद्धृत्य संग्रहात् । उक्तं भगवता सर्वं श्रुतं श्रुतिसमं मया ॥१॥
इदानीं श्रोतुमिच्छामि योगं परमदुर्लभम् । साधिकारं च साङ्गं च सविधिं सप्रयोजनम् ॥२॥
यद्यस्ति मरणं पूर्वं योगाद्यनुपमर्दतः । सद्यः साधयितुं शक्यं येन स्यान्नात्महानरः ॥३॥
तच्च तत्कारणं चैव तत्कालकरणानि च । तद्भेदतारतम्यं च वक्तुमर्हसि तत्त्वतः ॥४॥
उपमन्युरुवाच ॥
स्थाने पृष्टं त्वया कृष्ण सर्वप्रश्नार्थवेदिना । ततः क्रमेण तत्सर्वं वक्ष्ये शृणु समाहितः ॥५॥
निरुद्धवृत्त्यन्तरस्यं शिवे चित्तस्य निश्चला । या वृत्तिः स समासेन योगः स खलु पञ्चधा ॥६॥
मन्त्रयोगःस्पर्शयोगो भावयोगस्तथापरः । अभावयोगस्सर्वेभ्यो महायोगः परो मतः ॥७॥
मन्त्राभ्यासवशेनैव मन्त्रवाच्यार्थगोचरः । अव्याक्षेपा मनोवृत्तिर्मंत्रयोग उदाहृतः ॥८॥
प्राणायाममुखा सैव स्पर्शो योगोभिधीयते । स मन्त्रस्पर्शनिर्मुक्तो भावयोगः प्रकीर्तितः ॥९॥
विलीनावयवं विश्वं रूपं संभाव्यते यतः । अभावयोगः संप्रोक्तोऽनाभासाद्वस्तुनः सतः ॥१०॥

शिवस्वभाव एवैकश्चिंत्यते निरुपाधिकः । यथा शैवमनोवृत्तिर्महायोग इहोच्यते ॥११॥
दृष्टे तथानुश्रविके विरक्तं विषये मनः । यस्य तस्याधिकारोस्ति योगे नान्यस्य कस्यचित् ॥१२॥
विषयद्वयदोषाणां गुणानामीश्वरस्य च । दर्शनादेव सततं विरक्तं जायते मनः ॥१३॥
अष्टाङ्गो वा षडंगो वा सर्वयोगः समासतः । यमश्च नियमश्चैव स्वस्तिकाद्यं तथासनम् ॥१४॥
प्राणायामः प्रत्याहारो धारणा ध्यानमेव च । समाधिरिति योगाङ्गान्यष्टावुक्तानि सूरिभिः ॥१५॥
आसनं प्राणसंरोधः प्रत्याहारोथ धारणा । ध्यानं समाधिर्योगस्य षडंगानि समासतः ॥१६॥
पृथग्लक्षणमेतेषां शिवशास्त्रे समीरितम् । शिवागमेषु चान्येषु विशेषात्कामिकादिषु ॥१७॥
योगशास्त्रेष्वपि तथा पुराणेष्वपि केषु च । अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहः ॥१८॥
यम इत्युच्यते सद्भिः पञ्चावयवयोगतः । शौचं तुष्टिस्तपश्चैव जपः प्रणिधिरेव च ॥१९॥
इति पञ्चप्रभेदस्स्यान्नियमः स्वांशभेदतः । स्वस्तिकं पद्ममध्येंदुं वीरं योगं प्रसाधितम् ॥२०॥
पर्यंकं च यथेष्टं च प्रोक्तमासनमष्टधा । प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् ॥२१॥
तद्रेचकं पूरकं च कुम्भकं च त्रिधोच्यते । नासिकापुटमङ्गुल्या पीडयैकमपरेण तु ॥२२॥
औदरं रेचयेद्वायुं तथायं रेचकः स्मृतः । बाह्येन मरुता देहं दृतिवत्परिपूरयेत् ॥२३॥
नासापुटेनापरेण पूरणात्पूरकं मतम् । न मुंचति न गृह्णाति वायुमंतर्बहिः स्थितम् ॥२४॥
संपूर्णं कुम्भवत्तिष्ठेदचलः स तु कुम्भक । रेचकाद्यं त्रयमिदं न द्रुतं न विलंबितम् ॥२५॥
तद्यतः क्रमयोगेन त्वभ्यसेद्योगसाधकः । रेचकादिषु योभ्यासो नाडीशोधनपूर्वकः ॥२६॥
स्वेच्छोत्क्रमणपर्यंतः प्रोक्तो योगानुशासने । कन्यकादिक्रमवशात्प्राणायामनिरोधनम् ॥२७॥
तच्चतुर्धोपदिष्टं स्यान्मात्रागुणविभागतः । कन्यकस्तु चतुर्धा स्यात्स च द्वादशमात्रकः ॥२८॥
मध्यमस्तु द्विरुद्घातश्चतुर्विंशतिमात्रकः । उत्तमस्तु त्रिरुद्घातः षड्विंशन्मात्रकः परः ॥२९॥
स्वेदकंपादिजनकः प्राणायामस्तदुत्तरः । आनंदोद्भवरोमांचनेत्राश्रूणां विमोचनम् ॥३०॥
जल्पभ्रमणमूर्छाद्यं जायते योगिनः परम् । जानुं प्रदक्षिणीकृत्य न द्रुतं न विलंबितम् ॥३१॥
अङ्गुलीस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता । मात्राक्रमेण विज्ञेयाश्चोद्घातक्रमयोगतः ॥३२॥
नाडीविशुद्धिपूर्वं तु प्राणायामं समाचरेत् । अगर्भश्च सगर्भश्च प्राणायामो द्विधा स्मृतः ॥३३॥
जपं ध्यानं विनागर्भः सगर्भस्तत्समन्वयात् । अगर्भाद्गर्भसंयुक्तः प्राणायामःशताधिकः ॥३४॥
तस्मात्सगर्भं कुर्वन्ति योगिनः प्राणसंयमम् । प्राणस्य विजयादेव जीयन्ते देह आयवः (दश वायव) ॥३४॥
प्राणोऽपानः समानश्च ह्युदानो व्यान एव च । नागः कूर्मश्च कृकलो देवदत्तो धनंजयः ॥३५॥
प्रयाणं कुरुते यस्मात्तस्मात्प्राणोऽभिधीयते । अवाङ्नयत्यपानाख्यो यदाहारादि भुज्यते ॥३६॥
व्यानो व्यानशयत्यंगान्यशेषाणि विवर्धयन् । उद्वेजयति मर्माणीत्युदानो वायुरीरितः ॥३७॥
समं नयति सर्वाङ्गं समानस्तेन गीयते । उद्गारे नाग आख्यातः कूर्म उन्मीलने स्थितः ॥३८॥
कृकलः क्षवथौ ज्ञेयो देवदत्तो विजृंभणे । न जहाति मृतं चापि सर्वव्यापी धनंजयः ॥३९॥
क्रमेणाभ्यस्यमानोयं प्राणायामप्रमाणवान् । निर्दहत्यखिलं दोषं कर्तुर्देहं च रक्षति ॥४०॥
प्राणे तु विजिते सम्यक् तच्चिह्नान्युपलक्षयेत् । विण्मूत्रश्लेष्मणां तावदल्पभावः प्रजायते ॥४१॥
बहुभोजनसामर्थ्यं चिरादुच्छ्वासनं तथा । लघुत्वं शीघ्रगामित्वमुत्साहः स्वरसौष्ठवम् ॥४२॥
सर्वरोगक्षयश्चैव बलं तेजः सुरूपता । धृतिर्मेधा युवत्वं च स्थिरता च प्रसन्नता ॥४३॥
तपांसि पापक्षयता यज्ञदानव्रतादयः । प्राणायामस्य तस्यैते कलां नार्हन्ति षोडशीम् ॥४४॥
इन्द्रियाणि प्रसक्तानि यथास्वं विषयेष्विह । आहत्य यन्निगृह्णाति स प्रत्याहार उच्यते ॥४५॥
नमःपूर्वाणींद्रियाणि स्वर्गं नरकमेव च । निगृहीतनिसृष्टानि स्वर्गाय नरकाय च ॥४६॥
तस्मात्सुखार्थी मतिमाञ्ज्ञानवैराग्यमास्थितः । इंद्रियाश्वान्निगृह्याशु स्वात्मनात्मानमुद्धरेत् ॥४७॥
धारणा नाम चित्तस्य स्थानबन्धस्समासतः । स्थानं च शिव एवैको नान्यद्दोषत्रयं यतः ॥४८॥
कालं कंचावधीकृत्य स्थानेऽवस्थापितं मनः । न तु प्रच्यवते लक्ष्याद्धारणा स्यान्न चान्यथा ॥४९॥
मनसः प्रथमं स्थैर्यं धारणातः प्रजायते । तस्माद्धीरं मनः कुर्याद्धारणाभ्यासयोगतः ॥५०॥

ध्यै चिन्तायां स्मृतो धातुः शिवचिन्ता मुहुर्मुहुः । अव्याक्षिप्तेन मनसा ध्यानं नाम तदुच्यते ॥५१॥
ध्येयावस्थितचित्तस्य सदृशः प्रत्ययश्च यः । प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते ॥५२॥
सर्वमन्यत्परित्यज्य शिव एव शिवंकरः । परो ध्येयोऽधिदेवेशः समाप्ताथर्वणी श्रुतिः ॥५३॥
तथा शिवा परा ध्येया सर्वभूतगतौ शिवौ । तौ श्रुतौ स्मृतिशास्त्रेभ्यः सर्वगौ सर्वदोदितौ ॥५४॥
सर्वज्ञौ सततं ध्येयौ नानारूपविभेदतः । विमुक्तिः प्रत्ययः पूर्वः प्रत्ययश्चाणिमादिकम् ॥५५॥
इत्येतद्द्विविधं ज्ञेयं ध्यानस्यास्य प्रयोजनम् । ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनम् ॥५६॥
एतच्चतुष्टयं ज्ञात्वा योगं युञ्जीत योगवित् । ज्ञानवैराग्यसंपन्नः श्रद्दधानः क्षमान्वितः ॥५७॥
निर्ममश्च सदोत्साही ध्यातेत्थं पुरुषः स्मृतः । जपाच्छान्तः पुनर्ध्यायेद्ध्यानाच्छान्तः पुनर्जपेत् ॥५८॥
जपध्यनाभियुक्तस्य क्षिप्रं योगः प्रसिद्ध्यति । धारणा द्वादशायामा ध्यानं द्वादशधारणम् ॥५९॥
ध्यानद्वादशकं यावत्समाधिरभिधीयते । समाधिर्न्नाम योगाङ्गमन्तिमं परिकीर्तितम् ॥६०॥
समाधिना च सर्वत्र प्रज्ञालोकः प्रवर्तते । यदर्थमात्रनिर्भासं स्तिमितो दधिवत्स्थितम् ॥६१॥
स्वरूपशून्यवद्भानं समाधिरभिधीयते । ध्येये मनः समावेश्य पश्येदपि च सुस्थिरम् ॥६२॥
निर्वाणानलवद्योगी समाधिस्थः प्रगीयते । न शृणोति न चाघ्राति न जल्पति न पश्यति ॥६३॥
न च स्पर्शं विजानाति न संकल्पयते मनः । नवाभिमन्यते किञ्चिद्बध्यते न च काष्टवत् ॥६४॥
एवं शिवे विलीनात्मा समाधिस्थ इहोच्यते । यथा दीपो निवातस्थः स्पन्दते न कदाचन ॥६५॥
तथा समाधिनिष्ठोऽपि तस्मान्न विचलेत्सुधीः । एवमभ्यसतश्चारं योगिनो योगमुत्तमम् ॥
तदन्तराया नश्यन्ति विघ्नाः सर्वे शनैःशनैः ॥६६॥

इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां वायुनैमिषेयर्षिसंवादे उत्तरखण्डे योगगतिवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥३७॥

आदितः श्लोकानां समष्ट्यङ्काः-२३,९६६+६६=२४,०३२



## ॥ अथाष्टात्रिंशोऽध्यायः ॥

उपमन्युरुवाच ॥

आलस्यं व्याधयस्तीव्राः प्रमादः स्थानसंशयः । अनवस्थितचित्तत्वमश्रद्धा भ्रांतिदर्शनम् ॥१॥
दुःखानि दौर्मनस्यं च विषयेषु च लोलता । दशैते युञ्जतां पुंसामन्तरायाः प्रकीर्तिताः ॥२॥
आलस्यमलसत्त्वं तु योगिनां देहचेतनोः । धातुवैषम्यजा दोषा व्याधयः कर्मदोषजाः ॥३॥
प्रमादो नाम योगस्य साधना नाम भावना । इदं वेत्युभयाक्रान्तं विज्ञानं स्थानसंशयः ॥४॥
अप्रतिष्ठा हि मनसस्त्वनवस्थितिरुच्यते । अश्रद्धा भावरहिता वृत्तिर्वै योगवर्त्मनि ॥५॥
विपर्यस्ता मतिर्या सा भ्रांतिरित्यभिधीयते । दुःखमज्ञानजं पुंसां चित्तस्याध्यात्मिकं विदुः ॥६॥
आधिभौतिकमङ्गोत्थं यच्च दुःखं पुरा कृतैः । आधिदैविकमाख्यातमश्नयस्त्रविषादिकम् ॥७॥
इच्छाविघातजं मोक्षं दौर्मनस्यं प्रचक्षते । विषयेषु विचित्रेषु विभ्रमस्तत्र लोलता ॥८॥
शान्तेष्वेतेषु विघ्नेषु योगासक्तस्य योगिनः । उपसर्गाः प्रवर्तंते दिव्यास्ते सिद्धिसूचकाः ॥९॥
प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः । उपसर्गाः षडित्येते व्यये योगस्य सिद्धयः ॥१०॥
सूक्ष्मे व्यवहितेऽतीते विप्रकृष्टे त्वनागते । प्रतिभा कथ्यते योऽर्थे प्रतिभासो यथातथम् ॥११॥
श्रवणं सर्वशब्दानां श्रवणे चाप्रयत्नतः । वार्त्ता वार्त्तासु विज्ञानं सर्वेषामेव देहिनाम् ॥१२॥
दर्शनं नाम दिव्यानां दर्शनं चाप्रयत्नतः । तथास्वादश्च दिव्येषु रसेष्वास्वाद उच्यते ॥१३॥
स्पर्शनाधिगमस्तद्वद्वेदना नाम विश्रुता । गन्धादीनां च दिव्यानामाब्रह्मभुवनाधिपाः ॥१४॥
संतिष्ठन्ते च रत्नानि प्रयच्छंति बहूनि च । स्वच्छन्दमधुरा वाणी विविधास्यात्प्रवर्तते ॥१५॥
रसायनानि सर्वाणि दिव्याश्चौषधयस्तथा । सिध्यन्ति प्रणिपत्यैनं दिशंति सुरयोषितः ॥१६॥
योगसिद्ध्यैकदेशेऽपि दृष्टे मोक्षे भवेन्मतिः । दृष्टमेतन्मया यद्वत्तद्वन्मोक्षो भवेदिति ॥१७॥

कृशता स्थूलता बाल्यं वार्धक्यं चैव यौवनम् । नानाचातिस्वरूपं च चतुर्णां देहधारणम् ॥१८॥
पार्थिवांशं विना नित्यं सुरभिर्गन्धसंग्रहः । एवमष्टगुणं प्राहुः पैशाचं पार्थिवं पदम् ॥१९॥
जले निवसनं चैव भूम्यामेवं विनिर्गमः । इच्छेच्छक्तः स्वयं पातुं समुद्रमपि नातुरः ॥२०॥
यत्रेच्छति जगत्यस्मिंस्तत्रैव जलदर्शनम् । विना कुम्भादिकं पाणौ जलसञ्चयधारणम् ॥२१॥
यद्वस्तु विरसञ्चापि भोक्तुमिच्छति तत्क्षणात् । रसादिकं भवेच्चान्यत्त्रयाणां देहधारणम् ॥२२॥
निर्व्रणत्वं शरीरस्य पार्थिवैश्च समन्वितम् । तदिदं षोडशगुणमाप्यमैश्वर्यमद्भुतम् ॥२३॥
शरीरादग्निनिर्माणं तत्तापभयवर्जनम् । शक्तिर्जगदिदं दग्धुं यदीच्छेदप्रयत्नतः ॥२४॥
स्थापनं वानलस्याऽप्सु पाणौ पावकधारणम् । दग्धे सर्गे यथापूर्वं मुखे चान्नादिपाचनम् ॥२५॥
द्वाभ्यां देहविनिर्माणमाप्यैश्वर्यसमन्वितम् । एतच्चतुर्विंशतिधा तैजसं परिचक्षते ॥२६॥
मनोजवत्वं भूतानां क्षणादन्तःप्रवेशनम् । पर्वतादिमहाभारधारणञ्चाप्रयत्नतः ॥२७॥
गुरुत्वञ्च लघुत्वञ्च पाणावनिलधारणम् । अङ्गुल्यग्रनिपाताद्यैर्भूमेरपि च कम्पनम् ॥२८॥
एकेन देहनिष्पत्तिर्युक्तं भोगैश्च तैजसैः । द्वात्रिंशद्गुणमैश्वर्यं मारुतं कवयो विदुः ॥२९॥
छायाहीनविनिष्पत्तिरिन्द्रियाणामदर्शनम् । खेचरत्वं यथाकाममिन्द्रियार्थसमन्वयः ॥३०॥
आकाशलंघनं चैव स्वदेहे तन्निवेशनम् । आकाशपिण्डीकरणमशरीरत्वमेव च ॥३१॥
अनिलैश्वर्यसंयुक्तं चत्वारिंशद्गुणं महत् । ऐन्द्रमैश्वर्यमाख्यातमाम्बरं तत्प्रचक्षते ॥३२॥
यथाकामोपलब्धिश्च यथाकामविनिर्गमः । सर्वस्याभिभवश्चैव सर्वगुह्यार्थदर्शनम् ॥३३॥
कर्मानुरूपनिर्माणं वशित्वं प्रियदर्शनम् । संसारदर्शनं चैव भोगैरैन्द्रैस्समन्वितम् ॥३४॥
एतच्चांद्रमसैश्वर्यं मानसं गुणतोऽधिकम् । छेदनं ताडनं चैव बन्धनं मोचनं तथा ॥३५॥
ग्रहणं सर्वभूतानां संसारवशवर्तिनाम् । प्रसादश्चापि सर्वेषां मृत्युकालजयस्तथा ॥३६॥
आभिमानिकमैश्वर्यं प्राजापत्यं प्रचक्षते । एतच्चान्द्रमसैर्भोगैः षट्पञ्चाशद्गुणं महत् ॥३७॥
सर्गः संकल्पमात्रेण त्राणं संहरणं तथा । स्वाधिकारश्च सर्वेषां भूतचित्तप्रवर्तनम् ॥३८॥
असादृश्यं च सर्वस्य निर्माणं जगतः पृथक् । शुभाशुभस्य करणं प्राजापत्यैश्च संयुतम् ॥३९॥
चतुष्षष्टिगुणं ब्राह्ममैश्वर्यं च प्रचक्षते । बौद्धादस्मात्परं गौणमैश्वर्यं प्राकृतं विदुः ॥४०॥
वैष्णवं तत्समाख्यातं तस्यैव भुवनस्थितिः । ब्रह्मणा तत्पदं सर्वं वक्तुमन्यैर्न शक्यते ॥४१॥
तत्पौरुषं च गौणं च गणेशं पदमैश्वरम् । विष्णुना तत्पदं किञ्चिज्ज्ञातुमन्यैर्न शक्यते ॥४२॥
विज्ञानसिद्धयश्चैव सर्वा एवौपसर्गिकाः। निरोद्धव्या प्रयत्नेन वैराग्येण परेण तु ॥४३॥
प्रतिभासेष्वशुद्धेषु गुणेष्वासक्तचेतसः । न सिध्येत्परमैश्वर्यमभयं सार्वकामिकम् ॥४४॥
तस्माद्गुणांश्च भोगांश्च देवासुरमहीभृताम् । तृणवद्यस्त्यजेत्तस्य योगसिद्धिः परा भवेत् ॥४५॥
अथवानुग्रहेच्छायां जगतो विचरेन्मुनिः । यथाकामङ्गुणान्भोगान्भुक्त्वा मुक्तिं प्रयास्यति ॥४६॥
अथ प्रयोगं योगस्य वक्ष्ये शृणु समाहितः । शुभे काले शुभे देशे शिवक्षेत्रादिके पुनः ॥४७॥
विजने जन्तुरहिते निःशब्दे बाधवर्जिते । सुप्रलिप्ते स्थले सौम्ये गन्धधूपादिवासिते ॥४८॥
मुक्तपुष्पसमाकीर्णे वितानादि विचित्रिते । कुशपुष्पसमित्तोयफलमूलसमन्विते ॥४९॥
नाग्न्यभ्याशे जलाभ्याशे शुष्कपर्णचयेऽपि वा । न दंशमशकाकीर्णे सर्पश्वापदसंकुले ॥५०॥
न च दुष्टमृगाकीर्णे न भये दुर्जनावृते । श्मशाने चैत्यवल्मीके जीर्णागारे चतुष्पथे ॥५१॥
नदीनदसमुद्राणां तीरे रथ्यान्तरेऽपि वा । न जीर्णोद्यानगोष्ठादौ नानिष्टे न च निन्दिते ॥५२॥
नाजीर्णाम्लरसोद्गारे न च विण्मूत्रदूषिते । नच्छर्द्यामातिसारे वा नातिभुक्तौ श्रमान्विते ॥५३॥
न चातिचिन्ताकुलितो न चातिक्षुत्पिपासितः । नापि स्वगुरुकर्मादौ प्रसक्तो योगमाचरेत् ॥५४॥
युक्ताहारविहारश्च युक्तचेष्टश्च कर्मसु । युक्तनिद्राप्रबोधश्च सर्वायासविवर्जितः ॥५५॥
आसनं मृदुलं रम्यं विपुलं सुसमं शुचि । पद्मकस्वस्तिकादीनामभ्यसेदासनेषु च ॥५६॥
अभिवंद्य स्वगुर्वंतानभिवाद्याननुक्रमात् । ऋजुग्रीवशिरोवक्षा नातिष्ठेच्छिष्टलोचनः ॥५७॥
किञ्चिदुन्नामितशिरा दंतैर्दंतान्न संस्पृशेत् । दंताग्रसंस्थिता जिह्वामचलां सन्निवेश्य च ॥५८॥

पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः । ऊर्वोरुपरि संस्थाप्य बाहू तिर्यगयत्नतः ॥५९॥
दक्षिणं करपृष्ठं तु न्यस्य वामतलोपरि । उन्नाम्य शनकैः पृष्ठमुरो विष्टभ्य चाग्रतः ॥६०॥
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् । संभृतप्राणसञ्चारः पाषाण इव निश्चलः ॥६१॥
स्वदेहायतनस्यान्तर्विचिन्तय शिवमंबया । हृत्पद्मपीठिकामध्ये ध्यानयज्ञेन पूजयेत् ॥६२॥
मूले नासाग्रतो नाभौ कण्ठे वा तालुरन्ध्रयोः । भ्रूमध्ये द्वारदेशे वा ललाटे मूर्ध्नि वा स्मरेत् ॥६३॥
परिकल्प्य यथान्यायं शिवयोः परमासनम् । तत्र सावरणं वापि निरावरणमेव वा ॥६४॥
द्विदलेषोडशारे वा द्वादशारे यथाविधि । दशारे वा षडस्रे वा चतुरस्रे शिवं स्मरेत् ॥६५॥
भ्रुवोरन्तरतः पद्मं द्विदलं तडिदुज्ज्वलम् । भ्रूमध्यस्थारविन्दस्य क्रमाद्वै दक्षिणोत्तरे ॥६६॥
विद्युत्समानवर्णे च पर्णे वर्णावसानके । षोडशारस्य पत्राणि स्वराः षोडश तानि वै ॥६७॥
पूर्वादीनि क्रमादेतत्पद्मं कन्दस्य मूलतः । ककारादिटकारान्ता वर्णाः पर्णान्यनुक्रमात् ॥६८॥
भानुवर्णस्य पद्मस्य ध्येयं तद् हृदयान्तरे । गोक्षीरधवलस्योक्ता डादिफान्ता यथाक्रमम् ॥६९॥
अधो दलस्याम्बुजस्य एतस्य च दलानि षट् । विधूमाङ्गारवर्णस्य वर्णा वाद्याश्च लान्तिमाः ॥७०॥
मूलाधारारविंदस्य हेमाभस्य यथाक्रमम् । वकारादिसकारान्ता वर्णाः पर्णमयाः स्थिताः ॥७१॥
एतेष्वथारविंदेषु यत्रैवाभिरतं मनः । तत्रैव देवं देवीं च चिन्तयेद्धीरया धिया ॥७२॥
अङ्गुष्ठमात्रममलं दीप्यमानं समंततः । शुद्धदीपशिखाकारं स्वशक्त्या पूर्णमण्डितम् ॥७३॥
इन्दुरेखासमाकारं तारारूपमथापि वा । नीवारशूकस्सदृशं बिससुत्राभमेव वा ॥७४॥
कदम्बगोलकाकारं तुषारकणिकोपमम् । क्षित्यादितत्त्वविजयं ध्याता यद्यपि वाञ्छति ॥७५॥
तत्तत्तत्त्वाधिपामेव मूर्तिं स्थूलां विचिन्तयेत् । सदा शिवान्ता ब्रह्माद्यभवाद्याश्चाष्टमूर्तयः ॥७६॥
शिवस्य मूर्तयः स्थूलाः शिवशास्त्रे विनिश्चिताः । घोरा मिश्रा प्रशान्ताश्च मूर्तयस्ता मुनीश्वरैः ॥७७॥
फलाभिलाषरहितैश्चिन्त्याश्चिन्ताविशारदैः । घोराश्चेचिंतिताः कुर्युः पापरोगपरिक्षयम् ॥७८॥
चिरेण मिश्रे सौम्ये तु न सद्यो न चिरादपि । सौम्ये मुक्तिर्विशेषेण शान्तिः प्रज्ञा प्रसिध्यति ॥
सिध्यन्ति सिद्धयश्चात्र क्रमशो नात्र संशयः ॥७९॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे योगगतौ विघ्नोत्पत्तिवर्णनं नामाष्टत्रिंशोऽध्यायः ॥३८॥

आदितः श्लोकानां समष्टयङ्काः-२४,०३२+७९=२४,१११



## ॥ अथैकोनचत्वारिंशोऽध्यायः ॥

उपमन्युरुवाच ॥

श्रीकण्ठनाथं स्मरतां सद्यः सर्वार्थसिद्धयः । प्रसिध्यन्तीति मत्वैके तं वै ध्यायन्ति योगिनः ॥१॥
स्थित्यर्थं मनसः केचित्स्थूलध्यानं प्रकुर्वते । स्थूलं तु निश्चलं चेतो भवेत्सूक्ष्मे तु तत्स्थिरम् ॥२॥
शिवे तु चिंतिते साक्षात्सर्वाः सिध्यन्ति सिद्धयः । मूर्त्यन्तरेषु ध्यातेषु शिवरूपं विचिन्तयेत् ॥३॥
लक्षयेन्मनसः स्थैर्यं तत्तद्ध्यायेत्पुनः पुनः । ध्यानमादौ सविषयं ततो निर्विषयं जगुः ॥४॥
तत्र निर्विषयं ध्यानं नास्तीत्येव सतां मतम् । बुद्धेर्हि सन्ततिः काचिद्ध्यानमित्यभिधीयते ॥५॥
तेन निर्विषया बुद्धिः केवलेह प्रवर्तते । तस्मात्सविषयं ध्यानं बालार्ककिरणाश्रयम् ॥६॥
सूक्ष्माश्रयं निर्विषयं नापरं परमार्थतः । यद्वा सविषयं ध्यानं तत्साकारसमाश्रयम् ॥७॥
निराकारात्मसंवित्तिर्ध्यानं निर्विषयं मतम् । निर्बीजं च सबीजं च तदेव ध्यानमुच्यते ॥८॥
निराकारश्रयत्वेन साकाराश्रयतस्तथा । तस्मात्सविषयं ध्यानमादौ कृत्वा सबीजकम् ॥९॥
अंते निर्विषयं कुर्यान्निर्बीजं सर्वसिद्धये । प्राणायामेन सिध्यन्ति देव्याः शान्त्यादयः क्रमात् ॥१०॥
शान्तिः प्रशान्तिर्दीप्तिश्च प्रसादश्च ततः परम् । शमः सर्वापदां चैव शान्तिरित्यभिधीयते ॥११॥
तमसोऽन्तबहिर्नाशः प्रशान्तिः परिगीयते । बहिरन्तःप्रकाशो यो दीप्तिरित्यभिधीयते ॥१२॥

स्वस्थता या तु सा बुद्धः प्रसादः परिकीर्तितः । कारणानि च सर्वाणि सबाह्याभ्यन्तराणि च ॥१३॥
बुद्धेः प्रसादतः क्षिप्रं प्रसन्नानि भवन्त्युत । ध्याता ध्यानं तथा ध्येयं यद्वा ध्यानप्रयोजनम् ॥१४॥
एतच्चतुष्टयं ज्ञात्वा ध्याता ध्यानं समाचरेत् । ज्ञानवैराग्यसंपन्नो नित्यमव्यग्रमानसः ॥१५॥
श्रद्दधानः प्रसन्नात्मा ध्याता सद्भिरुदाहृतः । ध्यै चिन्तायां स्मृतो धातुः शिवचिन्ता मुहुर्मुहुः ॥१६॥
योगाभ्यासस्तथाल्पेऽपि यथा पापं विनाशयेत् । ध्यायतः क्षणमात्रं वा श्रद्धया परमेश्वरम् ॥१७॥
अव्याक्षिप्तेन मनसा ध्यानमित्यभिधीयते । बुद्धिप्रवाहरूपस्य ध्यानस्यास्यावलंबनम् ॥१८॥
ध्येयमित्युच्यते सद्भिस्तच्च सांबः स्वयं शिवः । विमुक्तिप्रत्ययं पूर्णमैश्वर्यं चाणिमादिकम् ॥१९॥
शिवध्यानस्य पूर्णस्य साक्षादुक्तं प्रयोजनम् । यस्मात्सौख्यं च मोक्षं च ध्यानादभयमाप्नुयात् ॥२०॥
तस्मात्सर्वं परित्यज्य ध्यानयुक्तो भवेन्नरः । नास्ति ध्यानं विना ज्ञानं नास्ति ध्यानमयोगिनः ॥२१॥
ध्यानं ज्ञानं च यस्यास्ति तीर्णस्तेन भवार्णवः । ज्ञानं प्रसन्नमेकाग्रमशेषोपाधिवर्जितम् ॥२२॥
योगाभ्यासेन युक्तस्य योगिनस्त्वेव सिध्यति । प्रक्षीणाशेषपापानां ज्ञाने ध्याने भवेन्मतिः ॥२३॥
पापोपहतबुद्धीनां तद्वार्तापि सुदुर्लभा । यथावह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत् ॥२४॥
तथा शुभाशुभं कर्म ध्यानाग्निर्दहते क्षणात् । अत्यल्पोऽपि यथा दीपः सुमहन्नाशयेत्तमः ॥२५॥
योगाभ्यासस्तथाल्पोऽपि महापापं विनाशयेत् । ध्यायतः क्षणमात्रं वा श्रद्धया परमेश्वरम् ॥२६॥
यद्भवेत्सुमहच्छ्रेयस्तस्यान्तो नैव विद्यते । नास्ति ध्यानसमं तीर्थं नास्ति ध्यानसमं तपः ॥२७॥
नास्ति ध्यानसमो यज्ञस्तस्माद्ध्यानं समाचरेत् । तीर्थानि तोयपूर्णानि देवान्पाषाणमृन्मयान् ॥२८॥
योगिनो न प्रपद्यंते स्वात्मप्रत्ययकारणात् । योगिनां च वपुः सूक्ष्मं भवेत्प्रत्यक्षमैश्वरम् ॥२९॥
यथा स्थूलमयुक्तानां मृत्काष्ठाद्यैः प्रकल्पितम् । यथेहान्तश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः ॥३०॥
तथान्तर्ध्याननिरताः प्रियाश्शम्भोर्न कर्मिणः । बहिस्करा यथा लोके नातीव फलभोगिनः ॥३१॥
दृष्ट्वा नरेन्द्रभवने तद्वदत्रापि कर्मिणः । यद्यंतरा विपद्यंते ज्ञानयोगार्थमुद्यतः ॥३२॥
योगस्योद्योगमात्रेण रुद्रलोकं गमिष्यति । अनुभूय सुखं तत्र स जातो योगिनां कुले ॥३३॥
ज्ञानयोगं पुनर्लब्ध्वा संसारमतिवर्तते । जिज्ञासुरपि योगस्य यां गतिं लभते नरः ॥३४॥
न तां गतिमवाप्नोति सर्वैरपि महामखैः । द्विजानां वेदविदुषां कोटिं संपूज्य यत्फलम् ॥३५॥
भिक्षामात्रप्रदानेन तत्फलं शिवयोगिने । यज्ञाग्निहोत्रदानेन तीर्थहोमेषु यत्फलम् ॥३६॥
योगिनामन्नदानेन तत्समस्तं फलं लभेत् । ये चापवादं कुर्वन्ति विमूढाश्शिवयोगिनाम् ॥३७॥
श्रोतृभिस्ते प्रपद्यन्ते नरकेष्वामहीक्षयात् । सति श्रोतरि वक्तास्यादपवादस्य योगिनाम् ॥३८॥
तस्माच्छ्रोता च पापीयान्दण्डद्यस्सुमहतां मतः । ये पुनः सततं भक्त्या भजंति शिवयोगिनः ॥३९॥
ते विदंति महाभोगानन्ते योगं च शाङ्करम् । भोगार्थिभिर्नरैस्तस्मात्संपूज्याः शिवयोगिनः ॥४०॥
प्रतिश्रयान्नपानाद्यैः शय्याप्रावरणादिभिः । योगधर्मः ससारत्वादभेद्यः पापमुद्गरैः ॥४१॥
वज्रतंदुलवज्ज्ञेयं तथा पापेन योगिनः । न लिप्यन्ते च तापौघैः पद्मपत्रं यथांभसा ॥४२॥
यस्मिन्देशे वसेन्नित्यं शिवयोगरतो मुनिः । सोऽपि देशो भवेत्पूतः सपूत इति किं पुनः ॥४३॥
तस्मात्सर्वं परित्यज्य कृत्यमन्यद्विचक्षणः । सर्वदुःखप्रहाणाय शिवयोगं समभ्यसेत् ॥४४॥
सिद्धयोगफलो योगी लोकानां हितकाम्यया । भोगान्भुक्त्वा यथाकामं विहरेद्वात्र वर्तताम् ॥४५॥
अथवा क्षुद्रमित्येव मत्वा वैषयिकं सुखम् । त्यक्त्वा विरागयोगेन स्वेच्छया कर्म मुच्यताम् ॥४६॥
यस्त्वासन्नां मृतिं मर्त्यो दृष्टारिष्टं च भूयसा । स योगारम्भनिरतः शिवक्षेत्रं समाश्रयेत् ॥४७॥
स तत्र निवसन्नेव यदि धीरमना नरः । प्राणान्विनापि रोगाद्यैः स्वयमेव परित्यजेत् ॥४८॥
कृत्वाप्यनशनं चैव हुत्वा चाङ्गं शिवानले । क्षिप्त्वा वा शिवतीर्थेषु स्वदेहमवगाहनात् ॥४९॥
शिवशास्त्रोक्तविधिवत्प्राणान्यस्तु परित्यजेत् । (सद्य एव विमुच्येत नात्र कार्या विचारणा ।)
रोगाद्यैर्वाथ विवशः शिवक्षेत्रं समाश्रितः ॥५०॥
म्रियते यदि सोप्येवं मुच्यते नात्र संशयः । यथा हि मरणं श्रेष्ठमुशंत्यनशनादिभिः ॥५१॥
शास्त्रविश्रंभधीरेण मनसा क्रियते यतः । शिवनिन्दारतं हत्वा पीडितः स्वयमेव वा ॥५२॥

यस्त्यजेद्दुस्त्यजान्प्राणान्न स भूयः प्रजायते । शिवनिन्दारतं हंतुमशक्तो यः स्वयं मृतः ॥५३॥
सद्य एव प्रमुच्येत त्रिः सप्तकुलसंयुतः । शिवार्थे यस्त्यजेत्प्राणाञ्छिवभक्तार्थमेव वा ॥५४॥
न तेन सदृशः कश्चिन्मुक्तिमार्गस्थितो नरः । तस्माच्छीघ्रतरा मुक्तिस्तस्य संसारमण्डलात् ॥५५॥
एतेष्वन्यतमोपायं कथमप्यवलम्ब्य वा । षडध्वशुद्धिं विधिवत्प्राप्तो वा म्रियते यदि ॥५६॥
पशूनामिव तस्येह न कुर्यादौर्ध्वदैहिकम् । नैवाशौचं प्रपद्येत तत्पुत्रादिविशेषतः ॥५७॥
शिवचारार्थमथवा शिवविद्यार्थमेव वा । खनेद्वा भुवि तद्देहं दहेद्वा शुचिनाग्निना ॥५८॥
क्षिपेद्वाप्सु शिवास्वेव त्यजेद्वा काष्ठलोष्टवत् । अथैनमपि चोद्दिश्य कर्म चेत्कर्तुमीप्सितम् ॥५९॥
कल्याणमेव कुर्वीत शक्त्या भक्तांश्च तर्पयेत् । धनं तस्य भजेच्चैवः शैवी चेतस्य सन्ततिः ॥
नास्ति चेत्तच्छिवे दद्यान्नदद्यात्पशु सन्ततिः ॥६०॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शैवयोगवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥३९॥
आदितः श्लोकानां समष्ट्यङ्काः-२४,१११+६०=२४,१७१



## ॥ अथ चत्वारिंशोऽध्यायः ॥

श्रीसूत उवाच ॥
इति स विजितमन्योर्यादवेनोपमन्योरधिगतमभिधाय ज्ञानयोगं मुनिभ्यः ।
प्रणतिमुपगतेभ्यस्तेभ्य उद्भावितात्मा सपदि वियति वायुः सायमन्तर्हितोऽभूत् ॥१॥
ततः प्रभातसमये नैमिषीयास्तपोधनाः । सत्रान्तेऽवभृथं कर्तुं सर्व एव समुद्ययुः ॥२॥
तदा ब्रह्मसमादेशाद्देवी साक्षात्सरस्वती । प्रसन्ना स्वादुसलिला प्रावर्तत नदीशुभा ॥३॥
सरस्वतीं नदीं दृष्ट्वा मुनयो हृष्टमानसाः । समाप्य सत्रं प्रारब्धं चक्रुस्तत्रावगाहनम् ॥४॥
अथ सन्तर्प्य देवादींस्तदीयैः सलिलैः शिवैः । स्मरन्तः पूर्ववृत्तान्तं ययुर्वाराणसीं प्रति ॥५॥
तदा ते हिमवत्पादात्पंततीं दक्षिणामुखीम् । दृष्ट्वा भागीरथीं तत्र स्नात्वा तत्तीरतो ययुः ॥६॥
ततो वाराणसीं प्राप्य मुदितास्सर्व एव ते । तदोत्तरप्रवाहायां गङ्गायामवगाह्य च ॥७॥
अविमुक्तेश्वरं लिङ्गं दृष्ट्वाभ्यर्च्य विधानतः । प्रयातुमुद्यतास्तत्र ददृशुर्दिवि भास्वरम् ॥८॥
सूर्यकोटिप्रतीकाशं तेजोदिव्यं महाद्भुतम् । आत्मप्रभावितानेन व्याप्तसर्वदिगन्तरम् ॥९॥
अथ पाशुपताः सिद्धाः भस्मसञ्छन्नविग्रहाः । मुनयोऽभ्येत्य शतशो लीनाः स्युस्तत्र तेजसि ॥१०॥
तथा विलीयमानेषु तपस्विषु महात्मसु । सद्यस्तिरोदधे तेजस्तदद्भुतमिवाभवत् ॥११॥
तद्दृष्ट्वा महदाश्चर्यं नैमिषीया महर्षयः । किमेतदित्यजानन्तो ययुर्ब्रह्मवनं प्रति ॥१२॥
प्रागेवैषां तु गमनात्पवनो लोकपावनः । दर्शनं नैमिषीयाणां संवादस्तैर्महात्मनः ॥१३॥
शद्धां बुद्धिं ततस्तेषां सांबे सानुचरे शिवे । समाप्तिं चापि सत्रस्य दीर्घपूर्वस्य सत्रिणाम् ॥१४॥
विज्ञाप्य जगतां धात्रे ब्रह्मणे ब्रह्मयोनये । स्वकार्ये तदनुज्ञातो जगाम स्वपुरं प्रति ॥१५॥
अथ स्थानगतो ब्रह्मा तुम्बुरोर्नारदस्य च । परस्पर स्पर्धितयोर्गाने विवदमानयोः ॥१६॥
तदुद्भावितगानोत्थरसैर्माध्यस्थमाचरन् । गन्धर्वैरप्सरोभिश्च सुखमास्ते निषेवितः ॥१७॥
तदानवसरादेव द्वाःस्थैर्द्वारि निवारिताः । मुनयो ब्रह्मभवनाद्बहिः पार्श्वमुपाविशन् ॥१८॥
अथ तुम्बुरुणा गाने समतां प्राप्य नारदः । साहचर्येष्वनुज्ञातो ब्रह्मणा परमेष्ठिना ॥१९॥
त्यक्त्वा परस्परस्पर्धां मैत्रीं च परमां गतः । सह तेनाप्सरोभिश्च गन्धर्वैश्च समावृतः ॥२०॥
उपवीणयितुं देवं नकुलीश्वरमीश्वरम् । भवनान्निर्ययौ धातुर्जलदादंशुमानिव ॥२१॥
तं दृष्ट्वा षट्कुलीयास्ते नारदं मुनिगोवृषम् । प्रणम्यावसरं शम्भोः पप्रच्छुः परमादरात् ॥२२॥
स चावसर एवायमितोंतर्गम्यतामिति । वदन्ययावन्यपरस्त्वरया परया युतः ॥२३॥
ततो द्वारि स्थिता ये वै ब्रह्मणे तान्न्यवेदयन् । तेन ते विविशुर्वेश्म पिंडीभूयांडजन्मनः ॥२४॥
प्रविश्य दूरतो देवं प्रणम्य भुवि दण्डवत् । समीपे तदनुज्ञाताः परिवृत्योपतस्थिरे ॥२५॥

तांस्तत्रावस्थितान् पृष्ट्वा कुशलं कमलासनः । वृत्तान्तं वो मया ज्ञातं वायुरेवाह नो यतः ॥२६॥
भवद्भिः किं कृतं पश्चान्मारुतेंतर्हिते सति । इत्युक्तवति देवेशे मुनयोऽवभृथात्परम् ॥२७॥
गङ्गातीर्थेस्य गमनं यात्रां वाराणसीं प्रति । दर्शनं तत्र लिङ्गानां स्थापितानां सुरेश्वरैः ॥२८॥
अविमुक्तेश्वरस्यापि लिङ्गस्याभ्यर्चनं सकृत् । आकाशे महतस्तस्य तेजोराशेश्च दर्शनम् ॥२९॥
मुनीनां विलयं तत्र निरोधं तेजसस्ततः । याथात्म्यवेदनं तस्य चिंतितस्यापि चात्मभिः ॥३०॥
सर्वं सविस्तरं तस्मै प्रणम्याहुर्मुहुर्मुहुः । मुनिभिः कथितं श्रुत्वा विश्वकर्मा चतुर्मुखः ॥३१॥
कंपयित्वा शिरः किंचित्प्राह गंभीरया गिरा । प्रत्यासीददति युष्माकं सिद्धिरामुष्मिकी परा ॥३२॥
भवद्भिर्दीर्घसत्रेण चिरमाराधितः प्रभुः । प्रसादाभिमुखो भूत इति भुतार्थसूचितम् ॥३३॥
वाराणस्यां तु युष्माभिर्यद्दृष्टं दिवि दीप्तिमत् । तल्लिंगसंज्ञितं साक्षात्तेजो माहेश्वरं परम् ॥३४॥
तत्र लीनाश्च मुनयः श्रौतपाशुपतव्रताः । मुक्ता बभूवुः स्वस्थाश्च नैष्ठिका दग्धकिल्बिषाः ॥३५॥
प्राप्यानेन यथा मुक्तिरचिराद्भवतामपि । स चायमर्थः सूच्येत युष्मद्दृष्टेन तेजसा ॥३६॥
तत्र वः काल एवैष दैवादुपनतः स्वयम् । प्रयात दक्षिणं मेरोः शिखरं देवसेवितम् ॥३७॥
सनत्कुमारो यत्रास्ते मम पुत्रः परो मुनिः । प्रतीक्ष्यागमनं साक्षाद्भूतनाथस्य नन्दिनः ॥३८॥
पुरा सनत्कुमारोपि दृष्ट्वापि परमेश्वरम् । अज्ञानात्सर्वयोगीन्द्रमानी विनयदूषितः ॥३९॥
अभ्युत्थानादिकं युक्तमकुर्वन्नतिनिर्भयः । ततोऽपराधात्क्रुद्धेन महोष्ट्रो नन्दिना कृतः ॥४०॥
अथ कालेन महता तदर्थे शोचता मया । उपास्य देवं देवीश्च नन्दिनं चानुनीय वै ॥४१॥
कथंचिदुष्ट्रता तस्य प्रयत्नेन निवारिता । प्रापितो हि यथापूर्वं सनत्पूर्वां कुमारताम् ॥४२॥
तदाह च महादेवः स्मयन्निव गणाधिपम् । अवज्ञाय हि मामेव तथाहङ्कृतवान्मुनिः ॥४३॥
अतस्त्वमेव याथात्म्यं ममास्मै कथयानघ । ब्रह्मणः पूर्वजः पुत्रो मां मूढ इव संस्मरन् ॥४४॥
मयैव शिष्यते दत्तो मम ज्ञानप्रवर्तकः । धर्माध्यक्षाभिषेकं च तव निर्वर्तयिष्यति ॥४५॥
स एवं व्याहृतो भूयस्सर्वभूतगणाग्रणीः । यत्पराज्ञापनं मूर्ध्ना प्रातः प्रतिगृहीतवान् ॥४६॥
तथा सनत्कुमारोऽपि मेरौ मदनुशासनात् । प्रसादार्थं गणस्यास्य तपश्चरति दुश्चरम् ॥४७॥
द्रष्टव्यश्चेति युष्माभिः प्राग्गणेशसमागमात् । तत्प्रसादार्थमचिरान्नंदी तत्रागमिष्यति ॥४८॥
इति सत्वरमादिश्य प्रेषिता विश्वयोगिना । कुमारशिखरं मेरोर्दक्षिणं मुनयो ययुः ॥४९॥
इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नैमिषर्षियात्रावर्णनं नाम चत्वारिंशोऽध्यायः ॥४०॥

आदितः श्लोकानां समष्टचङ्काः-२४,१७१+४९=२४,२२०



## ॥ अथैकचत्वारिंशोऽध्यायः ॥

सूत उवाच ॥

तत्र स्कंदसरो नाम सरस्सागरसन्निभम् । अमृतस्वादुशिशिरस्वच्छा गाधलघूदकम् ॥१॥
समंततः संघटितं स्फटिको पलसञ्चयैः । सर्वर्तुकुसुमैः फुल्लैश्छादिताखिलदिङ्मुखम् ॥२॥
शैवलैरुत्पलैः पद्मैः कुमुदैस्तारकोपमैः । तरङ्गैरभ्रसंकाशैराकाशमिव भूमिगम् ॥३॥
सुखावतरणारोहैः स्थलैर्नीलशिलामयैः । सोपानमार्गौ रुचिरैश्शोभमानाष्टदिङ्मुखम् ॥४॥
तत्रावतीर्णैश्च यथा तत्रोत्तीर्णश्च भूयसा । स्नातैः सितोपवीतैश्च शुक्लाकौपीनवल्कलैः ॥५॥
जटाशिखायनैमुण्डैस्त्रिपुण्ड्रकृतमण्डनैः । विरागविवशस्मेरमुखैर्मुनिकुमारकैः ॥६॥
घटैः कमलिनीपत्रपुटैश्च कलशैः शिवैः । कमण्डलुभिरन्यैश्च तादृशैः करकादिभिः ॥७॥
आत्मार्थं च परार्थं च देवतार्थं विशेषतः । आनीयमानसलिलमात्तपुष्पं च नित्यशः ॥८॥
अंतर्जलशिलारूढैर्नीचानां स्पर्शशंकया । आचारवद्भिर्मुनिभिः कृतभस्माङ्गधूसरैः ॥९॥
इतस्ततोऽप्सु मज्जद्भिरिष्टशिष्टैः शिलागतैः । तिलैश्च साक्षतैः पुष्पैस्त्यक्तदर्भपवित्रकैः ॥१०॥

देवाद्यमृषिमध्यं च निर्वर्त्य पितृतर्पणम् । निवेदयेदभिज्ञेभ्यो नित्यस्नानगतान् द्विजान् ॥११॥
स्थानेस्थाने कृतानेकबलिपुष्पसमीरणैः । सौराघ्र्यपूर्वं कुर्वद्भिःस्थंडलेभ्यर्चनादिकम्॥१२॥
क्वचिन्निमज्जदुन्मज्जत्प्रस्रस्तगजयूथपम् । क्वचिच्च तृषयायातमृगीमृगतुरङ्गमम्॥१३॥
क्वचित्पीतजनोत्तीर्णमयूरवरवारणम् । क्वचित्कृततटाघातवृषप्रतिवृषोज्ज्वलम्॥१४॥
क्वचित्कारंडवरवैः क्वचित्सारसकूजितैः । क्वचिच्च कोकनिनदैः क्वचिद्भ्रमरगीतिभिः ॥१५॥
स्नानपानादिकरणैः स्वसंपद्दुमजीविभिः । प्रणयात्प्राणिभिस्तैस्तैर्भाषमाणमिवासकृत्॥१६॥
कूलशाखिशिखालीनकोकिलाकुलकूजितैः । आतपोपहतान्सर्वान्नामन्त्र्यदिवानिशम्॥१७॥
उत्तरे तस्य सरसस्तीरे कल्पतरोरधः । वेद्यां वज्रशिलामय्यां मृदुले मृगचर्मणि ॥१८॥
सनत्कुमारमासीनं शश्वद्बालवपुर्धरम् । तत्कालमात्रोपरतं समाधेरचलात्मनः ॥१९॥
उपास्यमानं मुनिभिर्योगीन्द्रैरपि पूजितम् । ददृशुर्नैमिषेयास्ते प्रणताश्चोपतस्थिरे ॥२०॥
यावत्पृष्टवते तस्मै प्रोचुः स्वागतकारणम् । तुमुलः शुश्रुवे तावद्दिवि दुंदुभिनिस्वनः ॥२१॥
ददृशे तत्क्षणे तस्मिन्विमानं भानुसन्निभम् । गणेश्वरैरसंख्येयैः संवृतं च समंततः ॥२२॥
अप्सरोगणसंकीर्णं रुद्रकन्याभिरावृतम् । मृदंगमुरजोच्चुष्टं वेणुवीणारवान्वितम्॥२३॥
चित्ररत्नवितानाढ्यं मुक्तादामविराजितम् । मुनिभिस्सिद्धगन्धर्वैर्यक्षाचारणकिन्नरैः ॥२४॥
नृत्यद्भिश्चैव गायद्भिर्वादयद्भिश्च संवृतम् । वीरगोवृषचिह्नेन विद्रुमद्रुमयष्टिना ॥२५॥
कृतगोपुरसत्कारं केतुना मान्यहेतुना । तस्य मध्ये विमानस्य चामरद्वितयान्तरे ॥२६॥
छत्रस्य मणिदण्डस्य चंद्रस्येव शुचेरधः । दिव्यसिंहासनारूढं देव्या सुयशया सह ॥२७॥
श्रिया च वपुषा चैव त्रिभिश्चापि विलोचनैः । प्राकारैरभिकृत्यानां प्रत्यभिज्ञापकं प्रभोः ॥२८॥
अविलंघ्य जगत्कर्तुराज्ञापनमिवागतम् । सर्वानुग्रहणं शम्भोः साक्षादिव पुरःस्थितम् ॥२९॥
शिलादतनयं साक्षाच्छीमच्छूलवरायुधम् । विश्वेश्वरगणाध्यक्षं विश्वेश्वरमिवापरम् ॥३०॥
विश्वस्यापि विधातृणां निग्रहानुग्रहक्षमम् । चतुर्बाहुमुदाराङ्गं चन्द्ररेखाविभूषितम्॥३१॥
कण्ठे नागेन मौलौ च शशाङ्केनाप्यलंकृतम् । सविग्रहमिवैश्वर्यं सामर्थ्यमिव सक्रियम् ॥३२॥
समाप्तमिव निर्वाणं सर्वज्ञमिव संगतम् । दृष्ट्वा प्रहृष्टवदनो ब्रह्मपुत्रः सहर्षिभिः ॥३३॥
तस्थौ प्राञ्जलिरुत्थाय तस्यात्मानमिवार्पयन् । अथ तत्रान्तरे तस्मिन्विमाने चावनिं गते ॥३४॥
प्रणम्य दण्डवद्देवं स्तुत्वा व्यज्ञापयन्मुनीम् । षट्कुलीया इमे दीर्घं नैमिषे सत्रमास्थिताः ॥
आगता ब्रह्मणादिष्टाः पूर्वमेवाभिकांक्षया ॥३५॥
श्रुत्वा वाक्यं ब्रह्मपुत्रस्य नंदीछित्त्वा पाशान्दृष्टिपातेन सद्यः । शैवं धर्मं चैश्वरं ज्ञानयोगं दत्त्वा भूयो देवपार्श्वं जगाम ॥३६॥
सनत्कुमारेण च तत्समस्तं व्यासाय साक्षाद्गुरवे ममोक्तम् । व्यासेन चोक्तं महितेन मह्यं मया च तद्वः कथितं समासात्॥३७॥
नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरशासनस्य । नाभक्तशिष्याय च नास्तिकेभ्यो दत्तं हि मोहान्निरयं ददाति ॥३८॥
मार्गेण सेवानुगतेन यैस्तद्दत्तं गृहीतं पठितं श्रुतं वा । तेभ्यः सुखं धर्ममुखं त्रिवर्गं निर्वाणमंते नियतं ददाति ॥३९॥
परस्परस्योपकृतं भवद्भिर्मया च पौराणिकमार्गयोगात् । अतो गमिष्येऽहमवाप्तकामः समस्तमेवास्तु शिवं सदा नः ॥४०॥
सूते कृताशिषि गते मुनयः सुवृत्ता यागे च पर्यवसिते महति प्रयोगे ।
काले कलौ च विषयैः कलुषायमाणे वाराणसीपरिसरे वसतिं विनेतुः ॥४१॥
अथ च ते पशुपाशमुमुक्षयाखिलतया कृतपाशुपतव्रताः । अधिकृताखिलबोधसमाधयः परमनिर्वृतिमापुरनिन्दिताः ॥४२॥
व्यास उवाच ॥
एतच्छिवपुराणं हि समाप्तं हितमादरात् । पठितव्यं प्रयत्नेन श्रोतव्यं च तथैव हि ॥४३॥

**नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च । अभक्ताय महेशस्य तथा धर्मध्वजाय च ॥४४॥**
**एतच्छ्रुत्या ह्येकवारं भवेत्पापं हि भस्मसात् । अभक्तो भक्तिमाप्नोति भक्तो भक्तिसमृद्धिभाक् ॥४५॥**
**पुनः श्रुते च सद्भक्तिर्मुक्तिस्स्याच्च श्रुतेः पुनः । तस्मात्पुनःपुनश्चैव श्रोतव्यं हि मुमुक्षुभिः ॥४६॥**
**पञ्चावृत्तिः प्रकर्तव्या पुराणस्यास्य सद्धिया । परं फलं समुद्दिश्य तत्प्राप्नोति न संशयः ॥४७॥**
**पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः । सप्तकृत्वस्तदावृत्त्यालभन्त शिवदर्शनम् ॥४८॥**
**श्रोष्यत्यथापि यश्चेदं मानवो भक्तितत्परः । इह भुक्त्वाखिलान्भोगानन्ते मुक्तिं लभेच्च सः ॥४९॥**
**एतच्छिवपुराणं हि शिवस्यातिप्रियं परम् । भुक्तिमुक्तिप्रदं ब्रह्मसंमितं भक्तिवर्धनम् ॥५०॥**
**एतच्छिवपुराणस्य वक्तुः श्रोतुश्च सर्वदा । सगणस्ससुतस्सांबश्शंकरोतु स शंकरः ॥५१॥**
**इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे व्यासोपदेश श्रीशिवमहापुराणमाहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः ॥४१॥**
**आदितः श्लोकानां समष्टयङ्काः-२४,२२०+५१=२४,२७१**



**॥ समाप्तोऽयं सप्तम्या वायवीयसंहितायाः उत्तरखण्डः ॥**
**॥ समाप्तोऽयं सप्तम्या वायवीयसंहिताः ॥**
**॥ अध्यायानामादितः समष्टयङ्काः-३६५+४१=४०६ ॥**
**॥ श्रीसांबसदाशिवार्पणमस्तु ॥**
**॥ ॐ नमः शिवाय ॥**



**॥ समाप्तोऽयं ग्रन्थः ॥**

